# अथ द्वितीयः पादः ।

स्वरुस्त्वनेकनिष्पत्तिः स्वकर्मशब्दत्वात् ॥ १ ॥

यूपस्य स्वरुं करोतीत्यत्र करोतिरभूतप्रादुर्भाववचनः । तस्य किं कर्मेत्याकाङ्क्षायां स्वरुमिति । तस्मात्स्वरुर्भाव्यमानः । तस्य च करणेतिकर्त्तव्यताकांक्षायां यूपशब्दो जोषणादिकामितिकर्त्तव्यतां लक्षयति खदिरादि च काष्ठं करणम् । सा च यूपं तक्षतीतिकर्तव्यता ऽस्याऽपि वाक्येन । यदि च यूपशब्द इतिकर्त्तव्यतां न लक्षयेदनर्थकमेवास्योच्चारणं भवेत् । यत्स्वरुं करोति तद्यूपादिति चेत् । तन्न । एवं वाक्यार्थः स्यात् । स्वरुं भावयेदिति तु श्रुत्यर्थः । करोतिभावयत्यादीनां सामान्यधातूनां यद् द्वितीयान्तं तद्धातुस्थानीयं भवति द्रव्यं क्रिया वा । तस्माच्च कर्त्तव्यतां प्रतिपद्यते । तेन चोत्पन्नः स्वरुणा पशुमनक्तीत्यनेन विनियुज्यते । तस्मात्प्रयोजक इतिकर्त्तव्यतायाः । यद्यपि यूपेन सहैकवाक्यतेतिकर्त्तव्यतायास्तथा ऽपि स्वरोः साकाङ्क्षत्वात्तदीयेतिकर्त्तव्यताया निराकाङ्क्षता । सन्निधानाविशेषात् । या ऽपि वाक्यसंयुक्ता सा ऽपि शक्या ऽनुषङ्क्तुम् । स्वरुशब्दानर्थक्यभयात् । एवं चेतत्राऽपि यूपशब्दे भवतीतिकर्त्तव्यतासम्बन्धः ।

जात्यन्तराच्च शङ्कते ॥ २ ॥

नान्यस्य वृक्षस्य स्वरुं कुर्यादित्यनुनिष्पन्नपक्षे वृक्षान्तराशङ्का ऽपि नास्ति नतरां जात्यन्तराशङ्का । प्रयोजकवादिनस्तु भवति जात्यन्तराशङ्का । तत्र सजातीयो विधीयते ।

तदेकदेशो वा स्वरुत्वस्य तन्निमित्तत्वात् ॥ ३ ॥

स्वरुणा पशुमनक्तीत्युच्चरिते ऽञ्जनसमर्थं द्रव्यं प्रतीयते । तत्कुत उपादातव्यमित्याकाङ्क्षिते यूपादिति निराकाङ्क्षीक्रियते । यूपस्येत्यवयवलक्षणा षष्ठी । विद्यमाने चावयविन्यवयवा भवन्ति । तस्माच्छेदनादीनामप्रयोजकः स्वरुः । अलौकिकत्वाद्द्रष्टव्य इति चेत् । नैवाऽयमलौकिकः । रथन्तरादितुल्यः । यद्यप्यत्र प्रातिपदिकमात्रान्न ज्ञायते, तथा ऽपि पूर्वपदोत्तरपदवाक्यान्तरैः शक्यो ऽवधारयितुम् । यथा लोके । अवधृते चाऽञ्जनकार्ये ऽर्थादुत्पत्तिर्भविष्यति । सो ऽयं स्वरुं करोतीत्यनूद्यते । स्वरुं करोतीत्युपश्लेषलक्षणया श्रुत्या स्वरोः कर्त्तव्यतेति ।

उच्यते । त्वत्पक्षे सुतरां श्रुतिबाधः । शब्दधर्म्यर्थः । शब्दो ऽपि क्रमस्य धर्मी, शब्दधर्ममनुजिघृक्षता तस्य धर्मी बाध्यते । स एषो ऽङ्गाङ्गेन प्रधानबाधः । तस्माद्यूपशब्दस्य लक्षणाभयादियं वचनव्यक्तिः यत्स्वरुं करोति तद्यूपस्येति । अनेनाभिप्रायेणाह । 'श्रुतिरपि बाध्यते वाक्यमपी'ति ।

शाखायां तत्प्रधानत्वात् ॥ ७ ॥

प्राची नावद्दिगाहर्तुमशक्या ऽशक्यत्वात्प्राचीदिशं प्रत्याहरतीति । तथा ऽपि वाक्ये आह्रियमाणस्याऽश्रवणात्साकाङ्क्षं वाक्यम् । प्रतिशब्दश्चाश्रुतो ऽध्याहर्त्तव्यः । अथोच्यत, प्राग्देश

आहरतीति द्वितीयास्थाने सप्तमी, एवमश्रुतो देशो ऽनीप्सितश्च। आहर्त्तव्यस्य चानीप्सितत्वात्साकाङ्क्षत्वम् । तस्मादियमपि कल्पना दुःश्लिष्टा ।

किं च प्राक्शब्दो ऽयं सम्बन्धिशब्दत्वादवधिमपेक्षते, कस्य प्राचीमिति । न चावधिर्निर्दिश्यते । तस्मात्प्राचीमित्यनेन यदीप्सितं तदुच्यते । तच्चाहरतेः कर्मपूर्वप्रकृतां शाखां शक्नोति वदितुम् । तस्मात्प्राचीशाखामाहरतीति कस्य वृक्षस्येत्यवधिमात्रमपेक्षणीयं न किञ्चिदन्यत् । तस्माच्छाखावादः । प्रकृतां वा शाखां लक्षयेद्दिशो वानीऽप्सितत्वाद्विहारदेशमीप्सितमयुक्तम् । दिशो ऽनीप्सितत्वादित्ययं हेतुः । यस्माद्दिगनीप्सिता तस्माद्विहारदेशं वा लक्षयेच्छाखाम् ।

शाखायां तत्प्रधानत्वादुपवेषेण विभागः स्याद्वैषम्यात् ॥ ८ ॥

उभयमपि प्रयोजकम् । कथं ? मूलतः शाखां परिवास्योपवेषं करोतीति परिवासयतेः प्रधानभूताशाखा द्वितीयासंयोगात् । अतो मूलाधिकरणं छेदनं शाखार्थम् । उपवेषमिति या द्वितीया, सा करोतेः न परिवासयतेः । तस्मान्नोपवेषार्थं छेदनम् ।

आह । उपवेषे करोतेः कर्मतया प्रतिपाद्यमाने इतरदुपवेषं निवर्त्तयति । कथमिति च्छेदनादिकेतिकर्त्तव्यता गृह्यते । यथा स्वरुं करोतीति पूर्वपक्षे । तत्र कारणान्तरेण स्वरोर्भावनां निषिध्योपादानार्थः करोतिरित्युक्तम् । इह तन्नास्ति । तस्मादुभयं प्रयोजकम् ।

उच्यते । स्ववाक्योच्चारितेन यूपशब्देन येतिकर्त्तव्यता लक्ष्यते, सा वाक्येनैव स्वरूपसम्बन्धिनीत्येव पूर्वपक्षस्तत्र । इह

स्ववाक्ये नास्ति यूपस्थानीयं पदं, यदितिकर्त्तव्यतां लक्षयेत् । मूलतः शाखां परिवास्येति समाम्नमिदं वाक्यम् । उपवेषं करोतीत्यपि समाम्नम् । मूलाधिकरणेन च्छेदनेन शाखां निष्पाद्यान्यदपि करोतीत्येतद्गम्यते । अतो भिन्ने एते वाक्ये । मूलाधिकरणकं छेदनं वाक्येन शाखार्थम् । उपवेषस्य स्ववाक्ये च्छेदनादिकेतिकर्तव्यतायाश्च अवणात्प्रकृता स्यात् । तत्र शाखाया वाक्येनोपवेषस्य प्रकरणेन प्रकरणं च दुर्बलं वाक्यात् । अत आह । उभयसम्बन्धे विरोधः । विरोधे च वाक्यं प्रकरणाद्बलीयः । अथाऽन्येन प्रयुक्तं मूलं ग्रहीष्यते, तथा सति परकीयत्वादप्रयोजकं शाखापरिवास्यमूलादुपवेषोग्रं वत्सापाकरणार्थं एतदपि न घटते, व्यवहितकल्पनया ऽश्रुतवाक्यकरणमवैदिकम् । अतो वाक्यसामर्थ्याच्छाखार्थमेव च्छेदनम् । शाखाशब्दश्च यावदवच्छिना तावत्समूलायां वर्त्तते । छिन्ना चेदग्रे वर्त्तते मूलादपैति । तस्माच्छाखाप्रयुक्तं छेदनम् । यद्यपि मूलं शाखाशब्देनोच्यते, तथा ऽपि मूलपरिवासनेन संस्कृता शाखा कार्ययोग्या । न तन्मूलं शाखा भवति । अमूलपरिवासितत्वात् । मूले अच्छिन्नत्वादित्यर्थः । अत आह—

श्रुत्यपायाच्च ॥ ९ ॥

शाखाश्रुतिर्मूलादपैतीत्यर्थः । तस्माच्छाखार्थेषु न मूलं परिग्रहीतव्यमिति ।

हरणे तु जुहोतिर्योगसामान्याद्द्रव्याणां चार्थशेषत्वात् ॥ १० ॥

त्रिःप्रकारः सहभावः । एकस्तावदुभावपि प्रधानभूतौ ।

अपरो द्वावपि गुणभूतौ । अन्य एकः प्रधानभूत इतरो गुणभूत इति । सूक्तवाकेन प्रस्तरं प्रहरतीति सूक्तवाको न प्रस्तरं प्रकाशयति । नापि प्रहरणक्रियाम् । तृतीयानिर्देशाच्चाऽवश्यमुच्चारयितव्यो मन्त्रः प्रकाशकत्वेनोपकरोति । तस्माद्यदनेन प्रकाश्यते, तत्क्रियया सम्बध्यते । तेन चायुरादीनि फलानि प्रकाश्यन्ते इष्टाश्च देवताः । अत आयुरादीनि फलान्येतस्या अग्न्यादयश्च देवताः । न च द्रव्योद्देशमन्तरेण देवता भवन्ति । न चायुरादीनि यागमन्तरेण फलानि भवन्ति । तस्मात्प्रस्तरः प्रतिपाद्यमानो ऽपि द्रव्यतां प्रतिपद्यते । तस्माद् द्रव्यदेवतासम्बन्धेन यजिधातुरनुमीयते फलवान् । हरतिस्तुश्रुतो ऽप्यविवक्षितो निर्वपतिवत् । इह सहभावे श्रुते यत् तृतीयानिर्दिष्टं तत्साधकतमत्वेनैव सम्बध्यते । प्रमाणान्तरेण प्रधानत्वानवगमात् । यस्य हि प्रमाणान्तरेण प्राधान्यमवगतं तत्क्रियां निवर्त्तयत्यात्मार्थमेव निर्वर्त्तयति । क्रियानिर्वृत्तौ च सहभाव उपपद्यते । यदि तृतीया न श्रूयेत, ततः सहभावो ऽयं नास्तीति यागं निष्पादयन्त्यपि प्रतिपत्त्यर्थं स्यात् प्रस्तरवत् । अत आह । सहयोगे यत्र तृतीया तस्य गुणभावो, यत्र द्वितीया तस्य प्राधान्यमिति । कृतार्था सती प्रतिपाद्यत इति चेत् । तन्न । दर्शपूर्णमासयोः प्रकरणे श्रवणात् पौर्णमास्यां न प्रतिपत्तिः । प्रस्तरस्तूभयत्र कृतार्थः । तस्माद्यत्र तृतीया सा ऽत्यन्तसाधनभूता । न चैकत्र प्रधानभूता ऽपरत्र गुणभूता विवक्षाभेदात् । तस्माद्गुणभूतैव शाखा ।

प्रतिपत्तिर्वा शब्दस्य तत्प्रधानत्वात् ॥ ११ ॥

प्रहरतौ यद्यभावपि तुल्यौ ततः सहभाव उपपद्यते, प्रस्त-

रस्य च प्रतिपत्तिः। शाखाया अपि। तत्रानियतकाले प्रहरणे प्राप्ते सह प्रहरतीति विधीयते। एवमपेक्षितत्वान्नादृष्टं कल्पना। अतो ऽविवक्षिता तृतीया। तस्मादनया द्वितीया लक्ष्यते। द्वितीया ऽपि तृतीयालक्षणार्थैव। प्रह्रियमाणयोश्च यन्निर्ज्ञातकालं प्रयच्छद्वस्तुतो गुणभूतं क्रियायास्तुल्यत्वात्। प्रस्तरश्च निर्ज्ञातकालः। अनयोश्च प्रहरण एव साहित्यं नानुमिते यागे। शाखायास्तत्राश्रवणात् प्रत्यक्षेण प्रदीयमाने ऽपि यथा मैत्रावरुणे पयः प्रत्यक्षेण हूयमानमपि न यागसाधनमेवं शाखा प्रहरतिना सम्बध्यमाना ऽपि न यागसाधिकेति सिद्धम्।

उत्पत्त्यसंयोगात्प्रणीतानामाज्यवद्विकारः स्यात् ॥१४॥

शुद्धाः प्रणीता उत्पन्नाः कैमर्थ्याभिलाषिण्यो वाक्यद्वयेन संयवननिनयनप्रयोजने प्रतिनीयन्ते। तेनोभयप्रयुक्ता इति। ननु संयवने तृतीयानिर्देशाद् गुणभावः। निनयने द्वितीयानिर्देशात्प्राधान्यम्। उच्यते। वचनान्तरेण शेषभावे ऽवगते ऽन्यत्र संयोगे भवति प्रतिपत्तिर्यथा स्विष्टकृत्। संयवनार्थानां च तावतीनामेव ग्रहणं प्राप्नोति, यावतीभिः संयवनं निष्पाद्यते कुतो ऽन्यत्र प्रसङ्गः ? उभयप्रयुक्ताभिस्तूभयं निर्वर्तयितव्यम्। सर्वार्था इति पक्षो न कुतो निष्प्रमाणकत्वात्। श्रुतवाक्येन सम्बन्धे विशेषे ऽवगते प्रकरणादश्रुतं सर्वाङ्गत्वं कल्प्यम्। कल्प्यमाने ऽपि प्रकरणसम्बन्धात्तत्र वा ऽन्यत्र प्राप्ताः पुनर्वचनात्परिसंख्यायेरन्। तस्मात्सर्वार्थपक्षो दुःश्लिष्टः।

संयवनार्थानां वा प्रतिपत्तिरितरासां तत्प्रधानत्वात ॥ १५ ॥

तृतीयासामर्थ्यात्संयवनार्थतैव । न तावन्मात्रं शक्यमुपकल्पयितुम् । सूक्ष्ममिदं द्रव्यमतिरिच्यते । तस्मादतिरिक्तस्य प्रतिपत्तिर्न त्वतिरेचितव्यमिति शास्त्रमस्ति । अतिरेकश्चावश्यम्भावी । अल्पे हि गृह्यमाणे संयवनस्याकृतत्वात्पुनः प्रणीतासंस्कारः कर्त्तव्य इति गौरवमापद्येत । क्रयान्यत्वेन प्रायश्चित्तम् ।

प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात् ॥ १६ ॥

दानस्य मैत्रावरुणः प्रयोजकः । कृष्णविषाणा चात्वाले प्रतिपाद्येति प्रतिपत्तिः । प्रसङ्गेनोपरितनी चिन्ता । देशार्थावभृथश्रुतिरिति देशसम्बन्धादन्यो ऽपि देशो विपरिवर्त्तमानश्चिन्त्यते । किमनूद्यते नियम्यत इति नियमप्रसङ्गेन तथोत्तरे ऽधिकरणे ऽवतरतोर्गुणसंस्कारयोरपि नियम एवेति । करणद्रव्यं संस्कुर्वत्तेन सम्बध्यते तस्य रूपमाख्यायते । कीदृशेन व्यापारेण करणमनुष्ठितं भवतीत्यनेन प्रसङ्गेन यागनिरूपणमायातम् । एवं जुहोतावपि ।

अर्थकर्म वा कर्तृसंयोगात्स्रुग्वत् ॥ १७ ॥

दण्डो व्याप्यमानः क्रियया शब्देनैव मैत्रावरुणार्थ उपदिश्यते । या च द्वितीया दण्डमिति, सा ऽपि न प्राधान्येनेप्सितार्था; किं तर्हि व्याप्यमानतया । मैत्रावरुणो हि तत्र प्रधानभूतः । अत आह 'तथा युक्तं चानीप्सित'मिति द्वितीया भविष्यतीति । तस्मान्न दण्डः प्रधानभूतः । न च दण्डदानमदृष्टाय । तमोवगाहनादिषु दृष्टा एव ।

कर्मयुक्ते च दर्शनात् ॥ १८ ॥

दण्डी प्रैषानन्वाहेत्यनूद्यते । तेन प्रचरतो दण्डं दर्शय-

ति। प्रतिपत्तित्वे न तस्य धारणं भवेत्। अथाऽर्थकर्म ततो ध्रियमाणस्य प्रकरणाविशेषाद्यत्कुर्यात्तन्नदण्डसंयुक्तेनेति । तस्मात्सर्वत्र दण्डभावादनुवाददर्शनमुपपद्यते । नन्वरुणाधिकरणे दण्डविधानमुक्तमुपसर्जनार्थो विधीयत इति । उच्यते । प्रकरणात्सर्वार्थं प्राप्तं प्रैषानुवचनयोर्निर्दिश्यते। एवं नास्ति विरोधः । दण्डानुवादो ऽपि घटते नियमविधानात् । उपसर्जनार्थविधानमपि ।

प्रतिपत्तिर्वा तन्न्यायत्वाद्देशार्थाऽवभृथश्रुतिः ॥२२॥

तेनावभृथं यन्तीत्यनेन सोमलिप्तावभृथयोः सम्बन्धो विधीयते। तत्र सोमलिप्तं वावभृथार्थमवभृथो वा सोमलिप्तार्थः। द्वयमप्येतन्न घटते । यदि तत्साधनत्वेन सोमलिप्तं,तत्रोत्पत्तिवाक्यशिष्टैककपालेन बाध्यते । अथ सोमलिप्तं संस्कर्त्तव्यमवभृथः संस्कारकः तथा ऽपि यागं निवर्त्तयद्द्रव्यं संस्कार्यतां प्रतिपद्यते । निवर्तनवेलायां चैककपालश्रुतिप्राप्ते विद्यत एव । किं च पुरोडाशेन क्रियमाणो निर्वर्त्त्यः प्रधानभूतः। सोमलिप्तं तु संस्कुर्वाणो गुणभूतः। न चैकस्य कर्मणो गुणत्वप्राधान्ये युक्ते । सोमलिप्तावभृथसम्बन्धे चासन्तं वाक्यम्। तस्मादियं वचनव्यक्तिर्न घटते । याने सोमलिप्तविधानमिति चेत् न शक्यं सोमलिप्तेन गन्तुमश्वादिनेव । अदृष्टकल्पना च । अतः सोमलिप्तगमनं विधीयते । शक्नोति गमनं देशान्तरप्राप्त्या सोमलिप्तं संस्कर्तुं,कियन्तं देशं नेयमिति। तत्रावभृथशब्देन देशः परिच्छिद्यते । अतो गमनेन प्रतिपाद्यमानत्वाद् दृष्टार्थता। श्रुत्यर्थानुग्रहश्च धात्वर्थविधानादन्यत्रेति।

कर्तृदेशकालानामचोदनं प्रयोगे नित्यसमवायात् ॥२३॥

कर्तृसंख्या समादयश्च प्रयोगवचनेनाक्षिप्तत्वान्न विधीयन्ते । तस्मादनुवादः । न च समादिग्रहणं विषमादिनिवर्त्तकं प्रतिषेधवचनस्याभावात् । न चेतरनिवृत्तिः । एवकाराभावात् । न च विधिः प्राप्तत्वात् । अनेनाभिप्रायेणाऽऽह—उपदेशकमेवंजातीयकं न प्रतिषेधकमिति ।

नियमार्थो वा श्रुतिः ॥ २४ ॥

व्रीहिभिर्यजेतेति दर्शपूर्णमासयोः श्रवणाद्यावदाक्षेपावङ्गभावस्तावद्देशादि नियतम् । दर्शपूर्णमासापूर्वमेषां निमित्तं प्रयोजकं चेति । अतो नियतनिमित्तत्वान्नियम इत्युच्यते । प्रयाजादीनामपीति चेत् ? तन्न । यत्पक्षे विधिमन्तरेण प्राप्नोति तच्छ्रूयमाणमनियतांशे प्रविशन्नियमोऽभिधीयते । न चानुवादः शक्यो वक्तुम् । सर्वदा यत्प्राप्नोति तदनूद्यते । अत आह—नियतस्य नियतेति ।

यजतिचोदना द्रव्यदेवताक्रियं समुदायेऽकृतार्थत्वात् ॥ २७ ॥

तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ॥२८॥

समुदाये कृतार्थत्वादित्ययुक्तोऽयं ग्रन्थः । न हि यागशब्दो द्रव्यदेवताक्रियं त्रितयमपि ब्रवीति; किं तर्हि यजतिधातुवाच्यम् । समुदायवाच्ये एकस्य बहुवाच्यमित्यदृष्टकल्पना । समुदायश्च वाच्यत्वेनाऽप्रसिद्धः । जुहोतिरासेचनाधिक इत्येतदप्ययुक्तम् । पुरोडाशद्रव्यकेष्वपि जुहोते-

विद्यमानत्वात् । मारुतान्जुहोत्येककपालान्जुहोतीति ।

उच्यते । न पदार्थलक्षणमिदं; किं तर्हि यजेत स्वर्गकाम इति साधनत्वेन यागस्य चोद्यमानस्य प्रयोगः कथ्यते । यो देवतोद्देशेन द्रव्यं त्यजति तेन यागो ऽनुष्ठितो भवति न त्यागमात्रेण यागः कृतो भवतीति । तस्मात्प्रयोगकथनमेवैतत् । सूत्रकारश्च यजतिचोदनेत्याह । चोदनेति हि वाक्यमुच्यते । जुहोतिशब्दस्याऽपि फले चोदितस्य प्रयोगानुष्ठानमेव कथ्यते । आसेचनाधिक्यं च तत्र प्रायिकम् । ददातेरप्यनुष्ठानकथनमेवेति ।

विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् ॥ २९॥

यदि परद्रव्योपदेश उपसदामग्नीषोमीयस्य च तथा सति यदातिथ्यायां बर्हिरित्युपदेशो ऽनर्थकः स्यात् । कतरद्बर्हिरातिथ्यायाः सम्बन्धि, यदन्यस्योपदिश्येत । गोस्तु देवदत्तसम्बन्धे प्रथममवगते तदुत्तरकालं युक्त उपदेशः । इह तु स्वस्वामिसम्बन्धानवगमाद्यदातिथ्याबर्हिस्तदुपसदामिति न घटते । ननु यदातिथ्यार्थमुपात्तं तदुपसदादेर्घटत एव । तथा ऽपि सति तस्यातिथ्यायां विधानमनर्थकम् । निरिष्टिकोपदेशो ऽप्यन्यार्थ्यः सत्याङ्गतौ । अस्ति च गतिर्यद्धर्मकमातिथ्याबर्हिस्तद्धर्मकमुपसदामपीति । नन्वपूर्वत्वादुपसदां बर्हिषो ऽभावः । उच्यते । पूर्वाऽऽधारो ऽत्र विद्यते । बर्हिश्चाङ्गप्रधानार्थम् । तस्मात्प्राप्नोति ।

अपि वोत्पत्तिसंयोगादर्थसम्बन्धो विशिष्टानां प्रयोगैकत्वहेतुः स्यात् ॥ ३० ॥

यदातिथ्यायां बर्हिरित्यनेन बर्हिषः साधारण्यं प्रतिपाद्यते । एतद्वाक्योत्तरकालं चाश्ववालादयो धर्माः पठ्यमानाः साधारण्यं प्रतिपद्यन्ते । सत्यप्यातिथ्याप्रकरणे बर्हिषः साधारणत्वात् । यदि वाक्यान्तरेणातिथ्यासम्बन्धिनो धर्मा अवगताः स्युस्ततो ऽन्यत्रैतदेव वाक्यं स्याद्धर्मातिदेशकम् । ते तु प्रकरणावगताः । तस्माद्धर्मसाधारण्यम् । एवं च लक्षणा न भवतीति सिद्धम् ।

इति चतुर्थाध्याये द्वितीयः पादः ।



# अथ तृतीयः पादः ।

द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः ॥ १ ॥

अपापश्लोकार्थिन उपायमन्विच्छतः पर्णमयीत्वमुपायत्वेन विधीयते । जुह्वाश्च जात्याकाङ्क्षायां पर्णमयीत्वं परिच्छेदकत्वेन विधीयते । तदुभे अपि निराकाङ्क्षीकर्तुं शक्नोतीत्युभाभ्यां सम्भन्त्स्यते । एकस्य तूभयत्वे संयोगपृथक्त्वमित्यनारभ्याधीता जातिविशेषाः क्रत्वर्थाः पुरुषार्थाश्च यथा खादिरतादयः । अथ वा जुह्वा जुहोतीति प्रकरणे जुहूर्विहिता न पापं श्लोकं शृणोतीत्यनेन पुरुषार्थतया विधीयते । साध्यसाधनत्वादृते नोपपद्यत इति वर्तमानापदेशस्याऽपि विधायिका शक्तिः कल्प्यते । यदाङ्क्त इत्येवमादिष्वप्येवं योज्यम् ।

एवं प्राप्ते ब्रूमः । जुह्वां क्रत्वर्थतया विधीयमानायां यदिदं तत्फलमेषो ऽर्थवादः स्तावकत्वेन । विश्वजिद्वत्फलमशक्यं कल्पयितुम् । यथा प्रणयनम् । तथा जातिगता गुणकामना ऽपि नास्ति । आश्रयस्याऽपि परिवर्तमानत्वात् । जुहूराश्रय इति चेत् । द्रव्यत्वात् । न दीयमानो ऽपि वाक्येन दीयते । नव वाक्यभेदः । स चाश्रयान्तरमपेक्षते । न चाश्रयो विपरिवर्तते । तस्मादवगतक्रत्वर्थायां जुह्वां जातिमपेक्षमाणायां जातिर्विधीयते । तस्यां विधीयमानायां फलश्रुतेरर्थवादः ।

उत्पत्तेश्चातत्प्रधानत्वात् ॥ २ ॥

इत्यनेन साध्यसाधनसम्बन्धं निराकरोति । न जातिर्नाऽपि जुहूर्विधीयते साधनतया । कुतः ? शब्दाभावात् । अर्थवादो विधायक इति चेदेवं साध्याभावः। रात्रिसत्रवदिति चेत् ? उच्यते । तत्राऽप्यर्थान्तराभावात् । युक्तम् । इह त्वर्थान्तरमस्ति । जुह्वा अपापश्लोकश्रवणं क्रियते इति शब्दात्तावत्सम्बन्धो नास्ति । यस्य पर्णमयी जुहूस्तस्यापापश्लोकश्रवणमिति । न चैतत्प्रत्यक्षेण गम्यते । व्यभिचरितत्वान्नानुमानम् । तस्मात् क्रतुसम्बन्धान्न पुरुषार्थता । खादिरादीनां तूभयसंयोगाद्युक्तोभयार्थता ।

नैमित्तके विकारत्वात्क्रतुप्रधानमन्यत्स्यात् ॥ ४ ॥

क्रत्वर्थानि चमसादीन्यदृष्ट्वा पूर्वः पक्षः । केचित्त्वाहुः वचनमनालोच्य पूर्वः पक्षः । यद्यपि गोदोहनादीनि फलार्थानि तथा ऽपि विपरिवर्तमानानि तान्येव क्रत्वर्थान्यपि । अथ वा प्रकरणेन गृह्यन्ते । अथ वा गोदोहनेन प्रणयेदिति श्रुत्यनुग्रहेण पूर्वः पक्षः ।

एवं प्राप्ते ब्रूमः । नैमित्तिके विकारत्वादिति यद्यस्मिन्विशेषे श्रूयते ततस्तस्मिन्सति भवितुमर्हति । अतो विना फलेन न युज्यते। सन्ति च चमसादीन्यसंयुक्तानि भविष्यन्ति । न कामपदत्यागाच्छ्रुत्यर्थो गृह्यते । न परमार्थतः श्रुत्यर्थः । नैवं जातीयो वाक्यार्थः सामान्यपदार्थं बाधितुमर्हति । अपः प्रणयतीत्यनेन सामान्येन या पात्राकाङ्क्षा तां गोदोहनवाक्यमसमर्थं निवर्तयितुम् । कथं ? फलसाधनत्वेन निराकाङ्क्षं गोदोहनं कथं तस्य पात्राकाङ्क्षां निवर्तयेत् । तस्मात्सामान्याकाङ्क्षायामबाध्यमानायां चमसेन सह सम्भन्त्स्यते । न च द्विष्ठानि वाक्या-

नि । एक एव पदार्थो वाक्यस्य । विवक्षाभेदस्तु एकस्य विवक्षा श्वेतगुणो धावति अपरस्य विवक्षा श्वा इतो धावतीति । बार्हद्गिरादीनि द्वादशाहिकानीहोदाहरणम् ।

शेष इति चेत् ॥ ६ ॥

यथा प्रणयनमनूद्य चमसे ऽप्येकवाक्यत्वम्, एवं यद्दध्ना जुहोति तदिन्द्रियकामस्येति ।

नार्थपृथक्त्वात् ॥ ७ ॥

प्रणयनं विधीयमानमेव पात्राकाङ्क्षं सन्निधीयते । तत्र यत् प्रणयति केनाऽपि पात्रेण तच्चममेनेति तस्याकाङ्क्षां निवर्त्तयति । अतश्चमसस्य युक्तैकवाक्यता प्रयोजनैक्यात् । इह तु दध्ना जुहोतीति होमप्रयोजनेनैव निराकाङ्क्षत्वान्नान्यत्प्रयोजनमपेक्षते । एतदपीन्द्रियेण साध्येन निराकाङ्क्षीकृतं । तस्माद्द्वयोरपि भिन्नसाध्ययोः परस्परसम्बन्धो नास्त्यर्थे भेदात् ।

द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ॥८॥

उत्तरस्मिन्नधिकरणे पूर्वाधिकरणसिद्धान्तेन पूर्वः पक्षः ।

पृथक्त्वाद्व्यवतिष्ठेत ॥ ९ ॥

ब्राह्मणकर्तृकस्य ज्योतिष्टोमस्य पयोव्रतता । सत्यपि क्रत्वर्थत्वे पुरुषप्रधानत्वान्निर्देशस्य पुरुषद्वारेण क्रतावनुप्रवेशः । अतो ऽब्राह्मणकर्तृकस्य नास्ति पयोव्रतता ।

चोदनायां फलाश्रुतेः कर्ममात्रं विधीयते न ह्यशब्दं प्रतीयते ॥ १० ॥

विश्वजिदसाधनं फलाभावादश्रवणात् । कर्तव्यतावचनस्तस्य कर्त्तव्यताऽविनाभूतो न फलेन । तस्मादविनाभावाद् यस्मात्परः प्रत्ययस्तस्य कर्तव्यतां बोधयति । एवं श्रुत्यनुग्रहो भवति । अथोच्येत फलेन विना यागो न प्रवर्त्तते । तस्मात्कर्तव्यत्वान्नूनं सुखदो ऽयमित्यवसायः । उच्यते । अनुमानात्सुखं कल्प्यते । प्रत्यक्षेण तु दुःखम् । अध्याहृतेन फलेनैकवाक्यतेति चेत् ? उच्यते । यजेतेति निराकाङ्क्षत्वादस्य कुतो ऽध्याहारः ? अध्याहृतेनाऽपि साध्यसाधनसम्बन्धस्यानवगमान्नास्ति सम्बन्धः । यजेत स्वर्गमिति कुतः सम्बन्धः ? तस्मात्प्रतिसाध्यसाधनसम्बन्धे भवति फलार्थता ऽपूर्वद्वारेण । यत्र पुनर्यजेतेति केवलः पदार्थस्तत्र साध्यसाधनसम्बन्धो नास्ति । तदभावे ऽपूर्वाभावो ऽपूर्वाभावे फलाभावः ।

अपि वा ऽऽम्नानसामर्थ्याच्चोदनार्थेन गम्येतार्थानां ह्यर्थवत्त्वेन वचनानि प्रतीयन्ते ऽर्थतो ह्यसमर्थानामानन्तर्ये ऽप्यसम्बन्धस्तस्माच्छ्रुत्येकदेशः सः ॥ ११ ॥

कर्तव्यतावचनो भावनायां पुरुषं प्रवर्त्तयति । तस्याश्च प्रयोज्येन भाव्यम् । स च पुरुषार्थः प्रयोज्यतां प्रतिपद्यते । तस्मात्पुरुषार्थो भाव्यमानः । अतः सर्वाख्यातेषु पुरुषार्थो ऽविनाभूतः प्रयाजादिषु द्वारेण, दर्शपूर्णमासादिषु साक्षात् । विश्वजिदादयो ऽप्यनङ्गत्वात्साक्षात्पुरुषार्थस्य साधकाः । विश्वजितेति च यागनामधेयं करणविभक्तिसंयुक्तम् । तत्र यदि यागो ऽपि करणं, ततः सामानाधिकरण्येन नामधेयत्वमुपपद्यते । कर्मीभूते पुनः सामानाधिकरण्याभावान्नामधेया-

भावः । न च विश्वजिद्द्रव्यम् । अप्रसिद्धत्वात् । अपि वाऽऽम्नानसामर्थ्यात् भावनासामर्थ्यादित्यर्थः । एकाहकाण्ड-पठितो विश्वजिदिहोदाहरणम् ।

तत्सर्वार्थमनादेशात् ॥ १३ ॥

अनादेशाद्यद्यत्काम्यते फलमनियमेन तस्य तस्योपाय-त्वेन विधीयमानत्वात्सर्वार्थता ।

एकं वा चोदनैकत्वात् ॥ १४ ॥

यजतेरस्य फलमाकाङ्क्षतः फलमध्याह्रियते । यस्यैव करणतां गतस्तेन विशेषेण निराकाङ्क्षः कुतो ऽनियमप्रसङ्गः? तस्मान्नियतमेकं फलं साधयतीति ।

क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः ॥ १७ ॥

रात्रीणां विधीयमानानामर्थवादो ऽयं,भवितव्यं च कर्म-णः फलेन, तस्मात्स्वर्गः फलमिति । विधिविभक्तेरभाव इति कामशब्दाभाव इत्यर्थः। अथ वा साध्यसाधनसम्बन्धाभाव इति।

फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् ॥१८॥

कर्मणः फलेन भवितव्यम् । तत्र किं स्वर्गपदमध्याहृत्य तेन सहैकवाक्यता उत प्रतिष्ठापदैकदेशं विपरिणम्य प्रति-ष्ठादेः फलत्वं ? सन्निधानस्य क्लृप्तत्वात् प्रतिष्ठादेरेवैकवा-क्यता कल्प्या । स्वर्गाध्याहारे हि सन्निधानमेकवाक्यता चोभयं कल्प्यम् । तत्र गौरवम् । विधिविभक्तिमात्रमन्यतो ऽपेक्ष्यमिति साधनसङ्गतये एवमादिग्रन्थः । पूर्वेण प्रतिष्ठादि-

साधितं साध्यम् । उत्तरेण तूपयन्तीति वर्त्तमानापदेशा-ल्लिङ्गमध्याह्रियते साधनत्वप्रतिपत्तये । आह—कथं केवलं विधिविभक्तिमात्रमन्यतो भविष्यति यदनेन प्रतिष्ठादिना धात्वर्थेन सम्भन्त्स्यत इति । प्रतिष्ठादीत्यनेनोपयन्तीत्ययं धात्वर्थो लक्ष्यते । एवं परिचोदिते आह । यत्साध्यसाधनसम्बन्धं समर्थं कर्तुं तत्सहैव धातुना ऽऽध्याहरिष्यामः । उपेयुरिति । अथ वा रात्रीणां य उत्पत्तिप्रयोगवचनः स यथेतिकर्त्तव्यतासम्बन्धमपेक्षते तथा स एव साध्यसाधनसम्बन्धं करिष्यति । यस्यैकस्यैव कामायान्ये यज्ञक्रतव आह्रियन्ते । सर्वेभ्यो ज्योतिष्टोम इत्येतस्माद्वाक्याल्लिङ्गाभावे ऽपि ज्योतिष्टोमः स्वर्गकामानां साधनं भवति । तथा हि । उत्पत्तौ या लिङ्साधनत्वेन ज्योतिष्टोमं विधास्यति एवमिहापि । अथ वा ऽर्थवादो ऽविनाभावाद्विधिं लक्षयति । स लक्षितः साध्यसाधनसम्बन्धं प्रतिपादयिष्यति । तस्मादर्थवादेभ्यो विधिः । विपरिवर्तमानाश्च त एव फलतां प्रतिपत्स्यन्ते । तस्मात्स स्वर्गः स्यादित्यस्याऽयमपवादः ।

काम्ये कर्मणि नित्यः स्वर्गो यथा यज्ञाङ्गे क्रत्वर्थः ॥ २० ॥

निर्वपेदित्ययं विधिः पुरुषमात्रं प्रवर्तयति । तत्र यदि स्वर्गः फलमिष्यते, पुरुषप्रयत्नवचनस्य बाधः । प्रीतिमात्रं हि सर्व एवेच्छन्ति । तस्मात्स्वर्गः फलम् ।

सार्वकाम्यमङ्गकामैः प्रकरणात् ॥ २१ ॥

सर्वेभ्यो ज्योतिष्टोम इति विधायकाभावात्साधनत्वा-

भावः। तस्मादङ्गाङ्गकामानपेक्ष्य सर्वेभ्यो ज्योतिष्टोम इत्यनुवादः।

फलोपदेशो वा प्रधानशब्दसंयोगात् ॥ २६ ॥

प्रधानेभ्यः फलं श्रुतम्। अङ्गान्यङ्गाङ्गानि च लक्षणया गम्येरन्। श्रुतिश्च बलीयसी। न चायं कस्य चिद्विधेः शेषः, येनार्थवादत्वादनूद्येत। तस्मादत्रोत्पत्तिप्रयोगवचनार्थवादाध्याहाराणामन्यतरतो विधिः। किं कर्म साध्यं काममपेक्ष्य सर्वकामता। उत यावतः के चन कामा इत्यविशेषाद्यावन्तः कामा इति। अन्ये क्रतव एकफलसाधनकाः,अयं तु क्रतुः सर्वाणीति। क्रतुगतानि फलान्यपेक्ष्य सर्वतेति चेत्। तन्न। ज्योतिष्टोमस्य सर्वफलेभ्यो विधीयमानस्यार्थवादोऽयम्। तस्मान्नियतफलताया नास्ति प्रमाणम्। उच्यते। यत्र यत्र कामशब्दो हिरण्यकामः पुत्रकाम इति तेष्वेवाऽस्य साधनता। कुतः? तेषु हि कामशब्दमुच्चारयन्ति नेतरत्र। उपलब्धपूर्वं हि प्रियं भवतीति। सर्वज्ञता च न कदाचिदुपलब्धा। तस्मात्तत्र कामस्याऽप्रवृत्तिः। तेन य एव वेदे कामशब्द उच्चारितास्तेऽनुपज्यन्ते।

योगसिद्धिर्वा ऽर्थस्योत्पत्त्ययोगित्वात् ॥ २८ ॥

कामानामुद्दिश्यमानत्वादितरेतरयोगाविवक्षा। तदुद्देशे ज्योतिष्टोमो विधीयमान एकं फलं साधयति। न तु यौगपद्येन सर्वाणि,अनुपादेयत्वात्तेषाम्। अथ वा कामोत्पत्तौ निमित्ते ज्योतिष्टोमो विधीयते। कामाश्च भेदेनैवोत्पद्यन्ते। अतो निमित्तभेदान्नैमित्तिकस्याप्यावृत्तिः। एवं वा योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात्। पुत्रवृष्ट्यादीनि इह वा ऽमुत्र वेत्यनियमः।

कुतः? पुत्रादीनि कामयमानस्योपायो विधीयते। उपाये च कृते नियतमुपेयेन भवितव्यम्। तत्र कदाचित् पूर्वजन्मन्यशुभं कृतम्। तच्चानुभाव्यं, तस्मात्पूर्वजन्मकृतमनुभूयते। तत्र यदि जन्मान्तरकृतो ऽधर्मः प्रक्षीणः तत इहैव जन्मनि फलम्। अथाक्षीणस्ततस्तेन बद्धसाधकं फलमुत्कृष्यते। फलं भवतीत्येतावति विधिशब्दोऽस्ति—न त्वनन्तरत्वे। तस्मादनियमः। स्वर्गस्तु जन्मान्तर एव। स हि निरतिशया प्रीतिः कर्मानुरूपा चेति न शक्येह जन्मन्यनुभवितुम्। यतो ऽस्मिँल्लोके क्षणे सुखदुःखे अनुभवन्ति। न च प्रीतिमात्रं ज्योतिष्टोमफलम्। प्राणिमात्रस्य च सा विद्यते। न च प्राणिमात्रं ज्योतिष्टोमं करोति। तस्मात्स्वाभाविक्यसौ। देशानन्तरं तु निरतिशयप्रीत्यनुभवनायान्यथानुपपत्त्या कल्प्यते। तच्च मृतस्य न भवतीत्यतो जन्मान्तरे स्वर्गः।

समवाये चोदनासंयोगस्यार्थवत्त्वात् ॥ २९ ॥

यदि वाजपेयः पारार्थ्येनोच्चार्येत, त्रिःप्रकारया ऽपि श्रुत्या हीयेत। तस्मादङ्गत्वायोच्चार्यमाणः स्वार्थः, तेनाङ्गाङ्गिसम्बन्धः।

कालश्रुतौ काल इति चेत् ॥ ३० ॥

अङ्गाङ्गित्वे हि बृहस्पतिसवः कर्मान्तरं तस्यापूर्वान्तरं धर्मलक्षकत्वं च। तस्मादेवमादिदोषपरिहाराय निर्ज्ञातस्य बृहस्पतिसवस्य वाजपेयेन कालो लक्ष्यते। इष्ट्वेति च कालाभिधाने समर्थशब्दः।

नासमवायात्प्रयोजनेन स्यात् ॥ ३१ ॥

प्रकरणान्तरत्वादविपरिवृत्तिः। अविपरिवृत्तिश्चेत्कथं कालो विधीयते ? यदि बृहस्पतिसवेन यजेतेत्यनेन विपरिवृत्तिः, ततस्तत्रैव क्षीणत्वान्न कालविधिः न विपरिवृत्तिः । तस्मात्प्रकरणान्तरे श्रुतं कर्मान्तरं विधीयते । तच्च वाजपेयाङ्गम् । तत्र प्रधानकालत्वादङ्गानां प्रधानकालत्वे प्राप्ते वचनाद्वाजपेयेन बृहस्पतिसवार्जितनाऽपूर्वं कृत्वा तत इदं कर्तव्यमिति ।

नोत्पत्तिसंयोगात् ॥ ३५ ॥

संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपतीति । अनेन वैमृध एव पौर्णमास्यङ्गत्वेन विधीयते । नान्यद्वाक्यान्तरमस्ति दर्शपूर्णमासाङ्गत्वावगमकम् । येनानेन कालसंयोगः क्रियेत ।

उत्पत्तिविषये कालः स्याद्वाक्यस्य तत्प्रधानत्वात् ॥३७॥

कथं रूपावचनम् ? देवताभावादित्ययुक्तमिदम् । वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति सत्यामपि पूर्वकालतायां न कालार्थः संयोगः, किं तर्ह्यङ्गाङ्गिसम्बन्धः । अविपरिवर्तमानत्वात् न शक्यते वाक्यान्तरेण यो बृहस्पसवो ऽवगतः स एव काले विधीयते इति । तस्मात्प्रकरणान्तरे श्रूयमाणं कर्मान्तरत्वं प्रतिपद्यते बृहस्पतिसवधर्मकम्।एवमिहाऽपि प्रकरणे श्रूयमाणं कर्मान्तरम् । यथा सोमोद्भिदादय ऐन्द्रवायवादिभी रूपवन्तः एवं रूपवान् भविष्यति । तस्मादन्यथा वर्ण्यते । ज्योतिष्टोमप्रकरण इदमाम्नातम् । ननु तत्रापि प्रकरणान्तरत्वाद्दर्शपूर्णमासयोरङ्गता । उच्यते । दर्शपूर्णमासाभ्यामिष्ट्वेति नामधेयमिदमाख्याताभावात्स्वतन्त्रम्। स्वातन्त्र्याच्च यत्पूर्वं विज्ञातं तदाभिधत्ते । आख्याते हि सति तदनुमार्येतद् यच्चाख्यातं प्रवर्तते ततः प्र-

कृते । अथाप्रकृते ततस्तदप्यप्रकृते । तस्माद्दर्शपूर्णमासोत्तरकालः सोमः कर्त्तव्य इत्येतद्विधीयते । स च विपरिवर्त्तमानत्वान्न कर्मान्तरं, दर्शपूर्णमासो नैव विधीयते । अतस्तयोः कर्मान्तरशङ्कैव नास्ति ।

फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वात् ॥३८॥

अर्थवादो रात्रिसत्रन्यायेन फलप्रतीत्यर्थः इति स्थिते । किं तु पुत्रजन्मनिमित्तं पितुः फलदम् उत पुत्रस्येति । पुत्रस्यैव । कुतः ? "यस्मिन् जात एतामिष्टिं निर्वपति, पूत एव स" इति सर्वनाम्ना पुत्रस्य फलं प्रतिपाद्यते पूत एव सः । कः ? यो जात इति । अतो वचनसामर्थ्यात् पुत्रस्यैव फलम् । पवनसंयुक्तः पुत्र इष्यते एवेत्यात्मनेपदमविरुद्धम् । एवं वा—

अङ्गानां तूपघातसंयोगो निमित्तार्थः ॥३९॥

इतरस्मिन्पक्षे कालोपेयात् लक्षणा च स्यात् । निष्ठा हि भूतसामान्ये उत्पद्यते तस्या यः श्रुत्यर्थः स च कृतो ऽपि जातकर्मणि विद्यत एव । जातानन्तरतानिमित्तमिति यो ब्रवीति तेन सामान्यवचनो विशेषे लक्षितः । जातानन्तरं त्रुटिर्न शक्यते सम्भावयितुम् । क्षणिकी हि सा । अत आह । कालोपेयादिति । अन्तर्दशाहे ऽपि न क्रियेत आशौचे ऽस्याऽपरिसमाप्तत्वात् । तस्माद्दशाहोत्तरकालायां पूर्णमास्याममावास्यायां वा कर्त्तव्या भिन्ने जुहोतीत्यनन्तरमेव क्रियते । नैमित्तिको हि पाठक्रमः इतरं पाठक्रमं बाधित्वा निविशते इति ।

इति चतुर्थाध्याये तृतीयः पादः ।



# अथ चतुर्थः पादः ।

प्रकरणशब्दसामान्याच्चोदनानामनङ्गत्वम् ॥ १ ॥

प्ररणे पष्ठौहीं दीव्यतीत्येवमादय उत्पद्यमाना एव कैमर्थ्याभिलाषिणस्तेषां रूपवतां सन्निधावरूपः शिष्यमाणो राजसूयशब्दः प्रकृताभिधेयकः । प्रकृतत्वाविशेषाच्च नाऽवगम्यते विशेषः, इमे उपात्ता नेम इति । तस्मात्ते तदभिधेयास्तेषामनेन स्वाराज्यं फलं कल्प्यते, न त्वप्राप्तमुत्पत्तौ फलं विधीयते । किं तर्हि प्राप्तमेव नियम्यते । ननु यागसामानाधिकरण्याद्यागेभ्य एव फलम् । उच्यते । राजसूयशब्दः प्रकृतमात्राभिधायी विशेषे स्थाप्यमानो बाध्यते । यागशब्दस्य तु नैव बाधः । मुख्यश्च राजसूयशब्दो जघन्यो यजिः । अनेन तावत्तृतीयान्तेन फलकरणमुच्यते । प्रकृताश्च फलाकाङ्क्षिण इति तदभिधायित्वम् । तस्माद्राजसूयशब्दवाच्यं फले विधीयते । यागशब्दोऽनुवादः प्रत्ययार्थत्वेन चाऽवश्यमुच्चारयितव्यः । आनन्तर्याच्च राजसूयस्वाराज्ययोरेव सम्बन्धो युक्तः । राजसूयशब्दो राज्ञः सव इत्येवमङ्गीकृत्य प्रवृत्तः । राजा चास्मिन्प्रकरणे श्रूयते । तस्मात्सूयतेरपि च्छत्रिन्यायेन सर्वत्र प्रवर्त्तते । अथा ऽव्युत्पन्नोऽश्वकर्णन्यायेन नतरां विशेषे ।

अपि वा ऽङ्गमनिज्याः स्युस्ततो विशिष्टत्वात् ॥२॥

यजेतेति भावनावचनो यस्य परः श्रुतस्तस्यैव श्रुत्या क-

रणतामाह । इतरस्य वाक्ये ब्रूयात् । नामपदं चाख्यातानुसारित्वाद्यत्राख्यातं वर्त्तते । आख्यातं यागं ब्रवीति । तस्मात्प्रकृता योगाः फले विधीयन्ते । इतरेषां कैमर्थ्याभिलाषित्वं क्रतूपकारेण निवर्त्स्यति ।

मध्यस्थं यस्य तन्मध्ये ॥ ३ ॥

विदेवनीयादयो ऽभिषेचनीयादूर्ध्वं समाम्नायमानाः क्रमादभिषेचनीयाङ्गम् । विरोधे च प्रकरणं बलीय इत्युक्तम् । तस्मादनिर्णीतत्वादनारभ्यम् । उच्यते । प्राकृताङ्गसम्बन्धेन श्रूयमाणाः कथम्भावाकाङ्क्षायामव्यावृत्तायां ये पदार्था उपनिपतन्ति,ते सम्बन्धिव्यवायेन गृह्यन्ते । एते च माहेन्द्रस्तोत्रकालत्वादुपनिपतन्ति प्राकृताङ्गमध्ये । तस्मादवान्तरप्रकरणादभिषेचनीयाङ्गम् । महाप्रकरणाद्राजसूयाङ्गम् । तच्च दुर्बलम् । तस्मादभिषेचनीयत्वाद्विदेवनादयस्तत्प्रयुक्ता इति ।

सर्वेषां वा समत्वाच्चोदनातः स्यान्न हि तस्य प्रकरणं देशार्थमुच्यते मध्ये ॥ ४ ॥

यत्रैवोत्पद्यन्ते,तत्रैव प्रयोजनमपेक्षमाणा राजसूयप्रकरणगृहीता निराकाङ्क्षा भवन्ति । तस्मादन्यत्रोत्पन्नानां प्रकरणात् सर्वार्थानां तत्रैवोत्पत्तिदेशे करणे प्राप्ते माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यत इति वचनादभिषेचनीयमध्ये क्रियन्ते । अतो ऽवान्तरप्रकरणेनाऽनगृह्यन्ते,संयुक्तत्वाद्राजसूयेन । तस्माद्राजसूयप्रयुक्ता विदेवनादयो ऽत्राऽवान्तरप्रकरणे निराकृते तृतीये चिन्ता ।

प्रकरणाऽविभागे च विप्रतिषिद्धं ह्युभयम् ॥ ५ ॥

सौम्येनेति तृतीयानिर्देशादुपसदामपि षष्ठ्यन्तत्वा-त्प्राधान्यमेव गम्यते सौम्यं प्रति। तस्मादङ्गाङ्गिसम्बन्धः का-लवचनं.भविष्यतीत्यन्तर्नीताभिप्रायश्चोदयति। यथैवोपसदः श्रु-तास्तथैव पुरस्ताच्छब्दः कालं प्रतिपादयति। तस्मात्तेन प्रति-पादिते काले कालार्थः सम्बन्धः। अङ्गाङ्गिसम्बन्धस्य प्रयो-जनवत्त्वादितरो ऽर्थप्राप्तत्वादनुवादः।

अपि वा कालमात्रं स्याददर्शनाद्विशेषस्य ॥ ६ ॥

उत्पद्यमानान्येवैतान्यवगतपारार्थ्यानि । यत्पुनरुच्चारणं तत्कालार्थमितरस्याऽवगतत्वात्।

फलवद्वोक्तहेतुत्वादितरस्य प्रधानं स्यात् ॥ ७ ॥

विकृतिर्ह्युपकाराकाङ्क्षिणी क्लृप्तोपकारान्पदार्थाननुमि-तलक्षितप्रापणेन गृह्णाति । तस्मान्निराकाङ्क्षीभूता सत्यपि स्वसन्निधानेनाक्लृप्तोपकारानामनहोमान् गृह्णाति । अतस्ते पृथक्फला इति। किं समप्रधानभूता आमनहोमा इति किंफल-वन्त इत्यर्थः। यथा ऽऽग्नेयादीनामेकप्रयोगवचनग्रहणात्समप्र-धानता—नैवमेषाम्।तुल्यं हि यजिमत्त्वं,यदि संस्कारकर्म स्यात्। ततः फलं न कल्प्येतापि। यागास्त्वेते । तस्मादेतेभ्यः फलं कल्प्यते।

एवं प्राप्ते ब्रूमः। प्राकृतैरङ्गैर्यदपूर्वं समभिव्याह्रियते,तदपू-र्वमपि सम्बध्यत एवाकाङ्क्षायामव्यावृत्तायामसम्बद्धैः पदैर्व्य-वहितमपि। आमनहोमानां च विद्यते प्राकृतैः सम्बन्धः। य-त्प्रयाजानां पुरस्ताज्जुहुयात् बहिरात्मनद्ध्यात् यदनुयाजा-नामुपरिष्टात्स्वर्गं लोकमपक्रामेदित्येवं परामृष्यमाणाः सम्ब-न्धिपदव्यवायेन ग्रहीष्यन्ते।

नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसम्बन्धाद्भङ्गित्वाच्चान्तरायस्य ॥ ११ ॥

नित्य एव स्यात् । कुतः ? निमित्तसंयोगाभावात् । सप्तम्या हि निमित्तमुच्यते । यद्वृत्तेन वा यदिशब्देन वा । इह तेषामश्रवणम् । अत आह न चैव शब्दो ऽस्ति यो निमित्तं प्रतिपादयतीति । निमित्तं ज्योतिष्टोमापूर्वमेव । अतो यदा ज्योतिष्टोमस्तदा निमित्तस्य विद्यमानत्वाद्ग्रहणम् । अनित्यस्य चार्थेनेति पूर्वमुत्तरेण सम्बध्यते । न चेदंवचनमस्ति अन्तरायः कार्य इति । येन कर्म गृह्येत तच्चोभयमपि नास्तीत्युक्तमेव ।

पितृयज्ञः स्वकालत्वादनङ्गं स्यात् ॥ १९ ॥

अमावास्यायामपराह्ण इति सामानाधिकरण्यं तत्कालवचनत्वमुपपद्यते । इतरथा ऽमावास्याशब्देनाग्नेयादीन्युच्येरन् । तेषामङ्गत्वेन पिण्डपितृयज्ञो विधीयते । तस्यापराह्णकाल इत्येतद्द्वारेण सामानाधिकरण्यं कीदृशमपि स्यात् । क्लिष्टा चेयं कल्पना । तस्मादमावास्यार्थे निमित्तफलाय कर्म विधीयते ।

पश्वङ्गं रशना स्यात्तदागमे विधानात् ॥ २२ ॥

त्रिवृता यूपं परिवीयेत्यनेन परिव्याणं विधीयते वाक्यान्तरेण प्राप्तत्वात् । परिव्याणमाग्नेयस्य काललक्षणार्थमुच्चार्यत इति चेत् ? तन्न लक्षणाश्रयादेव । किं तर्ह्याग्नेयरशनयोः सम्बन्धो ऽनेन क्रियते तत्र प्रयोजनत्वात् । आग्नेयस्य रशना तदर्था । तस्य हि सा ऽनपक्रमणद्वारेणोपकरोति । ननु पशोरन्या ऽनपक्रमणार्थे विद्यत एव । उच्यते । यथा यूपार्थाया

रशनावृत्तिसमुच्चय एवमिहापीति । ननु द्वितीयानिर्दिष्टत्वाद्यूपस्य रशना तदर्थेति । उच्यते । इतरत्राऽप्याग्नेयमिति द्वितीया विद्यत एव । अथ वा परिव्याणस्य यूपमिति द्वितीया तादर्थ्यमाह न रशनायाः । आह । परिव्याणार्थत्वाद्रशना ऽपि यूपार्थोच्यते । रशनायाः पश्वनपक्रमणेन प्रयोजनवत्त्वात्परिव्यायां भाव्यमानमपि तदर्थं सामर्थ्यं परिव्याणेन जन्यते रशनायाः । ननु परिव्याणमपि यूपतादर्थ्येनार्थवत्–रशना तदर्थेति । उच्यते । संप्रधार्यमेतत् । यदि वा परिव्याणार्था रशना यूपार्था । अथ वा विपरीतं तादर्थ्यम् । परिव्याणं पश्वर्थं यूपश्च परिव्याणस्याधारतां प्रतिपद्यमानः पश्वर्थः । तत्र किं युक्तमिति रशना पश्वनपक्रमणेन प्रयोजनवती । परिव्याणमपि तदर्थम् । यूपो ऽप्याधारतां प्रतिपद्यमानो रशनार्थतां प्रतिपत्स्यते । असौ यूपे या द्वितीया सा सप्तम्यर्थं लक्षयिष्यति । आधारतां च प्रतिपद्यमानस्य कृते तादर्थ्यप्रसङ्गाद्भविष्यति ।

यूपाङ्गं वा तत्संस्कारत्वात् ॥ २३ ॥

त्रिवृता यूपं परिवीयेतीप्सिततमत्वाद्यूपस्य तदर्था रशना । ननु परिव्याणस्य परा द्वितीया । तच्चाऽनूद्यते । पशावपि द्वितीयोपाकरणस्य न रशनायाः । न चार्थाक्षिप्तोपकरणेन, रशनापरिव्याणेन तु रशना ऽऽक्षिप्यते । तत्र यदि वा ऽनेन विहितं तदनूद्यते तेन नेदं सर्वथा यूपार्था रशना । एकयूप एकादश पशवो नियोज्या इति प्रतिपशु रशना कार्या । यथा पूर्वः पक्षः ।

सिद्धान्ते द्वैरशन्यमेवैसेतत्प्रयोजनं नेच्छन्ति । पश्वर्था ऽपि

सन्निपत्योपकारित्वाद्यूपे क्रियमाणैवोपकरिष्यति । यथा प्रयाजाः सत्कृताः। अतः पक्षद्वये ऽपि दूरशून्यम्। एतदप्ययुक्तम्। पश्वर्था ऽपि सत्यनपक्रमं कुर्वती पशोः सन्निपत्योपकरोति। यथा यूपे द्वितीया रशना समुच्चीयत एवं पशावपि समुच्चेष्यते। तस्माद्युक्तमेवेदं प्रयोजनम्।

गुणानां तूत्पत्तिवाक्येन सम्बन्धात् कारणश्रुतिस्तस्मात्सोमः प्रधानं स्यात् ॥ ४० ॥

न यागमात्रं विधीयते फले, किं तर्हि ज्योतिष्टोमशब्दवाच्यो यागः फले विधीयते। कुतः ? ज्योतिष्टोमसामानाधिकरण्यात्। कतरो ऽसौ ज्योतिष्टोमशब्दवाच्यः यस्य त्रिवृदादीनि ज्योतींषि सन्ति ? त्रिवृदादयश्च स्तोत्रेषु सन्ति ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोतीति। न च दीक्षणीयादीनां स्तोत्रसम्बन्धो ऽस्ति। तस्माद्यः स्तोत्रसम्बन्धी यागः फले विधीयते स च सोमयागः। एतदुक्तं स्तोत्रस्य ग्रहस्य च कालार्थं सम्बन्धो नाङ्गाङ्गिसम्बन्धः। इतरेतराश्रयं च स्यात्। यस्याङ्गत्वेन ज्योतींष्यवगतानि तानि फले विधीयन्ते। यश्च फले विधीयते तस्य ज्योतींष्यङ्गानि भवन्ति प्राक् फले विधानात्। ज्योतिःसम्बन्धो यद्यवगतः स्यात्, तत इतरेतराश्रयं न स्यात्। इह तु फलोत्तरकालं ज्योतिष्टोमसम्बन्धेन विशिष्टयागग्रहणम्। तस्माद्राजसूयन्यायेन सर्वाणि प्रधानानीति सूत्रयो ऽत्र परिहारः।

केचिदाहुः—ज्योतिष्टोमेन स्वर्गकामो यजेतेति फलसंयुक्तो याग उत्पद्यते उद्भिदादिवत्। तं द्रव्याभिलाषिणमनूद्य सोमो विधीयते। तस्य कथंभावाकाङ्क्षायां ग्रहणमप्यङ्गं स्तो-

ग्रमपि—ग्रहं वा गृहीत्वा चमसं वोन्नीयेति । कालार्थे ऽपि सम्बन्धे ज्योतींषि स्तोमा ग्रस्य सन्तीति मत्वर्थमुररीकृत्य नामधेयं प्रवृत्तम् ; ग्रथ वा नेदमुत्पत्तिवाक्यं तथा ऽपि न सर्वेषां विधिः । कथं ? यदिदं नामधेयं, किमिदं दीक्षणीयादीन्यपि वदत्युत नेति । नेति ब्रूमः । ज्योतींषि स्तोमा यस्य ज्योतिष्टोमः । न च दीक्षणीयादीनां केन चिदपि प्रकारेण ज्योतींषि स्तोमा ग्रवगताः । इतरत्र कालार्थे ऽपि सम्बन्धे लक्ष्यलक्षणत्वेनाऽस्ति सम्बन्धः । तमभिप्रेत्य ज्योतिष्टोमशब्दः प्रवृत्तः । तस्माज्ज्योतिष्टोमवाच्यं फले विधीयते । दीक्षणीयादीनां तु ग्रहस्यानङ्गत्वान्न साक्षात्सम्बन्धो न लक्ष्यलक्षणतया । तस्मान्न तेभ्यः फलम् । ग्रथ वा विना ऽपि लक्ष्यलक्षणत्वेनास्ति प्रणाड्या सम्बन्धः । ग्रहणं यागाङ्गम् । तस्याऽप्युपाकरणस्तोत्रयोरङ्गाङ्गिसम्बन्धो नास्ति । अस्ति त्वन्यः सम्बन्ध इति ।

इति चतुर्थाध्यायस्य चतुर्थः पादः ।
समाप्तश्च चतुर्थो ऽध्यायः ।



# अथ पञ्चमोऽध्यायः।

श्रुतिलक्षणमानुपूर्व्यं तत्प्रमाणत्वात् ॥ १ ॥

प्रयोजकाप्रयोजकलक्षणं वृत्तमिति। तदुत्तरं क्रत्वर्थपुरुषार्थजिज्ञासा प्रतिज्ञाता। सैवोपसंहर्त्तव्या। उच्यते। प्रयोजकाप्रयोजकमपि प्रतिज्ञातं, द्वयोरेकस्मिन्नप्युपसंह्रियमाण इतरल्लक्ष्यत एव। अथ वा प्रयोजकाप्रयोजकेसैवोपसंहर्त्तव्यम्। यतोऽसाधारणेन लक्षणभेदः। इतरथा द्वादशपादमेकं लक्षणं स्यात्। यावच्च शेषी नावधार्यते न तावच्छेषभावः। न हि सामान्येन व्यवहारः। कर्माण्यपि जैमिनिरित्यनेन कर्मणांशे फलशेषभाव उक्तः। अतः शेषत्वावगमेनैवास्य पुरुषार्थतायाः सिद्धत्वात् पुरुषार्थजिज्ञासा याऽध्यायभेदेनोपपद्यते। तेन सा तेनैव गतत्वान्न कार्या। असंयुक्तं प्रकरणादिति चानेन क्रत्वर्थलक्षणमुक्तम्। श्रुत्यादिभिर्यदसंयुक्तं फलवता च प्रकरणेन गृह्यते तत्क्रत्वर्थम्। प्रयोजकाप्रयोजकत्वं तु नोक्तं, तदिहोच्यते। अथातः क्रत्वर्थपुरुषार्थे श्रुत्यर्थपाठक्रमा उद्देशविषया एव। प्रवृत्तिकाण्डमुख्यक्रमास्त्वतिदेशविषया अपि प्रधानभूताः पदार्थाः। कर्ता गुणभूतस्तस्य प्रतिप्रधानमनुष्ठानं कुर्वतः क्रमः सिद्ध एव। क्रमनियमस्तु चिन्त्यते।

तत्र श्रुतिक्रमस्तावच्चिन्त्यते। तस्मिन्नाश्विनो दशमो गृह्यत इत्येतदप्युदाहरणं नोपन्यस्तं सुज्ञानत्वात्। दीक्षावाक्यं तु किंपरमिति चिन्त्यते। तदुदाहरणं व्याख्येयत्वेन। अध्वर्युर्गृहपति

दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यध्वर्योः कर्तृत्वं दीक्षा । सा च यजमानार्थेति त्रितयमप्यविधेयं प्राप्तत्वात् । ये यजमानास्त ऋत्विज इति यजमानत्वादेव ब्रह्मादीनामप्यविधेया दीक्षा । ततस्तं प्रतिप्रस्थातेति प्रतिप्रस्थातुर्विधानमिति चेत् ?

उच्यते । अध्वर्योः कर्मकर्तृत्वमापद्यते तत्र विरोधः । विरोधे च प्रधानं प्रवर्त्तते । अन्तरङ्गत्वात् प्रत्यक्षशिष्टत्वाच्च कर्मत्वस्य । तत्र कः कर्तेतीतरमन्यस्तेषां यतो विशेषः स्यादित्यध्वर्युसदृशः प्रतिनिधित्वेन प्रतिप्रस्थाता प्राप्तो न विधीयते । इतरेष्वध्वर्योरविरोधः । इतरेषु प्रतिप्रस्थातृविधिरिति चेत् ? उच्यते । न पूतः पावयेदिति प्रतिषेधान्नाध्वर्योः कर्तृत्वम् । एवं सर्वत्र योज्यम् । तस्मात्सर्वस्य प्राप्तत्वात् पदार्थोच्चारणाद्यः क्रमः प्रतीयते स एव विधीयते । ननु क्त्वाततःशब्दौ क्रमस्य विधातारौ । उच्यते । क्त्वाशब्दः पूर्वकालतासमानकर्तृतामात्रं च वदति नानन्तर्यम् । पूर्वं गृहपतेर्दीक्षा, उत्तरं ब्रह्मण इत्येतावदाह ।अन्तराले तु यदि पदार्थसहस्रमपि करोति, नास्ति पूर्वोत्तरबाधः । ततःशब्दो ऽपि परभावमात्रमाह; नानन्तर्यम् । प्रयोगवचनश्चाऽऽनन्तर्यमाकाङ्क्षति; न पौर्वापर्यम् । अतस्तदेव विधेयम् । तद्विधौ च पौर्वापर्यमनुवादः । तस्य च विधौ प्रयोगवचनेनाकाङ्क्षितत्वाददृष्टं कल्प्यम् । आनन्तर्यं पुनरपेक्षणीयम् । तस्माद्वर्णाः श्रोत्रेण गृह्यमाणा यं क्रमं प्रतिपादयन्ति, स एव विधीयमानत्वात् श्रुतिक्रमो ऽभिधीयते ऽन्यस्य पदार्थान्तरस्याऽविधानात् । यत्रानुपूर्व्येण पदार्था विधीयन्ते स पाठक्रमः । यथा "हृदयस्याग्रे ऽवद्यत्यथ जिह्वाया अथ वक्षस" इति । नन्वथशब्देन श्रुत्यैव क्रमो विधीयते । उच्यते । हृदयाद्यवदानं विधीयते । अतः पाठक्रमादेवानन्तर्यस्य सिद्धत्वादथशब्दो ऽनुवादः ।

आह । अथशब्दश्रवणादानन्तर्यं ऽवगते कस्मात्पाठक्रमो नानुवादः ? उच्यते । वृत्तादनन्तरस्य प्रक्रियार्थो ऽयम् । यावच्च पूर्वोत्तरपदार्थौ नावधृतौ तावन्नास्ति । तौ चेदवधृतौ, पाठादेव क्रमः सिद्ध्यति । श्रुतिरपीयं सापेक्षत्वात् दुर्बला । तस्मादेकप्रयोगवचनपरिगृहीतानां पाठादेव सिद्धत्वादथशब्दो ऽनुवादः । यत्र तु प्रमाणान्तरेणावधृतः कर्तव्यः पदार्थो ऽपरो न्येन, तत्राऽथशब्द आनन्तर्यं ब्रवीति यथा वेदमधीत्येतिवत् ।

अनियमो ऽन्यत्र ॥ ३ ॥

एको मम वसन्तमृतूनां प्रीणामीति प्रयाजानुमन्त्रणानां समुच्चयः पाठस्तावन्नास्ति शाखान्तराम्नानात् । श्रुतिरपि नास्ति, नाप्यर्थो नियामकः । यदि तमिस्त्रयाजः काठकानुमन्त्रणेनाऽनुमन्त्रितस्तनूनपात्प्रयाजे ऽपि प्रवृत्त्या तदेव प्रथममिति चेत् ? तन्न । ये हि सह चोदितास्तेषां प्रवृत्तिर्नियन्त्री । न चैते सह चोदिताः । तस्माद्द्वितीयादिष्वप्यनियमः । काण्डक्रमो ऽपि नास्ति । भिन्नदेशानां हि सहानुष्ठाने चोदिते कः प्रथम आरभ्यतामिति यस्यैव बोधकः पदार्थो विद्यते स प्रथमं क्रियते । इह त्वेतदपि नास्ति । मुख्यक्रमो ऽपि नास्ति, तत्र प्रधानक्रमेण नियमः क्रियते सह चोदितानाम् । इह हीदृशमपि नास्ति । अतो ऽनियमः ।

अर्थकृते वा ऽनुमानं स्यात्, क्रत्वेकत्वे परार्थत्वात्स्वेन त्वर्थेन सम्बन्धस्तस्मात्स्वशब्दमुच्यते ॥ ६ ॥

स्वाध्यायो ऽध्येतव्य इति स्वाध्यायाध्ययनेन भावयेत्किमिति तत्र विश्वजिद्वत्फलं न कल्प्यते । न च रात्रिसत्रन्याये-

नार्थवावतः फलम् । भवितव्यं च फलेन, तस्मात्स्वाध्यायाध्यापनेन यदवबोध्यते, तदत्र फलम् । पदार्थाश्चानवबुद्धा अनेन बोध्यन्ते क्रमश्च । तस्माद्यथा पदार्थस्वरूपमनवबुद्धमवबुध्यते, एवं क्रमो ऽप्यनवबुद्ध एव। अतः स्वाध्यायेन पदार्थज्ञानं भावयेत्क्रमज्ञानं चेत्यर्थः । तस्मात्स्वशब्दः ।

प्रवृत्त्या तुल्यकालानां गुणानां तदुपक्रमात् ॥ ८ ॥

वैश्वदेवं हुत्वा प्रजापत्यैश्चरन्तीति । अस्मिन्काले उपादीयमानाः सेतिकर्तव्यताका इतरेतरयुक्ताः सह कार्या इत्यवगते क्रमश्चिन्त्यते । तत्र प्रथमे पदार्थे ऽनियमो यतः कुतश्चित्कर्तव्यः । द्वितीयस्तु किं प्रथमो यत एवारब्धस्तत एवारम्भणीय उताऽनियम इति । श्रुत्यर्थपाठाभावादनियमे प्राप्ते प्रवृत्त्यैव नियमः । कुतः ? एतदुपक्रमात् । सर्वे हि पदार्थाः प्रधानकालान्न विप्रकृष्टव्याः । सहवचनं भवति पदार्थैः सह प्रधानं कर्तव्यमिति । एवं व्यवहितो ग्रन्थसम्बन्धः । कथं प्रधानकालान्न विप्रकृष्टव्या इत्यस्य हि सहवचनं भवतीत्युपपत्तिः। कथं भवन्तं भावयेद्यागेनेत्थमिति । तत्र यस्यामेव वेलायां स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव क्षणे करणेतिकर्तव्यते अपि व्याप्रियेते । तस्मात्रितयस्य फलकरणेतिकर्तव्यस्य यजेतेत्यनेन कर्तव्यतोच्यते । शब्दवृत्तं तु तावदेवं वस्त्वप्येवमेव । यदि भूतकालं भाव्यं भविष्यतिकाले करणेतिकर्तव्यते ततो ऽनयोः करणेतिकर्तव्यतात्वमेव न स्यात् । भविष्यतिभाव्ये भूते करणे य एव दोषः करणेतिकर्तव्यतयोरपि विप्रकर्षे ऽयमेव दोषः । अतः शब्दवस्तुभ्यामेककालतैषाम् । तत्र यदि फलस्य काला

ऽवगम्यते, ततस्तदीयेन कालेन करणेतिकर्तव्यतयोः परिच्छेदः स्यात् । इह तु स्वर्गस्याऽनवगतः कालः करणेतिकर्तव्यतयोस्त्ववगतः । तयोस्तु कालेन स्वर्गभवनकालः परिच्छिद्यते । ततः प्रधाने सेतिकर्तव्यता । एकैकस्मिन्क्षणे सहकर्तव्ये प्राप्त एकः कर्त्ता बहूनि प्रधानानीतिकर्तव्यतां वा समर्थः कर्तुं यौगपद्येनेत्यवश्यम्भावी विप्रकर्षः । ईदृशेन विप्रकर्षेण क्रियमाणेनापि सहैव पदार्थाः कृता भवन्ति । तत्र प्रधाननियमेन पदार्थाः प्राप्नुवन्ति । आग्नेयादीनां सकाशात्तत्र श्रुत्यर्थपाठैरनियमेन या प्रसक्तिः सा व्यावर्त्यते । अवश्यम्भाविनि विप्रकर्षे प्रधानं हि चिकीर्षितं कृतं वा तेषां निमित्तमित्यर्थतो ग्रन्थसम्बन्धः । अग्न्यन्वाधानादीनां करिष्यमाणं प्रधानं निमित्तम् । स्विष्टकृदादीनां तु कृतं तेनैव केचित्पदार्थाः क्षणव्यवहिता अपेक्ष्यन्ते, केचिद्द्वाभ्यां, केचिद्बहुभिः । प्रकृतावयमर्थ इति विकृतावप्ययमेव न्याय्यः । अग्न्यन्वाधानादि प्रागुपाकरणात्साधारणं सर्वेषां सकृत्कृतम् । उपाकरणादयो ऽपि सन्निपत्योपकारकाः साहित्येनानुभवितव्याः सहचोदितत्वात्तेषाम् ।

तदेवं यस्य प्रथममुपाकरणं क्रियते, तस्य पाठेन यद्यपि द्वितीयः पदार्थ उपस्थाप्यते तथा ऽपि सहवचनादि समर्थमाकाङ्क्षति सजातीयेन षोडशक्षणव्यवहितं द्वितीयं पदार्थम् । द्वितीयस्तु पञ्चदशभिरुपाकरणक्षणैरेकेन च नियोजनक्षणेन । एवं तृतीयादयो ऽपि सजातीयविजातीयव्यवहितानपेक्षन्ते । अन्त्यस्तु विजातीयक्षणव्यवहितमेवाऽपेक्षते । संनिपत्योपकारकानालोच्येदृश्यपेक्षा प्रधानानां भवति । अत आह यावद्भिर्नाऽव्यवहितः शक्यः पदार्थः कर्तुं तावद्भिर्व्यवधानमवश्यं, ततो ऽभ्यधिकैस्तु न व्यवधातव्यम् ।

यद्येकं पदार्थं कृत्वा द्वितीयो ऽपि तस्यैव क्रियेत सह-वचनं नोपपद्येत । एवं सर्वत्र योज्यम् । उच्यते । अनुमतानां व्यवधायकानां त्यागे न कश्चिदप्यधिको गुणो भवतीति । किमुक्तं भवति, अनुमतैर्व्यवधायकैःपरित्यज्यमानैर्दोष एव । अभ्यधिकैर्व्यवधाने श्रुतकरणं न्यूनैरप्यश्रुतकरणमेव । तस्मात्साहित्यसम्पत्तये यः क्रमो ऽपेक्षितः स द्विधा बाध्यते ।

सर्वमिति चेत् ॥ ९ ॥

यदि प्रधानमन्याङ्गानां विप्रकर्षो नेष्यते एवं तर्ह्येकैकः पशुरवान्तरप्रयोगवचनेन निरपेक्षः पदार्थकाण्डेन सम्बध्यताम् । उत्तरं तु सर्व एवैते इतरेतरयुक्ता उपादीयन्ते ।

नासमवायात् ॥ १२ ॥

ये ह्येकप्रयोगवचनपरिगृहीतास्तेषां क्रमो नियामकः । सौर्य इतिकर्तव्यतां गृह्णन्नैन्द्राग्ननिरपेक्षो गृह्णाति । अत ऐन्द्राग्नस्य येतिकर्तव्यता सा सौर्यस्याऽनङ्गम् । तस्मात्क्रमः परिच्छेदकत्वेन नापेक्ष्यते । अत आह—अङ्गाश्रयो हि नियमो भवितुमर्हति। अनङ्गमाश्रितस्य स्वयमङ्गता कल्प्येत । येषां पदार्थानामङ्गत्वं नावगतं तेषामङ्गता निष्प्रमाणिका कल्प्येत । अङ्गाश्रितश्च क्रमः ।

स्थानाच्चोत्पत्तिसंयोगात् ॥ १३ ॥

यद्यपि प्रथममन्त्रग्रहणे नियमस्तथाऽपि पूर्वो मन्त्रः पाठेनैवोत्तरं पर्युपस्थापयति । यथा मन्त्ररूपमाम्नायादवगम्यते,एवं क्रमविशिष्टमप्यवगम्यते । ब्राह्मणपाठेन तु पदार्था विधीयन्ते,इत्येतावान्विशेषः । क्रमावबोधस्तूभयोः स्वाध्यायाव-

गमात्तुल्यः । तस्मात्पाठक्रमेण तुल्यमित्यन्यदुदाह्रियते,सह पशूनालभत इति । श्रुत्यर्थपाठप्रवृत्तीनामभावादनियमः ।

अथाऽस्य प्रयोजनं नियमेन ततोऽग्नीषोमीयप्रकृतौ प्रथममनुष्ठानपाठादवगतमिहाऽपि तथैव भवितुमर्हतीत्येवं प्राप्ते ब्रूमः । आग्नेयस्य प्रथममुपाकरणम् । कथमाश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोतीत्ययुक्तमिवं व्याख्यानम् । न हि शास्त्राण्यतिदिश्यन्ते । यद्यप्यतिदिश्येरंस्तथाऽपि पाठक्रमो वा स्याच्छ्रुतिक्रमो वा । पाठक्रमे पुनरुक्तमेव, क्त्वाशब्देन पूर्वकालताऽभिधीयते नानन्तर्यम् । आनन्तर्याभावादग्नीषोमीये ऽपि प्राकृते पूर्वकालता ऽपि घटत एव । उच्यते । सह पशूनालभत इति न्यायात्सवनीयस्थाने तत्राश्विनो गृह्यमाण आग्नेयं शक्नोत्यवबोधयितुम् । स्वस्थानाद्धि चलितत्वान्नास्त्यवबोधकं प्रमाणमग्नीषोमीयस्य । तस्मान्नानेन वाक्येन शास्त्रातिदेशं भाष्यकार आह । न च वचनेन कृतं क्रमं; किं तर्ह्यनेनाश्विनकालं लक्षयति । स च शक्नोति सवनीयमेव बोधयितुमित्येतावदेवाभिमतम् । अग्नीषोमानुबन्ध्ययोरनियमे प्राप्ते प्रकृतावनुबन्ध्यात्पूर्वमग्नीषोमीयो दृष्ट इहाऽपि तथैव भवितुमर्हति । नन्वितरत्राऽपि पाठक्रमो बाध्यते । बाध्यताम् । तस्य हि प्रतिषेधार्थः सहशब्द इति को ऽभिप्रायः ? पूर्वः पदार्थः समाप्यमान उत्तरं बुद्धावभिनिवेशयतीत्ययं पाठक्रमः । अग्नीषोमीयसवनीययोश्च पौर्वापर्यमात्रं तद्बाध्यते । यद्येवंविधं पाठक्रमं ब्रवीषि स बाध्यते । सहशब्दश्रवणात्सवनीयस्योपस्थापकमस्ति नेतरयोः ।

मुख्यक्रमेण वा ऽङ्गानां तदर्थत्वात् ॥ १४ ॥

श्रुत्यर्थपाठप्रवृत्तिकाण्डैर्नियमस्याऽभावात्प्रथमे पदार्थे नि-

यमः । एवं प्राप्ते ब्रूमः । स्त्रीदेवत्यस्य प्रथमं याज्यानुवाक्ये तस्यैव प्रथमं प्रदानं, ततः स्त्रीदेवत्यस्यैव प्रथमः पदार्थ आरम्भणीयो मुख्यक्रमेण । कथं सहचोदितत्वादेकक्षणव्यवहिता-न्पदार्थानपेक्षते ? तत्र पुंदेवत्यस्य प्रथमः पदार्थो यद्यारभ्यते, ततः प्रवृत्त्यैकक्षणव्यवहितता स्त्रीदेवत्यस्य स एव पदार्थः क्रियते। एवं द्वितीयादिष्वपि पदार्थेषु प्राप्नोति। तत्र प्राक् स्त्रीदेवत्यस्य प्रदानाद्यः पदार्थस्तस्मिन्प्रवृत्त्या स्त्रीदेवत्यस्य कृते ततो ऽनन्तरमेव स्त्रीदेवत्यस्य पाठक्रमेण प्रदानं प्राप्नोति । अत आनन्तर्येण स्त्रीदेवत्यस्य द्वौ पदार्थौ प्राप्नुतः । तत्रैकक्षणव्यवहितता बाध्येत या सहवचनेनापेक्षिता इतरस्यापि ताभ्यां व्यवहितौ सर्वेषामप्येकक्षणविप्रकर्षः । तस्मात्प्रथमं स्त्रीदेवत्यस्य धर्माः । अत आह यैः पदार्थैर्व्यवधानं सामर्थ्यादभ्यनुज्ञातं, तेभ्यो ऽधिकैरपि व्यवधानं स्यात् ।

प्रकृतौ तु स्वशब्दत्वाद्यथाक्रमं प्रतीयेत ॥ १५ ॥

आज्यनिर्वाप इहोदाहरणम् । पूर्वेण न्यायेन तथैव प्राप्ते ऽपवाद आरभ्यते । पाठक्रमेणानुष्ठानं स्वाध्यायेनावगतत्वात्प्रत्यक्षम् । सह पदार्थाः कर्त्तव्या इति पदार्थेष्वयं धर्मः सहत्वं नाम । तत्र प्रयोगवचनेन सहत्वमवबोध्यते। सहत्वमवबोधयदन्यथाऽनुपपत्त्या क्रममप्यनुमापयति । प्रधानासत्त्वे तत्र यदश्रुतक्रमानुमानं तत्प्रत्यक्षेण क्रमेण बाध्यते । अतो यथाक्रमं व्यवस्था । मुख्यक्रमे प्रयोगवचनेनैकवाक्यता सूक्ष्मा । अश्रुतः क्रमः कल्प्यत इत्यर्थः ।

मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ॥ १६ ॥

आग्नेयस्य पूर्वो मन्त्रपाठः। अग्नीषोमीयस्य तु पूर्वो ब्राह्मणपाठः। तत्र ब्राह्मणपाठात्किमग्नीषोमीयस्य पूर्वं धर्मा उत मन्त्रपाठादाग्नेयस्येति। किं प्राप्तं, पूर्वो मन्त्र उत्तरं पर्युपस्थापयति। समिधो यजतीति समाप्यमानस्तनूपातमुपस्थापयति। अतो द्वयोरपि समाम्नायपाठयोः प्रत्यक्षत्वादनियम इति प्राप्ते मन्त्रपाठो बलीयान्। कुतः? समिधो यजतीत्यनेन पदार्थो विहितः। सो ऽनुष्ठानवेलायां येन वाक्येन विहितस्तद्वाक्यं स्मारयति। तेन वाक्येन स्मृतेनानुष्ठानवेलायां पदार्थः स्मारितः सन्ननुष्ठीयते। द्वितीयं पदार्थं न स्मारयति; किं तर्ह्यनुष्ठानोत्तरकालं यो ऽसौ कृतः पदार्थस्तमालोचयति। स चालोच्यमानो येन ब्राह्मणखण्डेन विहितस्तत्स्मारयति। तच्च स्वादुत्तरं ब्राह्मणखण्डकं स्मारयति पाठात्। तद्ब्राह्मणं पुनः पदार्थं विदधाति। अनुष्ठानवेलायां तावत्स्मारकमपेक्षितव्यम्। अत्र विप्रकर्षः। मन्त्रः पुनः परिसमाप्यमान उत्तरं मन्त्रं पर्युपस्थापयति। स च पर्युपस्थाप्यमान उत्तरं पदार्थं पर्युपस्थापयन्नेव पर्युपतिष्ठते। तस्मात्तत्रापेक्षाभावान्नास्ति विप्रकर्षः। उत्पत्तिदेशः स इति पूर्वः पदार्थो विहित उत्तरः पदार्थो विहित इति विधीयमानानां यः क्रमस्तेनार्थवान्ब्राह्मणपाठक्रमो नानुष्ठानक्रमेणेति।

## तद्वचनात्तु विकृतौ यथाप्रधानं स्यात् ॥ १७ ॥

तृतीय आग्नेयविकारो, द्वितीय उपांशुयागविकारः, प्रथमो ऽग्नीषोमीयं विकरोति। तत्र किं प्रथममाग्नेयविकारस्य धर्माः कर्तव्याश्चोदकसामर्थ्यादुतोपांशुयाजविकारस्य प्रयोगवचनसामर्थ्यात्? किं प्राप्तं? प्रधानानामत्र प्रत्यक्षपाठान्मु-

ख्यक्रमो बलीयान् । इतरश्चोदकप्राप्तत्वादानुमानिकः पाठः । तस्मात्प्रत्यक्षेण प्रयोगवचनेन परिगृहीतः क्रमो बलवान् ।

विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति ॥ १८ ॥

मुख्यप्रवृत्तिकक्रमौ प्रयोगवचनाश्रयत्वाद् दुर्बलौ । श्रुत्यर्थपाठकाण्डानां चोदकाश्रितत्वाद्बलीयस्त्वम् । किं कारणं कथमित्याकाङ्क्षायामुत्पन्नायां या पदार्थालोचना ऽयमिति, सोत्पत्तिरित्योत्पत्तिस्तादृशानवधृतान्प्रापयति । तदुत्तरकालं प्रयोगवचनः समीक्ष्य कृत्स्नमुपसंगृह्णाति । स उपसंगृह्णन् यादृशाश्चोदकेन प्रापितास्तादृशानुपसंगृह्णाति । ते च विशिष्टक्रमका एव प्राप्यन्ते । अतः प्रत्यक्षस्याऽपि चोदकादुत्तरकालमात्मलाभाद्दुर्बलत्वम् । यश्च यस्य सकाशादात्मानं लभते, स तमसमर्थो बाधितुम् । यावदुत्पत्तिर्नास्ति न तावत्प्राप्तिः, यावत्प्राप्तिर्नास्ति न तावदङ्गत्वम्, अङ्गत्वे चावधृते सङ्ग्रहः । तस्मात्प्रयोगवचनस्य पश्चात्कालीनत्वात्तदाश्रयो यः क्रमः स आश्रयदौर्बल्याद्दुर्बलः । अत आह उत्तरकालः पूर्वकालप्राप्तं न बाधितुमर्हति प्रत्यक्षो ऽपि सन् बहिरङ्गत्वात् ।

विकृतिः प्रकृतिधर्मत्वात्तत्काला स्याद्यथाशिष्टम् ॥ १९ ॥

सर्वविकृतीनां सद्यःकालत्वं वक्ष्यति । अतस्तेनैव गतत्वादनारभ्यमिदम् । उच्यते । द्वैयहकाल्यमनुगृह्णन्पौर्णमासीश्रवणं बाधते । यदि हि तत्र द्वे पौर्णमास्यौ स्यातां स्यादेवं द्वैयहकाल्यम् । इह तु द्वौ प्रातःकालौ विद्येते । तमनुगृह्णन् चोदकप्राप्तं न शक्नोति बाधितुम् । अतो द्वैयहकाल्यं भविष्यति ।

अपि वा क्रमकालसंयुक्ता सद्यः क्रियेत तत्र विधे-

रनुमानात्प्रकृतिधर्मलोपः स्यात् ॥ २० ॥

प्रातर्मध्यन्दिने सायमिति वाक्यादुच्चरितादेकस्मिन्नेवाऽहनीति प्रतीतिर्भवति । अनुच्चरितात्तु न भवति । तस्मात्प्रत्यक्षेण वाक्येन चोदकप्राप्तमानुमानिकं बाध्यते द्वैयह्नकल्पम् ।

कालोत्कर्ष इति चेत् ॥ २१ ॥

इतर आह–उपपदप्रकरणार्थैस्तस्मिन्नेवाह्नीत्यनुपात्तत्वाद् भ्रान्तिरेषा ।

न सम्बन्धात् ॥ २२ ॥

प्रातर्मध्यन्दिन इति प्रयोगपुनःश्रुतिः । स च प्रयोगः प्रातः काले विधीयते । तत्र यदि पूर्वस्मिन्प्रातःकाले प्रक्रम्योत्तरस्मिन्परिसमाप्येत तथा सति प्रातर्मध्यन्दिनापराह्णेषु साङ्गानि न कृतानि न स्युः । तत्राऽङ्गानां प्रधानकालता बाध्यते। तस्माद्यस्मिन्नहनि प्रातरारम्भस्तस्मिन्नेव परिसमाप्तिः ।

अङ्गानां मुख्यकालत्वाद्यथोक्तमुत्कर्षे स्यात् ॥ २३ ॥

प्रयाजानुयाजानामपकर्षोत्कर्षौ विहितौ तावन्मात्रमेवोत्कृष्यते । तदन्तं तदादि वा ? तावन्मात्रमिति प्राप्तम् । कुतः ? प्रधानप्रत्यासत्तिर्ह्यङ्गान्यपेक्षते । तत्र वचनाद्यस्यापकर्षस्तावन्मात्रमेवापकृष्येत । अवशिष्टं प्रधानासत्त्यैव यथावस्थितम् ।

तदादि वा ऽभिसम्बन्धात् तदन्तमपकर्षे स्यात् ॥ २४ ॥

पूर्वः पदार्थ उत्तरस्योपस्थापकः प्रकृतौ । तेनेहाऽपि तथैव प्राप्नोति । प्रयोगवचनो हि यः प्रधानासत्तिं प्रापयति । सा ऽवधृत-

स्वरूपायां यादृशी प्रधानासक्तिस्तावद्दृश्येव प्रधानासक्त्या निराकाङ्क्षीभवति, न त्वन्यादृशीं प्रधानासक्तिं शक्नोति कल्पयितुं प्राकृतबाधेन।

प्रवृत्त्या कृतकालानाम् ॥ २५ ॥

प्रातरनुवाके प्रैषं प्रदायाऽनन्तरं प्रतिप्रस्थातः सवनीयानभिनिर्वपस्वेति प्रैषो दत्तः। बहिःपवमाने स्तुते ऽग्नीदग्नीन्विहरेति पुनः प्रैषः। तत्र प्रैषसम्बोधितो होता प्रातरनुवाके प्रवृत्तः। अध्वर्युरुपास्त्यां व्यापृतो वचनादाप्रातरनुवाकपरिसमाप्तेस्तस्य व्यापृतत्वात्प्रोक्षणादिष्वसम्भवः। तस्मिन् काले एककालोपनिपातादन्यकर्तृत्वे ऽवगते कर्तृविशेषश्चिन्त्यते। किं प्रतिप्रस्थाता प्रागलङ्करणाद्ये पदार्थास्तेषु विधीयत निर्वापेण तां लक्षयति। स निर्वापो ऽध्वर्युकर्तृत्वाल्लक्षणात्वत्त आश्रीयमाणो यावदेवाध्वर्योर्व्यापृतता, तावदेव लक्षयति। अलङ्करणादूर्ध्वं क्षणिकत्वादध्वर्योर्न लक्षयति। तस्मान्निर्वापादीनां किं प्रतिप्रस्थाता कर्तोतालङ्करणात्प्राग् ये पदार्था ऊर्ध्वं निर्वापात्तानलङ्करणेन लक्षयित्वा अग्नीत्कर्ता विधीयते? किं प्राप्तं, लक्षणाऽविशेषादनियमः। प्रतिप्रस्थाता ऽऽग्नीध्रो वेत्येवं प्राप्ते ब्रूमः। समकालावुभौ पदार्थावध्वर्युकर्तृकौ। तत्र विरोधादेकत्राध्वर्युर्नियतः। उपासने प्रोक्षणादिष्वितरमन्यस्तेषां यतो विशेषः स्यादिति प्रतिप्रस्थाता स्यात्।

किं च निर्वापेण प्रोक्षणमुपस्थाप्यते न त्वलङ्करणेन। किं प्रातरनुवाककाले सवनीयान्निरूप्य प्रचरणीहोमादयः सौमिकाः पदार्थाः कर्त्तव्या उत पौरोडाशिकाः प्रागलङ्करणादिति फलेनायं संशयः। अयुक्तमिदं व्याख्यानम्। समाख्यानात्सर्वस्याध्वर्युकर्तृकता। यथा वा सहावघ्नन्ति सह पिषन्त्येककालत्वादितर

इति प्राप्नोति । ईदृशमपि नास्ति । न हि प्रातरनुवाकः प्रोक्षणादयश्च प्रागलङ्करणात्सहानुष्ठेया इति वचनमस्ति, येनाध्वर्योरुपास्यां नियतत्वादितरेषां कर्ता चिन्त्यते ।

अभ्युपेत्य ब्रूमः । अस्तु समानकालता । तथा ऽपि प्रागलङ्करणान्नैव प्रतिप्रस्थाता । कथं ? पौरोडाशिकाः पदार्थाश्चिरेण समाप्यन्ते, शीघ्रं प्रातरनुवाकः । तत्र येषु समानकालता नास्ति तेष्वविरोधात्समाख्यानादध्वर्युरेव कर्ता । निर्वापस्य प्रोक्षणादींल्लक्षयतः । किं कृतो ऽवधिः ? साक्षादेव हि स प्रयोगं लक्षयति । अथ विरोधात्कांश्चिदेव लक्षयिष्यतीति चेत् ? न । नास्त्यस्य लक्षयतः परिमाणम् । सम्बन्धाल्लक्षणा प्रवर्तते । स च सर्वेष्वविशिष्टो ऽस्य । किं प्रातरनुवाककाले सवनीयान्निरूप्येत्येवमादिफलत्वेन नोपपद्यते । किं प्रथमं प्रचरणीहोमादीनध्वर्युः करोत्युत प्रोक्षणादीनितीदृशं सम्भवति निरूपणम् । प्रतिप्रस्थाश्च ऽऽग्नीध्रकर्तृत्वे ऽविद्यमाने प्रयोगवचनपरिगृहीतानां पौर्वापर्यक्रम एव चिन्त्यते । प्रातरनुवाकानन्तरकालं प्रोक्षणादीन्करोत्युत प्रचरणीहोमादीनित्ययं संशयः ।

तत्रोभयोरप्यध्वर्युकर्तृत्वादनियम इत्येवं प्राप्ते ब्रूमः । निर्वापस्येत्यनेन प्रैषो दत्तः । तस्मात्प्रैषे स्वतन्त्रः कर्ता । प्रैषे तु हेतुकर्तृत्वाद्द्वितीयः पदार्थः प्रोक्षणादिर्बुद्धौ सन्निधीयते । प्रचरणीहोमादीनां नास्ति सन्निधायकः पदार्थः । नन्वभूदुषाउपत्पशुरित्यनेन प्रचरणीहोमः पर्युपस्थाप्यते । उच्यते । भिन्नकर्तृकावेतौ । भिन्नकर्तृकत्वाच्च पूर्वः पदार्थो नोत्तरमभिनियच्छति । न चानयोरङ्गाङ्गिसम्बन्धो येनेयमृक् प्रचरणीहोमस्य करणभूता स्यात् । अतो ऽभूदुषादुपत्पशुरित्यस्य प्रचरणीहोमस्य च कालार्थः सम्बन्धः । तस्मात्प्रैषः प्रातरनु-

वाककाले प्रोक्षणादयः प्रातरनुवाकादुत्तरत्र ।

एतदप्ययुक्तम् । होतुः प्रैषं दत्त्वा ऽनन्तरमेव निर्वापप्रैषो वक्तः । तस्य चोपसि कुर्वतो निर्वापसंस्कारो ऽपैति । अतो नाऽसौ प्रोक्षणादीनुपस्थापयति । अभूदुषा तु कालार्थे ऽपि सम्बन्धे ऽस्मिन्काले प्रचरणीहोम इति शक्नोत्यवगमयितुम् । यद्यस्मिन्प्रचरणीहोमादयो न क्रियेरन्कालसम्बन्धो बाध्येत । अतो ऽन्यथा वर्ण्यते । पाक्षिकाध्वर्योरुपात्तिर्यतरस्मिन्पक्षे नास्ति तत्र विचार्यते । किं प्रचरणीहोमादिषु प्रवर्ततामुत प्रोक्षणादिष्विति । तत्र निर्वापे प्रतिप्रस्थाता कर्त्ता । अतो निर्वापो ऽध्वर्योर्न प्रोक्षणमुपस्थापयति भिन्नकर्तृत्वात् । प्रचरणीहोमस्यापि प्रैषेण व्यवधानान्नास्त्युपस्थापकम् । तस्माद्द्वयोरप्युपस्थापकाभावादनियम इत्येवं प्राप्ते ब्रूमः । प्रैषे स्वतन्त्रः कर्ता, प्रैषार्थे हेतुकर्ता । तस्मान्निर्वापे हेतुकर्तृत्वात्प्रोक्षणमुपतिष्ठते । इतरत्र नास्ति प्रमाणम् ।

शब्दविप्रतिषेधाच्च ॥ २६ ॥

अलङ्कुर्वित्युक्तः प्रोक्षणादीन्प्रतिपद्यते । न प्रोक्षणादीन्कुर्यात्किं तर्ह्यध्वर्युणा क्रियमाणान्प्रतीक्षेतेत्यर्थः । नास्याग्नीधः कर्तृत्वे प्रमाणम् । तत्राऽलङ्करणकाले प्राप्तकालतावचनो लोडन्ते ऽनुग्रहीष्यते । अयुक्तमिदम् । एवं हि पूर्वमुक्तं, प्रैषलोट् न प्राप्तकालतायामलङ्करणस्य प्राप्तः कालस्तत्र चेति वाक्यं भिद्यते । उच्यते । यद्यसावर्थो वर्त्तमानकाले ऽस्ति ततः प्रैषेण संस्कृतो ऽनन्तरमेवाभ्रष्टसंस्कारैः प्रैषे ऽर्थे प्रवर्त्तते । एवं प्रैषस्य दृष्टार्थता । इतरथा प्रैषस्यानर्थक्यम् । अतः प्रैषसामर्थ्यात्प्राप्तकालता ऽवगम्यते सा बाध्यते ऽकृतेषु प्रोक्षणादिषु ।

असंयोगात्तु वैकृतं तदेव प्रतिकृष्येत ॥ २७ ॥

अग्नीषोमीयप्रणयनोत्तरकालं यूपस्य च्छेदनादयः पठ्यमाना वचनेनापकृष्यमाणाः सौमिकानपकर्षन्ति । कुतः ? भिन्नप्रयोगवचनपरिगृहीतत्वात् । अभिन्नप्रयोगवचनपरिगृहीतेषु हि क्रम आकाङ्क्ष्यते । क्रमाच्च पूर्वः पदार्थ उत्तरमुपस्थापयति । तस्मात्पूर्वः पदार्थो यो ऽपकृष्यते सो ऽन्यानपकर्षति पाठस्यात्राऽनङ्गत्वात् ।

प्रासङ्गिकञ्च नोत्कर्षेदसंयोगात् ॥ २८ ॥

यद्यपि प्रकृतावनुयाजोत्तरकालौ दाक्षिणाग्निकौ होमौ दृष्टौ तथा ऽप्यनुयाजोत्कर्षेनोत्कृष्येते । कुतः ? असंयोगात् । कथमसंयोगः ? उपमितलक्षणप्रापणेनाग्नीषोमीयादयं धर्मान्गृह्णाति । तत्राऽयं सवनीयस्त्रिष्वपि सवनेषु विप्रकृष्यते । इतिकर्त्तव्यता चास्य तद्विप्रकर्षादेव विप्रकृष्यते । पदार्थप्रयोजनानामेककालत्वाद्यावत्क्रतूपकारो निर्वर्त्यते तावदग्न्यन्वाधानादिजनित उपकार आशंते । यावत्पशोरन्त्यः पदार्थस्तावदाद्यः । अन्त्यो ऽपि यावदाद्यः । एवं चिन्त्यते । पशौ पशुपुरोडाशो मध्ये निपतन्नुपमितलक्षितप्रापणेनाग्नीषोमीयपुरोडाशाद्यागगतं व्यापारमभिलषंस्तमुत्पादयति, प्रापयति, तांश्च समस्तान्समीपे प्रयोगवचन उपसंगृह्णाति । तत्र पशुना प्रयुक्तस्य यागगतव्यापारस्य समीपे गृहीतत्वात्समीपे न करोति, उपसंगृह्णाति तु पशुना । ये न समीपे कृतास्तेषां पिष्टलेपादीनामुत्पत्तिप्राप्त्युपसङ्ग्रहानपेक्षते । तत्रासौ व्यापारो ऽपूर्वमन्तरेण नोपपद्यते । अपूर्वाण्यपि पदार्थैर्विना न सन्तीत्यन्यथाऽनुपपत्त्या पदार्था आक्षिप्यन्ते । यांस्तु प्रसङ्गेनोपकारान्गृह्णाति तेषु तस्य व्यापारो नास्ति । येनैव ते प्रयुक्तास्तस्यैव तत्र व्यापारः । पदार्थानां च

क्रम आकाङ्क्ष्यते न पदार्थप्रयोजनानाम्। तस्माद्दाक्षिणाग्निकमहोमयोरनुयाजानां च नास्ति सः। अनुयाजजनितस्तेनोपकारो गृह्यते न पदार्थाः। अतः परकीयैः पदार्थैरुत्कृष्यमाणैर्न दाक्षिणाग्निकैर्होमावुत्कृष्येते।

अत्र ग्रन्थः। पदार्थानां च क्रमो भवति न पदार्थप्रयोजनानाम्। यौगपद्येन हि पदार्था उपकुर्वन्तीति वक्ष्यामः। कथमित्याकाङ्क्षायां यौगपद्येनोपकारा गृह्यन्ते। तत्र यस्मिन्क्षणे एकः सम्बध्यते तस्मिन्नेव द्वितीयादयोऽपि। तस्मात्कथम्भाववेलायां नास्ति क्रमः। अत्रापरो ग्रन्थः। पदार्थानां चोत्पत्तिः क्रमवती पृथक्शब्दत्वादुत्पत्तेः। न पदार्थप्रयोजनस्य। पदार्थग्रहणे हि क्रमो भवति। शब्देन हि पदार्थोऽवबोध्यते। एवं द्वितीयस्तृतीयोऽपि। अत्रावश्यं भवितव्यं क्रमेणानुष्ठानावबोधेन यः पुनरुपकारस्तदीयः स एव तस्मिन्गृह्यमाणे कीदृशः क्रमः? अतो न प्रयोगवचनापरिगृहीतानां प्रयोगमध्यपतितानामप्यस्ति क्रमः। तस्मात्स्वस्थानावेव दाक्षिणाग्निकौ होमौ।

तथाऽपूर्वम् ॥ २९ ॥

पूर्वेद्युरमावास्यायां वेदिं करोतीति वेदिरपकृष्यमाणा हविरभिवासनं नाऽपकर्षति। कुतो हविरभिवासनादुत्तरकालं दर्शपूर्णमासप्रकरणादुभयोरपि सामान्येन प्राप्यमाणं विशेषवचनेन वेदिमात्रमेवापकृष्यते? सामान्यपाठः पौर्णमास्यां कृतार्थः। अग्न्यन्वाधानव्रतचरणादेः सामान्यपाठ एवं वेदेश्चोत्तरः। तस्मात्सामान्यावबोधो विशेषेण बाध्यते।

सान्तपनीया तूत्कर्षेदग्निहोत्रं सवनवद् द्वैगुण्यात् ॥ ३० ॥

भिन्नप्रयोगवचनपरिगृहीतानामपि पौर्वापर्यं चिन्त्यते । यथा प्रोक्षणादिभिः प्रचरणीहोमादय उत्कृष्यन्ते, पूर्वो हि पदार्थ उत्तरमभिनियच्छति, एवमिहापि ।

असम्बन्धात्तु नोत्कर्षेत् ॥ ३२ ॥

एकप्रयोगवचनपरिगृहीतानामुत्कर्षः ।

प्रापणाच्च निमित्तस्य ॥ ३३ ॥

काले हि निमित्ते कर्म विधीयमानं तस्मिन्नेव काले कर्त्तव्यम् । अङ्गप्राप्ते जघन्यः कालविधिर्बाध्यतामिति चेत् ? सतिकर्त्तव्यताके ऽत्र प्रयोगे ऽवधृते पश्चात्कालसंयोगः । तस्माज्जघन्यत्वादसौ बाध्यताम् । इतरस्त्वाह नाङ्गमात्रं कालः । किं तर्हि निमित्तम् ।

षोडशी चोक्थ्यसंयोगात् ॥ ३५ ॥

ननु समयाध्युषिते स्तोत्रमित्यनेन विशेषवचनेन षोडशिनो य उक्थ्यपरभावः स बाध्यते । उच्यते । उक्थ्यपरभावः समयाध्युषितत्वं चोभयमप्यनुग्रहीतुं शक्यते । तस्मादविरोधात्सामान्यविशेषबाधो नास्ति । न च दैवान्मानुषाद्वा प्रतिबलादित्यस्मिन्सामान्यविशेषबाधो नान्यत्र । शास्त्रं हि न दैवं मानुषं वा प्रतिबलमपेक्ष्य सामान्यविशेषबाधं करोति । ग्रहो यागस्य साक्षादुपकुर्वन्नन्तरङ्गः सन्निपत्योपकारित्वात् । स्तोत्रं पुनर्यागस्य न साक्षादुपकरोति । अतो ऽनयोः कालयोरन्तरङ्गस्य कालो ऽनुग्राह्यः । तस्मादाह । स्तोत्रक्रममनुरुध्यमानस्य प्रधानक्रमो विरुध्यते । अथ वा उक्थैरुत्कृष्यमाणैर्याग एवानेन प्रकरेणोनोत्कृष्यते । षोडशियागस्याप्युक्थपरत्वात् । ग्रहणे गृह्यमाणे न यागः प्रक्रान्तो भवति । यथा ऽवदानेनोक्थ्ययागाभ्यासोत्तरकालं षोडशियागाभ्यासस्य कालः । अतस्तस्य कालेनाङ्गस्य कालो बाध्यते ।

इति पञ्चमाध्यायस्य प्रथमः पादः ।

# अथ द्वितीयः पादः ।

संनिपाते प्रधानानामेकैकस्य गुणानां सर्वकर्म स्यात् ॥ १ ॥

आरादुपकारकेषु भेदेन क्रियमाणेषु मौर्य्यादीनामेव तन्त्रभेदः स्यात्। तस्मात्सन्निपत्योपकारका उदाहरणम् । प्रधानकालत्वादङ्गानामेकैकस्मिन्गुणकाण्डमपवृज्यात् । इतरथा हि पदार्थानुसमये प्रधानाद्विप्रकृष्येरन् । प्रकृतौ च पूर्वस्मात्पदार्थादुत्तरः । एवमत्राऽपि ।

सर्वेषां वैकजातीयं कृतानुपूर्वत्वात् ॥ २ ॥

यद्येकैकस्मिन्गुणकाण्डमपवृज्येत तथा सति सहप्रयोगात्सहेतिकर्त्तव्यतानुभवितव्येत्येतद्बाध्येत । तस्मात्पदार्थानुसमयः। प्रकृतौ पूर्वं पदार्थं कृत्वोत्तरः कार्य्य इत्येतावदभिसंहितं न त्वनन्तरमेवेति । अर्थादेकत्वात्पशोरानन्तर्य्यं जातम् । इह सहभावात्पदार्थाभ्यासो ऽवश्यंभावाद्द्वितीयः पदार्थ इहाऽपि पाठेन पर्य्युपस्थापितः क्रियते । तस्मात्पदार्थानुसमयः । स्थित एतस्मिन्प्रवृत्तिक्रमस्यारम्भः ।

कारणादभ्यावृत्तिः ॥ ३ ॥

इति न दृष्टान्तो युक्तो नाऽपि परिहारः । अश्वप्रतिग्रहे चतुष्कपाला विधीयन्ते । यावत इत्यनेनाऽश्वेयत्तोच्यते तावत इति पुरोडाशेयत्ता । एकत्र निमित्तेयत्तेतरत्र नै-

मित्तिकेयत्ता । वारुणानिति देवतासम्बन्धो विधीयते । कतरेणा-ऽत्र साहित्यं विधीयते ? तस्माद्भिन्न एवैषां क्रमः । क्रतूपकारस्त्वेकः । यथा प्रयाजानुयाजानां न तन्त्रेणेतिकर्त्तव्यता, एवमिहा-ऽपि वारुणानित्यनेन साहित्यमिति चेत् ? तन्न । देवता ह्यनेनो-च्यते । बहुत्वं श्रूयमाणं यागभेदं कुर्य्याद्यथा प्राजापत्यानिति । तत्रैकस्मिन्नश्वप्रतिग्रहे बहवो वारुणाः प्राप्नुवन्ति । पुनरपि नै-वास्ति साहित्यम् । तस्माद्वचनान्तरमेषां साहित्यप्रतिपादकं द्र-ष्टव्यमिति ।

मुष्टिकपालावदानाञ्जनाभ्यञ्जनवपनपावनेषु चैकेन ॥४॥

चतुरवत्तं जुहोतीत्यस्य विधीयमानत्वादवदानादिः प्रदा-नान्त एकः पदार्थः । तस्माद् द्विर्हविषो ऽवद्यतीति सङ्ख्याविशिष्ट-मववदानं विधीयते इत्येतदसत् । चतुरवत्तं जुहोतीत्यनेनाऽर्थप्रा-प्तावदाने सङ्ख्यामात्रं विधीयते । तस्मादुभयोः पक्षयोः पदा-र्थावयवो ऽयम् । एकमुष्टिग्रहणे कृते यतीभावः पर्य्यवस्यति । द्विती-यादयो ऽपि पुनः प्रयत्नेनैवाऽऽरभ्यन्ते । तस्मात्प्रयत्नभेदाद्भि-द्यते निर्वापः । पृथक्करणं सामर्थ्यादेव प्राप्तं न विधीयते । न ह्यपृथक्कृते यागः सम्प्रवर्तते । अतो निर्वापे यः प्रत्ययः स सङ्ख्यामुष्टिसम्बन्धं विधत्ते । मुष्टिसङ्ख्ययोः सम्बन्धादन्तरङ्गः सम्बन्धः ।

सर्वाणि त्वेककार्यत्वादेषां तद्गुणत्वात् ॥ ५ ॥

चतुः सङ्ख्याविशिष्टो निर्वापो विधीयते । न च नियो-गतो निर्वापः प्राप्नोति येन न विधीयते । कारकाणां क्रि-यासम्बन्धः श्रौतः । यदि च सङ्ख्या क्रियां प्रति न विधीयेत

ततो ऽक्रियार्थत्वादनङ्गं स्यात् । निर्वापे चाविधीयमाने वाक्यभेदादिदोषो भवति । तस्मादुभयविशेषणविशिष्टो निर्वापो विधीयते । एवं सर्वेषु योज्यम् । पूर्वस्मिन्पदार्थानुसमये स्थिते प्रसङ्गेन पदार्थस्वरूपनिरूपणमायातम् ।

संयुक्ते तु प्रक्रमात् तदङ्गं स्यादितरस्य तदर्थत्वात् ॥९॥

चतुरवत्तं जुहोतीत्येतद्विधीयते । कतरत्तदित्यभिघारणद्वयं द्विरवदानं च । अयमेवंविधः पदार्थो होमान्तः । न तावदवदानं विधीयते येन पदार्थभेदः स्यात् । विधीयमाने ऽप्यदृष्टार्थता स्यात् । एवमभिघारणे ऽपि पदार्थभेदविवक्षया विधीयमाने ऽदृष्टार्थतैव । चतुरवत्तसंपादनाय विधीयमाने तु दृष्टार्थता ।

पशुगणे तस्य तस्याऽपवर्जयेत् पश्वेकत्वात् ॥ १० ॥

यद्यपि सान्नाय्ये पदार्थावयवो ऽवदानं तथा ऽपि पशावदानं विधीयते । कथं प्रतिप्रस्थाता ऽवद्यतिर्दक्षिणो देशः प्लक्षशाखाधारः ? अतः सर्वविशेषणविशिष्टमवदानं विधीयते विधीयते चेत्पदार्थः । अथ वा ऽवदाने गृहीते ऽनन्तरमेव होमे प्राप्ते न तावत्येव होतव्यमथ सौविष्टकृतान्यवद्यतीति वचनेन पदार्थान्तरं विधीयते । अतः प्रकृतौ पदार्थावयवावेतौ । इह वचनात्तावेव पदार्थौ सञ्जातौ । प्रकृतौ दैवतान्यवदायाऽनन्तरं सौविष्टकृतान्यवत्तानि । इहाऽपि तथैव स्यात् पश्वेकत्वम् । प्रयोगवचनस्य साहित्यानुग्रहादेकैकस्य दैवतैरनुसमयः । प्रकृतौ दैवतान्यवदाय तावत्येव होतव्यमित्येतावद्विवक्षितम् । इहाऽपि द्वितीयस्य पशोरवदानं गृह्णन् तत्समर्पयामासैव । अर्थाच्चानन्तर्यं प्रकृतौ वृत्तम् ।

नानाबीजेष्वेकमुलूखलं विभवात् ॥ १३ ॥

शूर्पमुसलकृष्णाजिनानि तन्त्रेणैवोपकुर्वन्ति । उलूखलं चिन्त्यते। तत्र येयं तन्त्रावापचिन्ता, इदमस्य फलम् । किं कृष्णाजिनास्तरणादिस्तण्डुलनिर्वृत्त्यन्त एकः पदार्थ इत्ययमस्य प्रसङ्गः। क्रमान्यत्वमपि विद्यत एव ।

विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात्स्यात्॥ १६॥

प्रकृतावुपभृत एकत्वं विवक्षितमिति तत्रैव पृषदाज्यग्रहणं प्राप्नोति । कालान्तरे तत्र यथा सत्यपि प्रधानकालत्वेऽङ्गानां कर्तुरेकत्वाद्विप्रकर्षः,न तु विप्रकर्षदोषात्कर्त्रन्तरमुपादीयते, एवमाज्यपृषदाज्ययोर्भेदेऽपि नैव पात्रान्तरमुपादेयम्।

एवं प्राप्ते ब्रूमः । यथैव हि प्रकृतावेकपात्रता विवक्षिता एवमेककालता। इह त्वैककाल्यं विवक्षितम् । किं कारणं, प्रयाजाज्यं गृह्यमाणं मन्त्रब्राह्मणपाठक्रमादनुयाजाज्यग्रहणमुपस्थापयति । अथ वाऽष्टावुपभृति गृह्णातीत्यसंयुक्तस्योत्पन्नस्य वाक्यान्तरेण प्रयाजानुयाजार्थता कृता; न तूपभृद्विधीयते। अर्थलब्धा तु सा । न वाऽर्थप्राप्तं विवक्षितमित्युच्यते । तस्माद्भिन्नत्वाद्द्रव्ययोरर्थात्पात्रभेदः । पूर्वपक्षोत्तरपक्षयोः क्रमान्यत्वेनोपनिपातः।

प्रकृतेःपूर्वोक्तत्वादपूर्वमन्ते स्यान्न ह्यचोदितस्य शेषाम्नातम् ॥ १७ ॥

कथमित्याकाङ्क्षायां क्लृप्तोपकारत्वात्पूर्वं प्राकृतैरुपकारैर्निराकाङ्क्षीकृता उत्तरकालमपूर्वेणाङ्गेन सम्बध्यन्ते । अक्लृप्तोपकारत्वात्तस्य । तस्माद्येनैव क्रमेण प्राकृतं विज्ञातं ते-

नैव तत्कृत्वा वैकृतं कर्तव्यम् ।

मुख्यानन्तर्य्यमात्रेयस्तेन तुल्यश्रुतित्वादशब्दत्वा-
त्प्राकृतानां व्यवायः स्यात् ॥ १८ ॥

प्रधानोत्तरकालं पठितत्वात्तदनन्तरमेव प्राप्नुवन्ति । प्रधानानन्तरं प्रत्यक्ष आम्नाय आनुमानिकश्चोदकः ।

अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात् ॥ १९ ॥

अग्नये कृत्तिकाभ्यो ऽष्टाकपालमित्युत्पद्यमान एव किं केन कथमिति वितयपरिपूर्णः कर्तव्यतया चोद्यते । तस्यां वा ऽऽकाङ्क्षायां प्राकृतेन पूर्वं सम्बध्यत इत्येतदर्थकत्वेन तस्य बाधनमेव नास्ति ।

कृतदेशात्तु पूर्वेषां स देशः स्यात्तेन प्रत्यक्षसंयोगा-
न्न्यायमात्रमितरत् ॥ २१ ॥

अभिषेचनीयादूर्ध्वं प्राग् दशपेयात् पष्ठौहीं दीव्यतीत्येवमादयः पठ्यन्ते । तत्र संशयः । किमभिषेको ऽपकृष्यमाण इतरानपकर्षति,उत नेति केवलो ऽपकृष्यते ऽन्ते तु बादरायण इति । राजसूयान्त इत्याशङ्कैव नास्ति । अतो ऽभिषेचनीयान्त इति तत्राभिषेकमात्रस्याऽपकर्षः । यथा ऽमावास्यायां वेदिमात्रस्य प्रयाजानुयाजानां प्रकृतौ सम्बन्धस्यावगतत्वाद्विकृतावुत्कर्षापकर्षौ युज्येते । इह सम्बन्धस्यानवगतत्वादपकर्षो ऽयुक्तः ।

इत्येवं प्राप्ते ब्रूमः । अत्राऽपि पाठस्य प्रत्यक्षत्वात्पूर्वैः पदार्थैरस्ति सम्बन्धः । न चाऽयं पाठो यत्र कृतार्थः यथा

पौर्णमास्यां वेदेः । अतः पूर्वेषामपकर्षः । नन्वभिषेचनीयपरत्वे ऽपि पाठो ऽस्ति । उच्यते । अभिषेचनीये साङ्गे विहिते तत एते पराभवन्ति । तस्य चैतेषां च भिन्नप्रयोगवचनपरिग्रहात्पाठ एव नास्ति ।

प्राकृताच्च पुरस्ताद्यत् ॥ २२ ॥

सावित्रग्रहहोमा उखासम्भरणमित्यादि विधायाऽनन्तरं दीक्षणीयागुणवाक्यानि श्रूयमाणानि तत्स्थानमेव गुणिनमवबोधयन्ति । अतो ऽस्य पाठस्य प्रत्यक्षत्वात्प्रथमं सावित्रहोमास्ततो दीक्षणीया ।

सन्निपातश्चेद्यथोक्तमन्ते स्यात् ॥ २३ ॥

दीक्षणीयानन्तरं प्रकृतौ दीक्षितसंस्काराः कृताश्चोदकेन तथैव प्राप्नुवन्ति । ननु रुक्मप्रतिमोचनादयो दीक्षणीयायाः परे श्रूयन्ते । तेषां चोदकप्राप्तानुष्ठितव्यवहितानामपि परत्वं नैव बाध्यते ।

इति पञ्चमाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः ।

त्रिवृद्धिः कर्मभेदात्पृषदाज्यवत्तस्य तस्योपदिश्येत ॥ १ ॥

एकादश प्रयाजान् यजतीति सङ्ख्या प्रयाजानामङ्गत्वेन विधीयते । तेषां चोद्दिश्यमानत्वात्साहित्यमविवक्षितम् । अत एकैकमेकादशसङ्ख्यया सम्बध्यते ।

अपि वा सर्वसङ्ख्यत्वाद्विकारः प्रतीयेत ॥ २ ॥

पृथङ्निवेशनी सङ्ख्या । तत्र द्रव्याणां पृथङ्निष्पन्नरूपाणामेकक्रियया सम्बध्यमानानां युज्यते सङ्ख्या, दश घटा आनीयन्तामिति । इह तु प्रयाजानां पृथङ्निष्पत्तेरभावाद्या सङ्ख्या सा न युज्यते । उत्पत्त्यपेक्षा हि कर्मणां सङ्ख्या । उत्पत्तौ च द्विधाऽप्येकादशसङ्ख्या न घटते । यद्येकस्मिंस्ततस्तत्र साक्षादयुज्यमानत्वात्तल्लक्षितेन प्रयोगेण युज्यते । एवं चेद्यत्र श्रुता तत्र न कृता । अश्रुते कृता । अश्रुतं च पञ्चपञ्चाशत्सङ्ख्यान्तरमुपजायेत । समस्तैरपि न शक्यं योजयितुम् । कथं प्रयाजैः सङ्ख्यैकदेशः सम्बध्येत ? अन्यस्य सङ्ख्यैकदेशस्यासम्बध्यमानस्य सम्पत्तये प्रयाजाः प्रयोगं लक्षयेयुः । तेनाऽसौ सम्बध्येत । तत्र प्रयाजाः सङ्ख्या चोभयमपि बाध्येत । सङ्ख्या तावत्प्रयाजे श्रूयमाणा प्रयोगे कृता । प्रयाजा अपि सङ्ख्यैकदेशेन योजिताः । अन्यश्च सङ्ख्यैकदेशः प्रयाजलक्षितेन प्रयोगेण युक्तः । तत्र प्रयाजो ऽन्यार्थः श्रुतो ऽन्यार्थमुच्चारितः ।

किं च सकृदुच्चरितः सङ्ख्यया सम्बध्यते प्रयोगं च लक्षयेत्। द्वयोरप्यश्रुतकल्पना। तस्मादन्यः प्रकार आश्रीयते। यदि वा प्रयाजशब्दः प्रयोगं लक्षयेत्। अथ वा सङ्ख्या लक्षणावृत्ता। तत्र प्राथम्यादविरोधाच्च मुख्यवृत्ता सङ्ख्या। यदि च लक्षणावृत्ता स्यात्ततस्तया पञ्चत्वे लक्ष्यमाणे प्रवृत्तिविशेषकरं वा स्यात्। तस्मात्प्रयाजाः प्रयोगं लक्षयन्ति। ते च लक्षयन्त इतरेतरसव्यपेक्षा लक्षयन्ति। सङ्ख्याया इदमेव स्वाभाव्यं यदुत भिन्नेष्वितरेतरयुक्तेषु प्रवर्त्तते। यो ऽन्यो गुणः स इतरेतरापेक्षैरेव सम्बध्यते। एकैकेन च प्रधानेन परस्परनिरपेक्षेण वशीक्रियते। सङ्ख्यायामुभयमपि नास्ति। अतो ऽयं गुणो ऽपि सन्नितरेतरगुणविसदृशः। प्राकृतसङ्ख्योपमर्देनेन चास्या निवेशः। प्रकृतौ च पञ्चत्वं समुदितानां नैकैकस्य। इहाऽपि समुदितानामेवैकादशसङ्ख्या। ननु पृथग्विहितानामर्थलभ्यत्वात्प्रयाजा अनूद्यन्ते।

उच्यते। अर्थाच्छब्दाद्वा प्रकृतावियत्ता पञ्चसङ्ख्यापरिच्छिन्ना। इहाऽपि प्रयाजसम्बन्धित्वेनैकादशसङ्ख्या परिच्छेदिका भवितुमर्हतीति सर्वसंपादने ऽन्यादृशः क्रमो ऽन्यादृश इतरत्र। उत्तरस्य चोपोद्घाताधिकरणमिदम्। स्थिते ह्येतस्मिन्दण्डकलितवदावृत्तिः स्वस्थानविवृद्धिर्वेति चिन्ता ऽवतरति।

स्वस्थानान्नु विवृद्ध्येरन् कृतानुपूर्व्यात्॥ ३॥

यथा प्रथमा परिसमाप्यमाना द्वितीयामुपस्थापयति, द्वितीया च तृतीयामेवं तृतीया ऽपि कर्मान्तरमुपस्थापयति। तत्र दण्डकलितवदावृत्तौ तृतीयाऽनुपस्थापिता प्रथमा क्रियेत। स्वस्थानविवृद्धौ तु नैष दोषः। चोदको ह्यमुमेवाऽर्थं प्रापयति।

स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात्पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे ॥ ७ ॥

बहिष्पवमानस्यान्तत्तृचात् पूर्वमागन्तवः स्युः । कुतः ? ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचा भूवन् स्तोत्रियो ऽनुरूपः पर्यासश्चेति । द्वादशाहस्य षाडहिके द्वितीये ऽहनि स्तोत्रीयानुरूपौ तृचौ पठित्वा अपूर्वास्तृचाः पठ्यन्ते । तत उत्तरः पर्यासः पठितः । तस्मात्पर्यासात्पूर्वमेतेषां निवेशो दृष्ट इहाऽपि तथैव भवितुमर्हति । पर्यास इति चाऽन्त उच्यते । तस्योपरि यद्यन्ये क्रियेरंस्ततो ऽन्तता व्याहन्येत । अन्ते वा न्यायादन्त एवैतेषां निवेशः । द्वादशाहे तु प्रत्यक्षपाठाद्बहुष्पवतीमध्ये निवेशो द्वादशाहप्रकृतिकेष्वपि विशिष्टानामेव तृचानां मध्ये निवेशः । न त्वयमपूर्वाणां धर्मोपचयः स्यात् ।

ग्रहेष्टकमौपानुवाक्यं सवनचितिशेषः स्यात् ॥ १५ ॥

ग्रहैः सवनानि प्रत्यक्षमारभ्यमाणानि दृश्यन्ते । इष्टकाभिश्चितयश्च । तस्मात्तदुपकारकत्वादेतेषां तदर्थता । इतरस्त्वाह—अग्नियागयोः फलवत्त्वात्तदर्थं ग्रहेष्टकमुपोद्घातिकमिदम् । स्थित एतस्मिन्क्रमविचारः ।

संस्कृते कर्म संस्काराणां तदर्थत्वात् ॥ २१ ॥

प्रागाधानात्कर्मस्वयोग्यः कृत आधाने ऽग्नीनां विद्यमानत्वात्सर्वकर्मभिरधिक्रियते । किं चाऽग्नि वै सृष्टमित्याग्निमुत्पाद्याऽग्निहोत्रेणाऽनुप्रवचनमाधानान्तरमेवाऽग्निहोत्रं दर्शयति । आहिताग्निर्न क्लिन्नं वार्त्रघ्यादधीतेत्यनेनानन्तरमेवैते यथा प्रा-

ऽनुवन्ति एवं कर्माण्यपीति ।

एवं प्राप्ते ब्रूमः । पवमानेष्ट्यादिभिराहवनीयादय उत्पाद्यन्ते। उत्पन्नाश्च सन्तो यागाङ्गतां प्रतिपत्तुं शक्नुवन्ति। अतो ऽग्न्यभावाद्भावः कर्मणाम् । न छिन्नं दार्वभ्यादध्यादिति पुरुषसंयोगेन श्रवणादाहिताग्नित्वेन निमित्तेनाऽनन्तरमेव भवन्ति । निमित्तस्य विद्यमानत्वादग्निहोत्रेणाऽनुद्रवन्तीति। यद्यजुषा जुहुयादयथापूर्वमाहुतीः कुर्यादिति पवमानेष्ट्यनन्तरमाहुतीनां करणादयथापूर्वं कृताः स्युः । यदि पुनः क्रियेरन् अग्निरुद्रायेत् तस्मात्तूष्णींहोमस्तुतिरियम् । सचाऽग्न्यर्थः । अत एव सर्वं प्रवर्त्तते । किमस्मिन्नग्निहोत्रधर्माः प्राप्यन्ते न वेति । के चिदाहुः—अग्निहोत्रधर्मा नाम्ना प्राप्यन्ते यथा कुण्डपायिनामयन इति ।

तदयुक्तम् । तूष्णीं होतव्यमित्यनेन कर्म विधीयते। तस्मिंश्च विधिवाक्ये ऽग्निहोत्रशब्दो नास्ति, येन धर्मातिदेशको भवेत् । तूष्णीं होमो ऽग्निसन्धुक्षणार्थः क्रियते। एतदतो भवति अग्न्यर्थो होम इत्यवगते यो ऽग्निहोत्रशब्दो वाक्ये ऽर्थवादत्वेन प्रवृत्तः स योगेन । अग्नये होत्रमित्यतो योगस्य विद्यमानत्वान्नास्ति नामधेयं, नामधेयाभावाच्चाऽतिदेशो नास्ति ।

क्रत्वन्ते वा प्रयोगवचनाभावात् ॥ २७ ॥

यो ऽग्निं चितवान्सो ऽग्निचित् । स चाग्निः कर्मभूतः । चयनं तदर्थम् । तस्माच्चयनेनाग्नेरुपकर्त्तव्यम् । तच्चाधारतां प्रतिपद्यमानमुपकरोति । अग्निश्चाङ्गप्रधानार्थः । अतो यावदङ्गप्रधानानि निर्वर्त्तन्ते तावच्चयनमाधारतां प्रतिपद्यमानमग्न्यर्थं भवति । न च चयनमात्रम् । तस्मात्साङ्गपरिसमाप्त्युत्तरकालं निमित्ततां प्रतिपद्यते । तस्मात्साङ्गे कृते यागे ऽग्निचिदुच्यते ।

परेणावेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षाभिसम्ब-
न्धात् ॥ २९ ॥

दण्डेन दीक्षयति दण्डेन दीक्षां निर्वर्तयतीति दीक्षार्थः । आग्नावैष्णवो ऽपि वाक्येन दीक्षार्थः । यदि ह्याग्नावैष्णवेन दीक्षितः स्याद्दण्डेन दीक्षयतीति नोच्यते । तस्मान्न स तावता दीक्षितः । न च विकल्पः । दीक्षितत्वं नामादृष्टम् । तत्र यावद्वाम्नायते तावता दीक्षितो भवति । आह । करणविभक्तिनिर्देशादितरेतरनिरपेक्षाणां दीक्षाकरणता ऽवगम्यते । यथा व्रीहीणाम् । तेषां दृष्टोपकारित्वाद्विकल्प इति चेत् ? तन्न । व्रीहियवसमुच्चयेन शक्यते पुरोडाशो निर्वर्तयितुम् । करणविभक्तिस्तु यवनिरपेक्षाणां पुरोडाशप्रकृतिद्रव्यत्वं प्रतिपादयति । सा बाध्यते समुच्चये । एवमिहापि ।

उच्यते । अत्र पुरोडाशप्रकृतित्वेनैकं द्रव्यमाकाङ्क्षितम् । तस्य करणविभक्त्या नियतता कृता । दण्डादीनां त्वनवगतं तादर्थ्यं करणविभक्त्या क्रियते । तच्च तादर्थ्यमदृष्टविषयमिति सर्वैः क्रियते । अतः प्रयोगवचनेन सर्वं उपसंह्रियते ।

इष्ट्यन्ते वा तदर्थो ह्यविशेषार्थसम्बन्धात् ॥ ३० ॥

दीक्षितत्वं नाम संस्कारः । संस्कारश्च क्रियाजन्यः । न च दण्डादीनां क्रियात्वम् । अथोच्येत क्रियां साधयन्तो दण्डादयः संस्कारार्थाः । अर्पणादिकायाः श्रवणान्न ज्ञायते कां क्रियां साधयन्तः संस्कारार्थतां प्रतिपद्यन्ते । अतो द्रव्यरूपत्वादनध्यवसानमेव स्यात् । दीक्षिष्यमाण इति यो दीक्षामाप्तुमिच्छति तस्य दीक्षणीयोपायत्वेन विधीयते । यदि च तया दीक्षितत्वं

जायेत ततस्तस्योपायत्वेन विधीयते यथा स्वर्गस्याग्निहोत्रम् । यदि वा ऽनयैव दीक्षा क्रियते ततो ऽस्याः समाख्या ऽप्युच्यते । तस्माद्वाक्यसंयोगाद्दीक्षणीययैव दीक्षितत्वं जन्यते । इष्ट्यन्ते ऽग्निहोत्रादीनि न कार्य्याणीत्ययं क्रमलक्षणसम्बन्धः ।

न वा सम्बन्धात् ॥ ३३ ॥

अनियमे कामा उत्पद्यन्ते । तेषां नास्ति क्रमः । कामेन च निमित्तेन कर्म कर्तव्यम् । तस्मान्नैमित्तिकेन क्रमेण प्रयोगे न स्वाध्यायक्रमो बाध्यते । अनङ्गत्वात्तेषाम् । एकप्रयोगवचनाभावाच्च नास्ति क्रमः ।

य एतेनेत्यग्निष्टोमः प्रकरणात् ॥ ३७ ॥

य एतेनानिष्ट्वेति सर्वनाम्ना प्रकृतं परामृश्यते । प्रकृतश्च ज्योतिष्टोमः । तस्य चाविनाभूता ऽग्निष्टोमसंस्था यदा ज्योतिष्टोमाभ्यासस्तदावश्यंभाविनी । उक्थ्यादयः काम्याः । ततो नित्यत्वादग्निष्टोमः परामृश्यते । अथान्येनेति संस्थापूर्वप्रकृतादन्यद्यत्संनिहितं तदभिधीयते सर्वनाम्ना । अग्निष्टोमस्य चोक्थ्यादयः सन्निहिताः । तस्मादग्निष्टोमसंस्थं ज्योतिष्टोमं कृत्वोक्थ्यादयःकर्त्तव्याः । गवादीनामनियमः ।

तत्प्रकृतेर्वा ऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते ॥४०॥

अन्यशब्दः प्रकृतादन्यवाचकः । तस्य न विशेषो गम्यते । किमुक्थादय उक्ता उत गवादय इति । अतो विशेषानवगमात्सर्वानभिधत्ते । विशेष्यमाणो वा ज्योतिष्टोमो नान्येनोक्थ्यादिनेति विशेष्ये । तत्रायं य एतेनेत्यस्मिन् साकाङ्क्षीभूतः कृतप्रयोजनः किमर्थमन्यसम्बन्धार्थमुच्चार्यते ? यद्यपि विशेषणत्वेनो-

ञ्चार्येत तथाऽपि ज्योतिष्टोमादन्येनेत्यन्ययोगे पञ्चमी स्यात् । ज्योतिष्टोमाच्चान्ये गवादयः । यदि ज्योतिष्टोमादग्निष्टोमसंस्था-दित्युच्यते, वाक्यं भिद्येत । ज्योतिष्टोमादन्येन तच्चाग्निष्टोमसं-स्थादिति । अत उक्थ्यादयो ज्योतिष्टोमादयश्चाग्निशब्दाभिधे-याः । य एतेनानिष्ट्वा ऽप्यन्येनेति द्वावपीमौ पदार्थौ विचारितौ ।

इदानीं वाक्यार्थो विचार्यते । किमग्निष्टोमस्य प्राथम्यं नाम धर्मो विधीयते उतोत्तरेषां प्राथम्यप्रतिषेधो, ऽथ वा ऽन्यः प्रकारः ? किं तावत्प्राप्तं, ज्योतिष्टोमस्य प्राथम्यं विधीयते । प्रक-रणादितरेषां न प्राथम्यप्रतिषेधः । तन्न । एवं हि ज्योतिष्टो-मस्य द्वितीयादौ प्रयोगे प्राथम्याभावादफलता प्रसज्येत । नाऽप्यन्येषां प्राथम्यप्रतिषेधः । तद्वाचकस्य शब्दस्याऽभावा-त् । तस्मादन्यः प्रकारः । कः पुनरसौ ? य एतेनानिष्ट्वेति क्त्वा-शब्दस्य पूर्वकालवाचित्वात्पूर्वमग्निष्टोमस्य कर्तव्यतामाह, प-श्चाद्गवादीनाम् । तेन तत्र प्राथम्यं गवादीनामङ्गमनेन वाक्येन चोद्यते । वाक्यान्तरेण स्वर्गः । अतो द्वितीयादिप्रयोगे फलं भविष्यतीत्यदोषः ।

इति पञ्चमाध्यायस्य तृतीयः पादः ।



# अथ चतुर्थः पादः ।

अवदानाभिघारणासादनेष्वानुपूर्व्यं प्रवृत्त्या स्यात् ॥२॥

स्विष्टकृदवदानं, प्रयाजशेषाभिघारणं, बर्हिषि हवींष्यासादयतीत्युदाहरणानि । प्रावृत्तिकमुख्यक्रमयोः कतरो बलीयानिति विचारः । तत्र दध्नः प्रथमं धर्माः प्रक्रान्ताः । यदि तथैव प्रवृत्त्या तस्यासादनादीनि प्रथमं क्रियन्ते, ततो भवत्यङ्गानां प्रधानासत्तिः । इतरथा ऽन्यस्य प्रथमं क्रियेरन् । तत्र व्यवधानात्प्रधानप्रत्यासत्तिर्बाध्येत प्रयोगवचनेन साहित्यात् । यावद्भिः क्षणैर्व्यवधानमनुज्ञातं तावद्भ्यो ऽधिकैरपि कृतं स्यात् ।

यथाप्रदानं वा तदर्थत्वात् ॥ ३ ॥

दध्नः पाठात्पूर्वं क्रियन्ते । अपरेद्युः पाठक्रमादेवाऽऽग्नेयस्य पूर्वमतावति विषये मुख्यप्रवृत्तिकौ नावतरतः । पाठस्य प्रत्यक्षत्वात् । वेद्यासादने नास्ति पाठः कस्य पूर्वमासादनमिति । तत्र यदि दध्नः पूर्वं प्रवृत्ता इति कृत्वा तस्यैवाऽऽसादनं क्रियते, तथा सति प्रधानक्रमेणाऽऽग्नेयस्यां कृत्वा ऽन्येषां कर्त्तव्यमिति नाऽनुगृह्यते । कुतः ? प्रथममाग्नेयस्ततो दधि, ततः पय इति । एकैकमेषामितिकर्त्तव्यतां सन्निहितामभिलषति । सहत्वयोगाद्विक्षणाव्यवहितामेकैकम् । प्रत्यक्षपाठाच्च पूर्वं पूर्वस्य धर्मास्ततो द्वितीयतृतीययोः । तत्र यदि दध्नः पूर्वं क्रियेरंस्तथा सति पूर्वमासाद-

नमनुभवितव्यमिति यो ऽवगतः प्रधानेनाङ्गानां क्रमः स बाध्येत। एतस्मिन्बाध्यमाने विप्रकर्षः। तस्मात्प्रावृत्तिको बाध्यते। प्रदानोपक्रमा एतेन पृथक्पदार्था इत्युक्तम्। अग्रन्थो ऽयम्। लिङ्गदर्शनं चेममेव न्यायं दर्शयति, यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं हेतुवन्निगदेनार्थवादेन। अतस्तुल्यन्यायत्वादितरेष्वपि तथैव भवितुमर्हति।

सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात् तदन्तेनानर्थकं हि स्यात् ॥ ६ ॥

प्रागपि दर्शपूर्णमासाभ्यां कर्तव्यः। कथं ? सोमेन यक्ष्यमाणे ऽग्नीनादधीतेति श्रूयते। स चासावाधार उपपद्यते। यद्याधानोत्तरकालं सोमेन यजेत न दर्शपूर्णमासोत्तरकालम्, एवमसाधारणः सम्बन्धः। इतरथा सोमदर्शपूर्णमासपशुबन्धैः सर्वैरेव यक्ष्यन्ते। तत्र सोमेन यक्ष्यमाण इति विशेषणं नावकल्पेत। न चैवंविधो ऽस्ति यः सोमेन न यक्ष्यते, येन तदपेक्षायां विशेषणं भवेत्। नित्यो हि सोमः। ऋतुनक्षत्रप्रतिषेधश्च सोमाधानानन्तर्य एव घटते। सोमस्य हि कालो विहितः। स यदि प्रतिषिद्ध्येत, किमर्थं तस्य विधानम्? यद्याधानोत्तरकालस्य सोमस्य कालप्रतिषेधस्ततो दर्शपूर्णमासोत्तरकाले वसन्तकालविधानं कृतार्थम्। तस्मात्सोमस्य द्वौ कालौ। प्राग्दर्शपूर्णमासयोरूर्द्ध्वं च। न चाधानानन्तरमन्यन्न किञ्चिदनुष्ठेयं सोम एव कर्त्तव्यः। किं तर्हि पवमानेष्टिव्रात्यपश्वग्निहोत्राणि कृत्वा सोमो दर्शपूर्णमासयोः प्राक्कर्तव्य इत्येतदपेक्षया सोमेन यक्ष्यमाण इत्यसाधारण्यमुपपद्यत एव। यथा तु भाष्यकारेणोक्तं, व्रात्यपशुः सोमाङ्गत्वाद्भवति। पवमानेष्टयो ऽप्यग्निसंस्कारत्वाद्भवन्त्येव।

अग्निहोत्रं तु नास्ति ।

स्याद्वा विधिस्तदर्थेन ॥ १३ ॥

यदि केवला पौर्णमासी उत्कृष्येत फलं न स्यात् । अथ दर्शो ऽप्युत्कृष्येताश्रुतस्तस्योत्कर्षः । तस्मात्सोमोत्तरकालं कर्म विधीयते ऽन्यदेतत् । एवं कर्म विना श्रुतिरितरथा पौर्णमासीकर्मणः सोमोत्तरकालता विधीयते । तत्र वाक्यं स्याद्यागस्याविधानात् । तस्माद्यागविधानात्पौर्णमासीसंज्ञकं कर्मान्तरम् । अथ वोभयोः कर्मणोः साधारणीयं संज्ञा । ब्राह्मणस्योभौ कल्पौ ।

प्रकरणात्तु कालः स्यात् ॥ १४ ॥

पौर्णमासप्रकरणे श्रुतं कर्मान्तरं कल्पयितुम् । अतो निर्ज्ञातस्य यागस्य कालमुपदिश्य कृतार्थं वाक्यमशक्तं कर्मान्तरविधौ । बह्वदृष्टप्रसङ्गाच्च धर्मातिदेशो ऽप्ययुक्तः । सत्यां गतौ साधारणशब्दता ऽप्ययुक्ता । अन्यायश्चानेकार्थत्वमिति । तस्मात्पौर्णमास्युत्कर्षः । अतस्तत्सम्बन्धेन फलस्य चोदितत्वाद्दर्शो ऽप्युत्कृष्येतेति ।

सान्नाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात्प्रकृतिवत् ॥ २५ ॥

अनुदाहरणमग्नीषोमीयः । तस्य हि वचनेन चोदकप्राप्तः कालो बाध्यते । तद्विकाराश्चाऽनुदाहरणम् । न तेषां प्रकृत्या सोमादूर्ध्वकालो ऽनुभूतः केवला ऽऽमिक्षा ऽत्रोदाहरणम् ।

तथा सोमविकारा दर्शपूर्णमासाभ्याम् ॥ २६ ॥

दर्शपूर्णमासोत्तरकालं सोमस्य काले चोद्यमाने विकृती-

नामपि तदूर्ध्वता प्राप्नोत्येव । तस्मात्पूर्वाधिकरणेनैव सिद्धत्वा-न्नैवारम्भणीयम् । प्रागपि दर्शपूर्णमासाभ्यां सोमः श्रूयत इ-त्यनेन विशेषणप्रस्तावः । अत्र किं गवादयः ऊर्द्ध्वं प्राग् भव-न्तीति सम्प्रधारणा । तत्राऽनियमे प्राप्त उच्यते । न हि वच-नमस्ति यत्प्राक्कालतां सोमस्य विदध्याद्दर्शपूर्णमासयोः । कु-तस्तर्ह्यर्थप्राप्तः । न चाऽर्थप्राप्तं चोदकः प्रापयति । अथोच्येता-ऽऽधानानन्तरः सोमस्य कालो वचनादिति न शब्दं प्रकृत्या-वरुद्धौ न हि सम्भवति विकृतेः । स हि यद्वा प्रकृत्या वि-रोधनीयो यद्वा विकृत्या । तत्र यदि प्रकृतिर्नावरुणद्धि विकृतेः प्राप्तिरेव नाऽस्ति। प्रकृत्या चेदवरुद्धं सामर्थ्यादेवेतरासां नास्ति। तस्मादूर्ध्वं दर्शपूर्णमासयोर्गवादय इति सिद्धम् ।

इति चतुर्थः पादः ।
समाप्तश्च पञ्चमो ऽध्यायः ।



# अथ षष्ठो ऽध्यायः ।

द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः ॥ १ ॥

औपोद्घातिकमेतत् । फलवत्त्वे ऽवगते क एतैरधिक्रियत इति युक्तो विचारः । अफलवत्त्वे तु विचाराऽनुपपत्तिः । यदि चैवं कामशब्दैः फलमभिधीयते ततो भावार्थाधिकरणे चिन्ता किं भावशब्दाः फलसम्बन्धिन उत द्रव्यगुणशब्दा इति । ततो ऽपूर्वचिन्ता ततो ऽतिदेशः फलसद्भावे तद्विकाराच्च चोदनालक्षणा इति विचारः । अयमेवाऽवसरो ऽध्यायस्य । कथं भेदाभेदशेषशेषिप्रयोजकाप्रयोजकैरेवंभेदयुक्तैः कर्मभिः को ऽधिक्रियत इति विचारस्याऽयमेवाऽवसरः । किं स्वर्गो गुणतः कर्मप्रधानत इति । अयुक्तमिदं स्वर्गशब्दो यथाख्यातेन सम्बध्यते न कामपदेन । अथ कामपदेन नाख्यातेन कामपदेन स्वपदोपात्तेन श्रुत्या सम्बन्धः । आख्यातेन पदान्तरोपात्तत्वाद्वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । तस्मात्स्वर्गशब्दः पुरुषविशेषणत्वेनोपक्षीणत्वान्नान्येन सम्बन्धुमर्हति । यथा राजजातिविशिष्टः कर्ता राजसूयसाधनं विधीयते । राजसूयो वा तदर्थित्वेन राजजातिर्न साध्या नाऽपि साधनम् एवं न स्वर्गः । तस्मात्स्वर्गेच्छाविशिष्टः कर्त्ता कर्मसम्बन्धी । एवं चेत्संशयानुपपत्तिः । किं च यजेत स्वर्गकाम इति सामानाधिकरण्याद्यागे गुणभूतः कर्ता निर्दिश्यते । यथा देवदत्तः पचतीत्यत्र न देवदत्तार्थः पाक, एवमिहा ऽप्यत्यन्तगुणभूत एव कर्त्ता प्रतीयते ।

उच्यते । नाऽयमेकान्तो यत्प्रथमान्तं गुणभूतं प्रधानमपि भवति क्रियायाम् । यथा मलिनः स्नायादिति । संशयोऽपि युक्त एव । पदेतरार्थे ऽवगते पदार्थो ऽवधार्यते, तदुत्तरकालं वाक्यार्थः । तत्र यदि स्वर्गशब्देन द्रव्यमभिधीयते, ततोऽसौ तत्साधनत्वेन तत्कामयमानो यागे साधनांशेनैव सम्बध्यते । अथाऽस्य प्रीतिरभिधेयाततस्तामात्मसम्बन्धित्वेन कामयमानः स्वर्गकामशब्देनाऽभिधीयते । तदुत्तरकालं यागेनाऽभिसम्बध्यमानः साध्यांशेनैव सम्बध्यते । यागस्तु गुणभूतः । एवं द्विप्रकारायां कामनायां स्वर्गो गुणभूतः अथ प्रधानभूत इत्युपपन्नः संशयः । पदे पदेतरार्थवाक्यानि निर्णेतव्यानि । राजजात्या ऽपि न सादृश्यम् । न हि राजयोगिनी जातिः । द्विप्रकारः पूर्वपक्षः । स्वर्गेच्छाविशिष्टस्य यागे कर्तृता अतद्विशिष्टेन यागो न कर्त्तव्यः । यथा राजजातिविशिष्टेन राजसूयः कार्यो नातद्विशिष्टेन, तद्वदत्राऽपि । एवं चेन्नाऽवश्यमुपादेयं प्रीतिमद्द्रव्यम् । तद्विषया त्विच्छा ऽदृष्टविषयद्वारेणोपकरिष्यति । अथाऽप्यदृष्टेन तथा ऽपि नो दोष इत्यस्माद्ग्रन्थादयं द्वितीयः पक्षो ऽनुमीयते । शब्दवस्तुभ्यां च पूर्वः पक्षः । कथं ? यजेतेति प्रत्ययो यस्यैव परः श्रूयते तस्य श्रुत्या कर्त्तव्यतामाह । अपि चाऽनिष्पन्नत्वाद्यागस्य भाव्यत्वम् । यच्च भाव्यं तत्कर्तव्यतां प्रतिपद्यते । यन्निष्पन्नं तत्करणत्वं प्रतिपत्तुं शक्नोति वात्रादि । अनेन प्रकारेण भाव्यमानो यागो न स्वर्गः । किमुत यदा प्रीतिमद्द्रव्यवचन एव लोके स्वर्गशब्दस्ततस्तत्साधनांशेनैव काम्यते । यद्यत्प्रीतिमद्द्रव्यं तत्तत्स्वर्गशब्देनोच्यते । तथा दण्डीत्यनेनाऽस्य ग्रन्थस्य सम्बन्धो व्यवांहृतस्याऽपि ।

अत्र ग्रन्थः । यद्यपि केवलसुखश्रवणार्थापत्त्या तादृशो देशः स्याद् तथा ऽपि प्रत्यक्षस्याऽविरोधः । प्रीतिसाधनं स्वर्ग इति तेन देशेन व्यवहाराभावाद् कुतस्तस्याभिधाता स्वर्गशब्दो भविष्यतीत्येकस्य प्रीतिः स्वर्गशब्दवाच्या ऽपरस्य प्रीतिमद्द्रव्यम् । विशिष्टो देश उभयोरप्यवाच्यः । किं कारणं, तस्याऽप्रत्यक्षत्वेन व्यवहाराभावस्तेन व्यवहाराभावात्प्रयोगाभावः ।

किन्तु यस्य प्रीतिरभिधेया तस्य तत्साधनं च यागस्तेनाऽनुभूयत इत्यर्थापत्त्या ऽवाच्यो ऽपि स कल्प्यते । यथा ऽपूर्वम् । नन्वस्मिन्नपि देशे शक्या प्रीतिरनुभवितुम् । चन्दनानुलेपनादिभिः कृतैरनन्तरं प्रीतिरुपलभ्यते । यैषा भोजनादिप्रीतिरेषा क्षणिकी । कर्मणां त्वल्पमध्यममहतामल्पमध्यममहत्य एव प्रीतयः । तत्र या प्रीतिर्निरतिशया ऽनुभवितव्या सा चोष्णशीताद्विद्वन्द्वरहिते देशे शक्या ऽनुभवितुम् । अस्मिंश्च देशे मुहूर्तशतभागो ऽपि द्वन्द्वैर्न मुच्यते । तस्मान्निरतिशयप्रीत्यनुभवाय कल्प्यो विशिष्टो देशः । चन्दनादिजन्या तु या प्रीतिश्चन्दनादीन्येव तस्या उत्पादकानि न यागः । अस्मिंश्च देशे यावज्जङ्गमतिर्यगादि तत्सर्वं प्रीत्यप्रीती अनुभवति । न च तैः कर्माणि कृतान्यस्मिन्देशे । अतो ये साधारण्यो प्रीत्यप्रीती, ते स्वभावकृते । अथोच्येताऽन्यस्मिञ्जन्मनि तैः कृतानि कर्माणि येन प्रीतिमनुभवन्तीति । यथा ऽस्मिञ्जन्मनि सर्वाणि न कुर्वन्ति, एवमन्यस्मिञ्जन्मन्यनुभवन्ति च सर्वाणि प्रीतिम् । अतो यदीयं कर्मजन्या स्यात्कैश्चिदेवानुभूयेत । अकर्मजन्यत्वे न दोषः । तस्मात्स्वर्गस्य प्रीतिरभिधेया । सा चाशक्या विशिष्टदेशादृते ऽनुभवितुमिति

विशिष्टदेशो ऽनुमीयते । यद्यपि केवलसुखश्रवणार्थापत्त्येत्यभ्यु-पेत्यवादेनाऽयं ग्रन्थः, यतः स्वर्गशब्देन द्रव्यमभिधीयते । भवतां प्रीतिसामर्थ्याद्विशिष्टो देशः कल्प्यते तथा ऽपि प्रीतिमद्द्रव्यं तस्य साधनं, तस्य देशस्य तु व्यवहाराभावात्स्वर्गशब्देनाऽवाच्यता भवतो ऽपि । तस्मान्निष्प्रमाणको विद्यमानो ऽपि नास्मत्पक्षं विरुणद्धि । यथा च स्वर्गशब्दो द्रव्यवचनस्तथोक्तं लोकव्यवहारादिति । स्वर्गकामस्य यागः कर्तव्यः । कर्तव्यश्च सुखवानकर्त्तव्यो दुःखवान् । कर्त्तव्य इति चैनं ब्रूते । तस्मात्फलतो यागो भविष्यतीत्ययुक्तो ऽयं ग्रन्थः । यदा यागो भाव्यस्तदाऽन्यद्भाव्यतां न प्रतिपद्यते । कतरद्वा फलवदाख्यातं दृष्टं यन्नाऽत्रापि फलमनुमीयेत ? अनुमीयमानमपि द्रव्यवचनतां प्रतिपद्यते ? तस्मादस्य कीदृशी वर्णना ? यागस्तावद्वस्तुश्रुतिभ्यां कर्तव्यरूपः । यश्च कर्तव्यरूपस्तस्य लोके कर्तव्यतोत्तरकालमभ्युदयो दृष्टः । इहाऽपि कर्तव्यरूपत्वाद्भवितव्यं केनापि फलेन । तच्च निरीक्ष्यमाणप्रमाणाभावान्न किञ्चिदवतिष्ठते । तस्मादनर्थकत्वात्फलनिराकरणमेव क्रियते ।

ननूत्पत्तिवाक्यशिष्टं पुरोडाशाद्यशक्यं बाधितुं विकल्पयितुं वा । उच्यते, रूपरससौरभ्यादयस्तेषु करिष्यन्ते स्वर्गशब्दवाच्यत्वाय ।

असाधकं तु तादर्थ्यात् ॥ २ ॥

आकृत्यधिकरणन्यायेन स्वर्गशब्दस्य प्रीतिरभिधेया, सा साध्या । पुरुषार्थत्वात् सर्वः प्रीत्यै यतते । तत्र प्रीतियागौ न चोभौ साध्यौ । एकेन भाव्येन भवितव्यमन्येन भावकेन । यद्यपि यागे तृतीया न श्रुता नाऽपि स्वर्गे द्वितीया, तथा ऽपि

स्वर्गस्य भाव्यत्वाद्यागस्य करणता। ननु पशुकामे द्रव्यवचनत्वात्कामना न प्राप्नोति। उच्यते। यदीप्सितं पुरुषार्थत्वेन तस्यैव कामना मुख्या, तदुपायभूता क्रिया, तत्साधनानि च नान्तरीयकत्वात्काम्यन्ते। साध्यसंपत्तये सर्वः प्रवर्तते; न तु कर्म सेत्स्यतीति।

अपि च यत्साधनभूतं द्रव्यं तस्य कामपदोच्चारणमन्तरेणाऽपि कामनाऽर्थलभ्येति कामपदोच्चारणमनर्थकम्। यस्य पुनः पशुकामशब्देन फलमभिधीयते तस्य पशुं कामयमानः पशुकामो ऽभिधीयते। तत्र यदि कामशब्दो नोच्चार्य्यते पशवो ऽस्याऽभिप्रेता इति नैव विज्ञायेत। अज्ञानात्पशवः फलं यागः साधनमिति सर्वं नावकल्प्येत। साधनपक्षे कामपदोच्चारणादृते ऽपि लभ्यते एव। यथा व्रीहिभिर्यजेतेति। यागं च स्वर्गविधिमिच्छतः पुरोडाशादिभिः सहाविरोधो नास्ति। कथं पुरोडादि स्वर्गशब्देन नाऽभिधीयते? रूपरससौरभ्यादयस्तत्र स्वर्गशब्देनाभिधेया अन्यथा न सम्भवन्तीति क्रियन्ते।

एतदयुक्तम्। यदेव स्वर्गशब्दवाच्यमप्रयत्नजनितं तस्मिन्नेवोपादातव्ये विस्पष्टशब्दार्थे पुरोडाशादावश्रुतः प्रयत्नः किमर्थमाश्रीयते? क्रियमाणेनाऽप्यश्रुतेन यागः कृतो भवेत्। चन्दनाद्येवोपास्यत इति चेत्? न। तत्रोत्पत्तिवाक्यविशिष्टेनावरोधाद्विकल्पसमुच्चयौ न सम्भवतः। संनिधौ च विपरिवर्त्तमानं कर्मान्तरं शक्यं कल्पयितुम्। विधीयमाने ऽपि स्वर्गशब्द आत्मानमुपस्थापयत्येव। सर्वप्रयत्नपुरुषार्थत्वेनोपस्थाप्यमाने यद्यन्यः श्रूयेत, साध्यता न स्यात्। न चाऽन्यः पुरुषार्थः श्रूयते। तस्मादयमेव पुरुषार्थतां प्रतिपद्यते। तस्मात्कर्मान्तरे ऽपि कल्पिते स्वर्गः सिध्यत्येव। तस्मान्निर्ज्ञातस्य फलमिदम्। तत्र च धात्वर्थे किं चिद्विधीयते इति

वाच्यम् । अन्यत्र विधाने श्रुतिः । अतो वस्तुतः शब्दाच्च स्वर्गः कर्तव्यः ।

प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसम्बन्धस्तस्मात्कर्मोपदेशः स्यात् ॥ ३ ॥

आनन्तर्य्यश्रुत्या यागस्य कर्तव्यता । प्रत्ययः पुनः स्वार्थे भावनायां पुरुषं प्रवर्त्तयति । सा च प्रयोज्यादिभिरविनाभूता तेन यन्नियतं तदेव पुरुषार्थप्रयोज्यत्वेनाकाङ्क्षति; न यागम् । यश्च भावनाव्यापारः सामान्यरूपस्तत्र यागादयस्तं विशेषयन्तः साधनांशेन सम्बध्यन्ते । व्यापारोद्दिष्टफलसाधनात् साध्यभूतोऽपि धात्वर्थः करणमुच्यते । परशुवत्स हि पुरुषव्यापारव्याप्यो ऽपि करणं भवति । व्यापारोद्देश्यद्वैधीभवनं तदधीनमिति । एवमिहाऽपि यागस्य साध्यत्वं करणत्वं च नानुपपन्नम् । सोऽपि प्रयोज्यमुत्पादयन्निति कर्त्तव्यतामभिलषति । अत एभिरंशैः परिपूर्णा । ततः प्रत्ययो भावनायां पुरुषं प्रवर्तयति । तस्मान्नैव कदाचिद्यागे प्रत्यय उपनिपतति सत्येवानन्तर्ये । अतो यत्र कर्त्तव्यतावचनस्तत्र पुरुषार्थाः साक्षात्पारपर्य्येण वा ऽविनाभूताः । तस्माद्यागस्य कर्त्तव्यता प्राप्ता । सा भावनाशब्दस्य नियतपुरुषार्थप्रयोज्यत्वाद्बाध्यते ।

अपि च प्रत्ययोच्चारणानन्तरमेव तिस्र आकाङ्क्षा उत्पद्यन्ते । तत्र यदि प्रथमांशे पुरुषार्थ उपनिपतति द्वितीये च यागस्ततः कतरशब्दस्य बाधा कृता । अथ किमंशे याग उपनिपतति ? ततो नियतप्रयोजिका प्रत्ययस्य शक्तिः, सा बाध्यते । कर्मणां चाऽऽनर्थक्यम । तस्माच्छब्दवस्तुभ्यां करणभूतो यागः । अथ वा ऽन्यप्रकारेण यागस्य करणता । कथं ? स्वर्गमात्मस-

म्बन्धित्वेन प्रार्थयमानः स्वर्गकामो ऽभिधीयते । स च स्वर्गमभिलषमाणा उपायमभिलषति । तस्मादनयोरविनाभावात्स्वर्गकामशब्देन शक्यते तदुपायो लक्षयितुम् । अतः शास्त्रेण यागादयस्तत्रोपायत्वेन विधीयन्ते । अतो न स्वर्गकामशब्देन स्वार्थो विधीयते । अभिधीयते इत्यर्थः । अनेन ग्रन्थेनोपायलक्षणार्थं स्वर्गकामशब्दं ब्रवीति । तत्र वाक्यादवगतस्य कामस्य कर्त्तव्यता ऽवगम्यते । यागस्य करणतेति । अथ वा स्वर्गकामस्य यागो विधीयत इति पक्षान्तरावलम्बनेनास्यार्थवत्ता भविष्यतीति यागं कुर्यादित्येतस्मात्पक्षान्तरं यागेन कुर्यादिति । अथ वा स्वर्गकामस्येति । अतः स्वर्गकामस्येति द्रष्टव्यम् । उपपद्यन्तरस्याऽनुक्तत्वात् ।

नन्वेतस्मिन्नपि पक्षे स्वर्गकामस्य यागो विधीयते न यागात्स्वर्ग इति को ऽभिप्रायः ? पदार्थपूर्वकत्वाद्वाक्यार्थस्य यागेन स्वर्गमिति यदि श्रूयेत तत इदं साध्यमिदं साधनमिति स्यात् । न च यागेन स्वर्गमिति श्रूयते । तस्मात्पूर्वोक्तो दोषस्तदवस्थ एव । नैतदेवम् । तस्मिन्खलु वै पक्षे स्वर्गं प्रार्थयमानस्याऽनुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयत इत्यदोषः । स्वर्गं प्रार्थयमानस्तत्सम्बन्धितयोपायमप्यभिलषति । न ह्युपायादृते उपेयमस्ति । तस्मात्स्वर्गकामशब्दः शक्नोत्युपायं लक्षयितुम् । स च लक्षितः सन्नुपायत्वेन विधीयते । पदान्तरोपात्तो यागो विशेषः । तेन पदार्थपूर्वक एव वाक्यार्थः । तस्मात्फलत्वे कर्मणां युक्तमधिकारलक्षणमारब्धुमधिकारीति कर्मणामुपरिभावेनावस्थितः स्वामीत्यर्थः ।

कर्तुर्वा श्रुतिसंयोगाद्विधिःकार्त्स्न्येन गम्येत ॥ ५ ॥

द्रव्यपरित्यागाद्यभावादसामर्थ्याद्देवादीनामनधिकारः ।

मनुष्येषु वाचनविष्णुक्रमणाज्यावेक्षणे ऽप्यसमर्थो नाऽधि-क्रियते । कुतः ? इतिकर्त्तव्यतांशे वाचनादीनां गृह्यमाणत्वा-त्क्रत्वर्थता । तैर्विना फलमेव नास्ति । न च भृग्वादयो भृग्वा-दिसगोत्रा इत्युक्तम् । अनादिर्हि कालो ऽस्माकं न देवा देवता-न्तराभावादिति येषां शब्द एव देवता तेषामप्ययुक्तो ग्रन्थः ।

लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः ॥ १६ ॥

ग्रहाधिकरणे विभक्तिवाच्यस्यैकत्वस्याविवक्षोक्ता; न प्रा-तिपदिकार्थस्य लिङ्गस्य । तस्मादयं पूर्वपक्षवादिनो ऽभिप्रा-यः । अर्थस्योद्दिश्यमानस्याऽपि यथा विवक्षा, एवं तद्वा-च्यस्य लिङ्गस्यापीति ।

स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥

पत्नी आज्यमवेक्षते यजमानश्चेति । तस्माद्विरवेक्षणसंस्कृ-तमाज्यं प्रयोगाङ्गम् । एकावेक्षणे वैगुण्यं स्यात् । पत्नी च न या का चित् किं तर्हि यज्ञस्वामिन्यां पत्नीशब्दं स्मरन्ति । एवं यजमानशब्दमपि । तस्माद्यादृशं कर्तृत्वमितिकर्तव्यतापेक्षायामव-गतं,तादृशं प्रयोगवचन उपसंगृह्णाति । अध्वर्य्वाद्युपन्यासस्त्व-युक्तः । कथं ? व्यापारान्तरे ऽध्वर्य्वादीनां कर्तृत्वात्तत्रैकवचनस्य नास्ति विघातः । पत्नीयजमानयोस्तु य ऋत्विगागमने देवतोद्देशे च व्यापारः स एक इत्येकसङ्ख्या विरुध्यते । तस्माद्यद्येको देवतोद्देशेन परित्यागं कुर्यादितरो याजमानं, नैवं विरोधः स्या-त् । तस्माद्द्वयोः कर्तृत्वतुल्यत्वाद्विरोधः । अवश्यं च पत्न्या सह यष्टव्यमित्यादिस्तु युक्तो ग्रन्थः । कथं ? उद्वाहकाल एवा-ऽनयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितम् । धर्मे चाऽर्थे च

नातिचरितव्येति प्रतिपादितत्वाद्यस्याग इतरेतरसंसृष्टयोरेव । कथमेकवचनम् ? द्वयोश्चैतयोः संसृष्टकर्तृता । तत्रैकवचनमुपपद्यत एव संसर्गाभिप्रायं मिथुनकारकत्वाभिप्रायं वा । तयोश्च विभागः प्रतिषिद्धो न भर्त्रा सह विभजेतेति । तस्मान्नास्ति भिन्नयोः कर्तृता ।

आधानं च द्वियज्ञवत् ॥ २२ ॥

यजेतेति संख्या मिथुनाभिप्राया । आधाने ऽपि प्राप्तं वसानाविति मिथुनद्वयं तन्निवार्य्यते । अतः पूर्वः पक्षः । यदावधीयातां तद्वसनाविति । आधाने द्वित्वविधाने धात्वर्थे किञ्चिद्विहितमिति श्रुत्यनुग्रहः । इतरत्राऽपि यद्याधाने क्षौमं विधीयते तत्र क्षौममधिकरणत्वेन प्राप्नोति । अथ वसने क्षौमं विधीयते ततः क्षौमं वसनाङ्गमाधानस्यानङ्गत्वादनर्थकम् । वसनप्रातिपदिकस्यैवौकारेण श्रुत्या सम्बन्धः । पदान्तरत्वात् क्षौमसम्बन्धो वाक्येन तादृशस्य प्रत्ययेन परामर्शादत्यन्तं वाक्यं स्यात् । वसानाविति सङ्ख्यासङ्ख्येयसम्बन्धः । तत्र सङ्ख्यया नान्यसंख्येयं ग्राह्यं, संख्येयेन च न संख्येतीतरेतरनियमः । यथा ऽरुणैकहायनयोर्नियमः । तस्माद्द्वावत्र पुमांसौ प्राप्तौ । स्त्रीग्रहणे सङ्ख्यासङ्ख्येयसम्बन्धो बाध्येत । द्वितीयस्य पुंसो ऽस्ति पर्य्युपस्थापकः । यथा घटावानीयेतामित्युक्तो द्वितीयो घट एवानीयते न श्वादिः, एवमिहापि । आह—वसानाविति नाऽयं केवलपुल्लिङ्ग एव स्त्रीपुंसयोरप्यभिधाता भवतीति । अस्य न पुंवद् द्वित्वविशिष्टं द्रव्यमभिधेयं न च स्त्रीपुंसद्वित्वविशिष्टम् । तस्मादुभयोर्यत्सामान्यं तद्वाच्यं किं तत्पुंस्त्वं द्वित्वं चेति । तत्र प्राप्तं न विधेयम् । तस्मात्क्षौमं विधीयत इत्यन्तर्नीताभिप्रायः

परिचोदयति । अथ वा शब्दार्थमेवोभयप्रकारं मन्यते प्रयोगदर्शनात् ।

अत्रोच्यते । यत्र नार्थः प्रकरणं वा विशेषकं विधायकश्च शब्दो नानुवाद इति । को ऽभिप्रायः ? कुक्कुटावानय मिथुनं करिष्याम इत्यत्र सामर्थ्याद् द्वितीया स्त्री आनीयते । यत्र वा स्त्रीपुंसावधिकृतौ यत्र चौकाराभिधेयं प्राप्तत्वान्न विधीयते तत्र स्त्रीपुंसौ गृह्येते । इहेदं त्रितयमपि नास्ति । अत औकारो द्वितीयं पुमांसं शक्नोति पर्युपस्थापयितुं न स्त्रियम् । अन्वयव्यतिरेकाभ्यां पुंस्त्वं द्वित्वं चाभिधेयम् । द्वयोरपि पुंसोः प्रयुक्तः स्त्रीपुंसयोरपि । तत्रानेकशक्तिकल्पनाभयात्पुंस्त्वं द्वित्वं चास्य वाच्यमित्यध्यवसीयते । युगपदधिकरणवचनतायां द्वन्द्वस्मृतेरित्येवमादिना यथासङ्ख्या पूरणी न गृह्यते । स्त्री तु प्रतिपाद्यते । कथं ? द्वन्द्वे धवशब्द आत्मीयमर्थमितरापेक्षमभिधत्ते । इतरापीतरापेक्षमितीदृश ऽर्थे स्मर्यते । द्विवचनबहुवचनानपपत्तेश्चेति यदि धवशब्दः खदिरानिरपेक्षमात्मीयमर्थमभिधत्ते तदेकत्वाद् द्विवचनबहुवचने न स्याताम् । दृश्येते च द्विवचनबहुवचने । तस्मात्तुल्यं द्वितीयं प्रातिपदिकार्थमपेक्ष्य द्वित्वादिसम्भवः । मित्रयोर्वरुणयोरिति च दर्शनादिति न द्वौ मित्रौ स्तो न वरुणौ तत्र द्वित्वं नोपपद्यते, अन्योन्यापेक्षया घटते । इतरेतरयोगे च चार्थे द्वन्द्व इति विधानाद चकारः समुच्चयान्वाचयेतरेतरयोगसमाहारेषु वर्तते । तत्र समुच्चयान्वाचययोर्नास्ति समासः । समाहारेतरेतरयोगयोः समासः । ततो ऽपि युगपदधिकरणवचनतायां द्वन्द्वः । द्वन्द्वापवादत्वाच्चैकशेषस्येति । यो हि द्वन्द्वस्य धर्म इतरेतरयोगो नाम, स एकशेषस्याऽपि । इयांस्तु विशेषः । एकत्र शब्दश्चार्थश्च द्वावपि भिन्नौ । इतर-

र्थो भिन्नः। शब्द एक एव। यसानाविस्तेकरोषत्वाद्विती- येन पुंसा भवितव्यम्। पुमांन्हि श्रूयते द्विवचनश्रवणात्। स इतरमन्यपेक्षस्तस्य पुमानेव द्वितीयःपुंसो ऽस्ति पर्युपस्थापकं न स्त्रियाः। यत्र स्त्रीपुंसौ सहोच्चार्येते तत्र पुमान्सद्वितीय इत्यौकारान्तः प्राप्नोति। स्त्रीसद्वितीयत्वे ऽकारान्तः। तत्रौकारः प्रयुज्यमानः साधुर्न स्त्रीपुंसौ वाच्यौ।

गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात्॥ २ ३॥

क्षौमशब्दस्यानुवादो न घटते। अप्राप्तत्वान्न लक्षणया ऽनुवादः सादृश्येन। न हि क्षौमं मलिनत्वेन विना ऽऽत्मानं लभते,येन तल्लक्षयेत्। यथा शुक्लादिगुणो द्रव्येण विना न भवतीत्यविनाभावाद् द्रव्यं लक्षयति, नैवमिह। विना ऽपि मलिनत्वेन क्षौमस्य सद्भावो ऽस्त्येव। अतो नास्ति लक्षणया ऽवबोधः। अथ विद्यते क्षौमे मलिनतेति, सा हि कार्पासा- दावपि विद्यते। असाधारण्येन हि लक्षणा भवति। न हि सादृश्यं हेतुरुपपदाभावात्। सामानाधिकरण्येन हि भवति सादृश्यं,यथा सिंहो देवदत्त इति। अवयवप्रसिद्धिरपि समुदा- यप्रसिद्ध्या बाध्यते। तस्मादनुवादाभावाद्विधेयमेतत्। यः प्रकरणागतः पुरुषस्तस्यार्थप्राप्तं वसने क्षौमं नियम्यते। स प्रकरणगतः शक्नोत्यपूर्वं लक्षयितुम्। तत्रैतद्विधीयते न पु- रुषस्वरूपे। यथा व्रीहयः शक्नुवन्त्यपूर्वं लक्षयितुम्, एवमिहाऽपि यसानाविस्युत्पत्तिवाक्ये स्त्रीपुंसयोः प्राप्तत्वादनुवादः।

तस्या यावदुक्तमाशीर्ब्रह्मचर्य्यमतुल्यत्वात् ॥ २४ ॥

आशीःशब्देन केशश्मश्रुवपनादयः संस्कारा लक्ष्यन्ते,

नोभयोरपि भवन्ति । पुरुषार्थत्वेन ब्रह्मचर्यमुक्तं,तथा क्रत्वर्थेनापि दृश्यते । एवं चेद्ब्रह्मचर्येण क्रतोर्वैगुण्यम् । इतरथा पुरुषार्थत्वान्न स्यात् । श्रुक्रं यजमानोऽन्वारभते इत्येवमादिषु तस्योपादीयमानत्वात्पुंलिङ्गं विवक्षितम् । यजमानकाण्डे ऽपि ये समाख्यायन्ते ते ऽपि यजमानकर्तृका एव । तत्र ये मन्त्रास्ते यजमानेनैवोच्चारणीयाः । कथं ? स हि विद्वानितरा त्वविद्या । अन्यथाऽनुपपत्त्या ऽध्येष्यत इति चेत् ? सा ऽपि यजमानविद्वत्तया ऽन्यथानुपपत्तिः क्षीणा । तदीयेनैवाध्ययनेन निराकाङ्क्षत्वान्न प्रतिषिद्धमध्ययनं करिष्यति । एवं चेद्याजमानमित्यन्यतरस्मात्तद्धितोत्पत्तौ कृतायां ये ऽप्यमन्त्रवन्तः पदार्थास्तानपि यजमान एव करिष्यति । यद्यपि तेष्वविद्वत्त्वान्नास्ति दोषः,तथा ऽपि यजमानेनैव केवलेन तद्धितस्योत्पद्यमानत्वात्पत्न्या अननुष्ठानम् । न च पत्नीयजमानयोः कृतैकशेषयोस्तद्धितः,प्रमाणाभावात् ।

## द्व्याधानं च द्वियज्ञवत् ॥ ( ६—१—२२ )

पूर्वाधिकरणे एकवचनं मिथुनाभिप्रायं, संसर्गकारकाभिप्रायं वेत्युक्तम् । इहाऽपि द्विवचनं तथैव । द्वे कारकशक्ती द्वे च मिथुने भवीत्यनेन प्रसङ्गेनारभ्यते । क्षौमाधानसम्बन्धो न वसनव्यवधानात् । वसानावादधीयतामिति सामानाधिकरण्यादुपपद्यते सम्बन्धः । क्षौमे आदधीयातामिति सामानाधिकरण्याभावान्नास्ति सम्बन्धः । सम्बध्यमानं वा ऽऽधानस्याधिकरणं स्यात् । क्षौमवसानसम्बन्धेन सामानाधिकरण्यमधिकरणदोषश्च नास्तीति चेत् ? वसनक्रियाकर्तुरुपसर्जनभूतत्वान्नान्येन सम्बन्धयितुं शक्यते । कर्त्रा ऽपि नास्ति सम्बन्धः । व-

सनक्रियोपसर्जनीभूता ऽपि पुनर्विपरिवृत्त्य सम्बध्यत इति चेत् ? न । विधीयमाना हि क्रिया भाव्यमानत्वात्कारकैःसम्बध्यते । अविधीयमानाया न कारकैर्भवति सम्बन्धः । अविधीयमाने क्षौमं सम्बध्यमानं लौकिके ऽपि स्यात् । तत्राऽदृष्टार्थता ऽपि स्यात् ।

किं च क्षौमवसानयोः सम्बन्धमादधीयातामिति कुर्यात् । तत्रासन्नं वाक्यम् । प्रत्यय उपश्लेषलक्षणया श्रुत्या धात्वर्थं विधत्ते तदङ्गं वा । इह द्वयमपि न विधत्ते धात्वर्थं धात्वर्थस्य वा ऽन्यत् । तत्परायाः श्रुतेरभावात् । वसानर्भवेति विधीयमाने धात्वर्थे किञ्चिद्विधानाच्छ्रुतिः वसानशब्दस्याऽप्येकपदोपात्तत्वादौकारेण श्रुत्या सम्बन्धः । क्षौमेण पदान्तरोपात्तत्वाद्वाक्यम् । श्रुतिश्च वाक्याद्बलीयसी । तस्माद् द्वौ पुमांसावाधाने विधीयेते । कस्मात्पुनः पूर्वपक्षवादिना ऽनुमानेन द्वितीयः पुमान्दृष्यते ? न पुनरौकारेण द्वौ पुमांसावभिधीयेते इति ब्रवीति । येन सिद्धान्तवादिनः परिचोदनैव नोत्तिष्ठति ।

उच्यते । यदि पुमांसौ वाच्याविति ब्रूयात्ततो ऽनैकान्तिकत्वं भवति । यथा द्वयोः पुंसोर्दृष्टस्तथा स्त्रीपुंसयोरपि दृष्ट एव । तत्र क्षौमविधानात्स्त्रीपुंसयोरप्राप्तत्वात्पूर्वपक्षानुत्थानं, तन्मा भूदिति न्यायात्पुंद्वयं प्रतिपाद्यते न शब्दात् । यत्र नार्थः प्रकरणं वा विशेषकं विधायकशब्दो नानुवाद इति पूर्वपक्षविपरीतो ऽयं ग्रन्थः । कथं ? यत्रैतानि कारणानि तत्र स्त्रीसद्वितीयो गृह्यते । इह च प्रकरणात्स्त्रीसद्वितीयः पुमान्प्राप्तः । एवं चेत्सैव ग्रहीष्यते । किं च क्षौमपदानुग्रहात् ।

उच्यते । प्रत्ययविप्रकर्षाश्रयविहितकल्पनात्सामानाधिकरण्याच्चोक्तं न विधीयते । क्षौमं वसानाविति चोच्चार्यमाणं स्व-

रसेन द्वौ पुमांसाववगमयति। अत एतस्मिन्स्थित इदमुक्तम्। औकारस्य पुंस्त्वं द्वित्वं च वाच्यमिति कथं ब्राह्मणाविति द्वयोः पुंसोरौकारः प्रयुक्तः? कुक्कुटाविति स्त्रीपुंसयोस्तत्र यदि द्वे अभिधेये स्यातां द्विरदृष्टं भवेत्। उच्चरिते च संशयः स्यात् कतरवचनेनाभिहितमिति। अतो वचनयोः सामान्यं तद्वाच्यं तत्र पुमानुभयत्रापि विद्यते द्वित्वं च। तस्मादेतदेवाऽस्य वाच्यम्। पुमानेव कथं द्वितीय इति चेत्? उच्यते। यत्र द्वित्वं तत्र पुमान् यत्र पुमान् तत्र द्वित्वम्। अनयोः परस्परनियमः। एकपदोपादानाद्यस्यां क्रियायां द्वित्वं तस्य पुंस्त्वम्। अनयोः परस्परसम्बन्धो ऽरुणादिवद् द्वित्वस्याश्रयेण भवितव्यम्। स्त्रिया अनबोधकं नास्ति। द्वित्वं तावन्नावबोधयति। विना ऽपि स्त्रियोपपद्यमानत्वात्। पुमानपि न शक्नोत्यवबोधयितुम्। असम्बन्धादौकारो ब्रूते पुल्लिङ्गं द्वित्वं च। द्वित्वसंख्यापूर्वकं वाह्यं तत्रेतरत्। तत्र कतरस्स्यात्पुमान्। पुमाञ्छक्नोति पुमांसमवबोधयितुम्। तस्मात् न्यायाद् द्वौ पुमांसौ। न च विग्रहकाले ऽपि स्त्रियाः श्रवणम्। वसानश्च वसाना चेतीदृशस्याभावात्कथमभावः? युगपदधिकरणवचनतायां द्वन्द्वस्मृतेः 'यत्र द्वौ बहवो वा युगपदभिधातुमिष्यन्ते, तत्र द्वन्द्वसमासो भवती'त्युक्तमिदम्।

उच्यते। समासः प्रमाणान्तरेण सम्बन्धे भवति। धवखदिरयोश्चाङ्गाङ्गिस्वस्वाम्याश्रयाश्रयिसम्बन्धो नास्ति। क्रियया च सम्बन्धः समासोत्तरकालभावी। सर्वे च समासाः सम्बन्धोत्तरकालिम्। यथा राजपुरुष इति स्वस्वामिभावे ऽवगते, चित्रगुरिति चित्राभिर्गोभिः सम्बन्धे ऽवगते, पञ्चपूलीति समाहारसम्बन्धोत्तरकालमुपकुम्भमिति समीपसम्बन्धोत्तरकालं, न चेह धवखदिरयोः सम्बन्धो ऽस्ति। उच्यते। ए-

कशब्दाभिधेयत्वमनयोः सम्बन्धः। तत्र समासो ऽभिमते भवति विग्रहस्त्वीदृशः। धवौ च खदिरौ चेति द्विवचनबहुवचनोपपत्तेश्चेति। यदि धवेन केवलेन धव एवाभिधीयते खदिरेण च खदिरः, एवं खदिरात्परं द्विवचनं न प्राप्नोति। अतो द्वावप्यभिधीयेते। लौलिको ऽयं न्यायः प्रदर्शितः। प्रमित्रयोर्वरुणयोरिति प्रदर्शनान्मित्रस्यैकत्वाद्वरुणस्य च द्विवचनं न प्राप्नोति। इतरेतरयोगे च द्वन्द्वविधानादिति चार्थे द्वन्द्व इति सूत्रस्यार्थः प्रदर्श्यते। चशब्दः समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। तत्र समुच्चये धवमानय, खदिरमानयेति समासो नास्ति। अन्वाचये काष्ठमानय शाकमप्याहर्तव्यमिति। तत्र काष्ठान्यरण्यगमनप्रयोजकानि। इतरदप्रयोजकम्। समुच्चये द्वयमपि प्रयोजकं द्वयोः समानीयमानयोरितरेतरयोगो ऽनुनिष्पादी भवति। चकारस्य तत्फलम्। तत्कृते चार्थे द्वन्द्व इति तत्रैव कदा चिदितरेतरयोगो विवक्षितः। समाहारः प्रचयादवगम्यमानो ऽविवक्षितः। कदा चित्समाहारो विवक्षित इतरेतरयोगो नान्तरीयकः। एतयोरर्थयोर्द्वन्द्वः। समाहारविवक्षायां धवखदिरमिति प्रयोगः इतरत्र धवखदिराविति प्रयोगः। द्वन्द्वापवादत्वाच्चैकशेषस्य। यथा द्वन्द्वे यौगपद्येन द्वावभिधीयेते विग्रहश्च, तथैकशेषे ऽपि वसानाविति चैकशेषस्ततो द्वौ पुमांसौ। ननु यदि धवो द्वित्वाभिधायी खदिरश्च, तयोर्बहुवचनं स्यात्। उच्यते। द्वयोर्द्वित्वयोर्बहुवचनं न द्वयोर्द्विवचनयोः। यदि हि द्वयोर्द्विवचनयोर्बहुवचनं स्यात्, ब्राह्मणौ शोभनौ विद्वांसाविरयत्रापि बहुवचनं स्यादिति। सैषा युगपदधिकरणवचनता दुःखा दुरुपपादा च। कथमेकैकशब्दस्य द्वे द्वे अभिधेये स्याताम्? यदि च स्यातामुक्तार्थानामप्रयोग इति धवस्याप्रयोगः स्यात्।

तस्मादेवं वर्णयन्ति—अत्र आत्मीयमभिधेयमितरसहितं ब्रवीति, एवं खदिरो ऽपि। स कतरो द्वितीय इति तत्र खदिरशब्देन भवो विशेष्यते, भवेनाऽपीतरः। ननु तत्र पाणिनिस्मरणं पुमान् स्त्रियेति? उच्यते। न पाणिनिना ऽर्थानुशासनं कृतं, किं तर्हि यथा लोके ऽवस्थितो ऽर्थस्तथावस्थितस्य शब्दानुशासनं कृतम्। तत्राकारात्पर औकारः श्रूयमाणः पुमांसं सद्वितीयं वदति। यदा स्त्री सद्वितीया तदौकार एकारीभवति। यदा पुनः स्त्रीपुंसावभिधेयौ तदौकारौकारौ प्राप्नुतः द्वयोरभिधेययोर्विद्यमानत्वात्। तत्रौकारः शिष्यत इत्ययं नियमः क्रियते। न तु पुंसा सद्वितीया स्त्र्यभिधीयते।

गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥२३॥

उत्पत्तिवाक्यशिष्टेनैकत्वेनावरुद्धत्वाद् द्वित्वस्यावकाशाभावात्कर्मान्तरं प्राप्नोति। न चेष्यते कर्मान्तरम्। न च क्षौमयोरनुवादो घटते। तत्र शब्दवतीवाक्षौमे मलिने वा। तत्र दुष्टु शब्दे इत्यवयवव्युत्पत्त्या वर्तते। रूढ्या क्षौममेव ब्रवीति। रूढ्या चावयवव्युत्पत्तिर्बाध्यते। व्युत्पत्तावाश्रीयमाणायां शङ्खादीनामपि क्षौमशब्दवाच्यता स्यान्न च तेषु वर्त्तते। मलिनवचने कार्पासादीनामपि मलिनत्वस्य विद्यमानत्वात् क्षौमशब्दाभिधेयता स्यान्न च तेषु क्षौमशब्दः। अमलिने क्षौमे प्रयोगो न स्यात्। अस्ति च प्रयोगः। अमलिनपक्षे च विधिः प्रयोजयति लक्षणा ऽप्यविनाभावादुपपन्ना भवति। न चोपपदेन सहानुच्चरितत्वात् क्षौमसदृशं कार्पासादि शक्नोत्यवबोधयितुम्। यथा सिंहो देवदत्त इति सिंहशब्दोच्चारणे सिंहसादृश्यं देवदत्ते, एवमिहापि। तस्मादुपपदाभावात्सादृश्ये गृह्यमाणे

साधारणशब्दता स्यात् । अविनाभावेन मलिनत्वमवबोधयेताम् । न च मलिनत्वेन विना क्षौमं नोपपद्यते । तस्मादप्राप्तत्वात् क्षौमं विधीयते । वसानाविति पुंस्त्वं द्वित्वं च वदति । तच्च प्रकरणे प्राप्तत्वादनूद्यते । यदुक्तमाधानसम्बन्धो न प्राप्नोतीति, तत्रोच्यते । आधाने क्षौमं कुर्यादिति विधीयेत, तत्कथमाधाने भवति तत्साधनस्य भवत्तदर्थं भवति ? अथ वा ऽस्तु क्षौमवसनसम्बन्धविधानम् । ननु वसनमात्रे स्यात् । उच्यते । आधानप्रकरणे समाम्नानात्तदीयस्य पुरुषस्य यद्वसनं, तत्र भविष्यति । यथा प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवदिति, एवमत्रापीति सिद्धम् ।

तस्या यावदुक्तमाशीर्ब्रह्मचर्य्यमतुल्यत्वात् ॥ (२४)

शुक्रं यजमानो ऽन्वारभत इत्येवमादिषु पुंस्त्वैकत्वयोर्विवक्षितत्वात्पुमान्प्रत्येतव्यः । न चाशीर्वचनं तस्याः । कुतः ? ब्राह्मणमुपनयीतेत्याचार्यकरण आत्मनेपदं भवति । देवदत्त आत्मने आचार्यत्वं भावयति । तत्र देवदत्त उपनयनफलं भजमानः प्रधानभूतः । माणवकस्य तूपादीयमानत्वाल्लिङ्गसङ्ख्यमविवक्षितम् । स तु वेदमध्यापयन्नाचार्यो भवति नाऽन्यथा । तस्मात्पुंसो ऽध्ययनं विहितमितरस्य विधानाभावादवैधता । न चान्यथानुपपत्त्या ऽध्ययनं, तस्या अन्यथा ऽप्युपपद्यमानत्वात् । अतः प्राप्तो ऽध्यापनप्रतिषेधः । अथ वा स्मृतेः प्रतिषेधः । एवं चेदाशीःशब्देन संस्कारा लक्ष्यन्ते ते उभयोरपि भवन्ति । तत्र लिङ्गसङ्ख्यमविवक्षितम् । न च पत्न्या वपनम् । किं कारणं ? केशश्मश्र्विति द्वन्द्वो ऽयम् । तत्रेतरेतरयोगे वपनं निष्पद्यते । केशश्मश्रुणोः संस्कार्य्यत्वात्साहित्यमविवक्षितम् । उच्यते । तयोरपनीतयोरन्यत्र

किंचित्प्रयोजनं श्रूयते, येन संस्क्रियेयाताम् । वपनेनाऽपनीता अमेध्या भवन्ति न च कृतप्रयोजनाः । ततः पुरुषो वपनेन संस्क्रियते । तस्मात्केशश्मश्रुणोः संस्कारार्थत्वेनोपादानाद्विवक्षितं साहित्यम् । ब्रह्मचर्यं क्रत्वर्थतया यदि न विधीयते ततः क्रतुरविगुणः, किं तु पुरुषस्य वैगुण्यम् । तस्मादप्राप्तत्वाद्विधेयं संस्कारेण गतार्थत्वादवाच्यम् । अतो ब्रह्मचर्येण कामा लक्ष्यन्ते ते पत्न्या अपि भवन्ति । येषु नाविधतादोषः । न चोपादीयमानता तत्रानियम इति चेत् ? न । तत्राऽपि मुख्यत्वाद्यजमान एव भवति । अथ वा यद्यप्यमन्त्रकास्ते पदार्थास्तथाऽपि विद्वत्तया तेषु यजमानेन क्रियमाणेषु प्रमादो न भविष्यति । न चान्यथानुपपत्त्या तस्या विद्वत्ता शक्या कल्पयितुं तदीयया क्रतोर्निराकाङ्क्षत्वात् । अथ वा याजमानमिति तद्धितः स्त्रीप्रातिपदिकाद्वोत्पाद्यः पुंप्रातिपदिकाद्वा ? तत्र स्त्रीप्रातिपदिकादुत्पत्तौ समन्त्रेषु विरोधः । न तु पुंप्रातिपदिकादुत्पत्तौ कश्चिद्विरोधः । तस्मात्सर्वं यजमानेन कर्त्तव्यमाहुस्स विहितं पत्न्या च । न च कृतैकशेषयोस्तद्धितोत्पत्तिः प्रमाणाभावात् ।

निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥

वसन्तब्राह्मणकर्तृत्वविशिष्टमाधानमग्न्युत्पत्त्यर्थम् । स चाग्निर्यज्ञाङ्गम् । न च शूद्रस्याग्निरस्ति । विशिष्टेन कारणेनोत्पद्यमाना आहवनीयादयो भवन्त्यलौकिकत्वात् । न च यूपतुल्योऽयम् । तत्र हि बन्धनसमर्थं यत्तदवमतं विशेषस्तत्प्रकरणतः । स शुपपदाद्वा वाक्यान्तराद्वा ऽवधार्यते अयं यूप इति । इह तु ह्येनाहवनीयादीनामाक्षेपात्सामान्यावमतिर्नास्ति । तस्मादन्येनानाक्षेपादाहुत्यो

वा गम्यते स आहवनीयः । स च वसन्ते ब्राह्मणकर्तृको ऽव-गम्यते । तेनान्यकालकर्तृको न भवति आहवनीयः । तदभावे फलाभावः । तस्माच्छूद्रस्यानधिकारः ।

निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात् ॥२७॥

आहवनीयादिभिरर्थाक्षिप्तमाधानम् । न हि तेन विना ऽऽह-वनीयादयः सन्ति । तस्मात्प्राप्तमाधानमनूद्य तत्र वसन्तादिर्गुणो विधीयते । तस्य तेन गुणेन सगुणं शूद्रस्य गुणाभावादगुणमेव ।

अपि वा ऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २८ ॥

निमित्तार्थता न घटते न ह्यर्थादाधानं प्राप्नोति । न हीदं लोके विज्ञायते आधानेनाहवनीयादयो भवन्तीति । शास्त्राद्धय-वगम्यते । तच्च विशिष्टकालकर्तृकमाहवनीयमुत्पादयति । अन्यकालकर्तृकं कथमुत्पादयेत् ? शास्त्रेणाचोदितत्वादाधा-नोत्तरकालाः कामश्रुतयः । न चाधानमेव केवलो ऽभ्युपायः । अग्नीनां गुणद्वयविधानाच्च वाक्यभेदः स्थित एव । बार्हद्गि-रं गवामयने समाम्नायते । अभीवर्त्तो ज्योतिष्टोमे पार्थरश्म-मश्वमेधे विदेशपाठावनुदाहरणम् ।

अपि वा वेदनिर्देशादपशूद्रं प्रतीयेत ॥ ३३ ॥

वसन्ते गर्भाष्टमे ब्राह्मणमुपनयीतेति वसन्तो गर्भाष्टमत्व-मन्ये च नियमा अध्ययनाङ्गम् । पुरुषस्य च स्वाध्यायो ऽध्ये-तव्य इत्यध्ययनं चोद्यते । अत ईदृश्या विशिष्टेतिकर्त्तव्यतया वे-दोपादानं पुरुषार्थम् । क्रतुना ऽर्थाद्वेदो ऽपेक्षित आत्मनिर्वृत्त्यर्थम् । अतः स वेदाध्ययनमप्रयोजयन् प्रसङ्गात्तिराकाङ्क्षीक्रियते ।

अतो यादृशेन निराकाङ्क्षत्वाच्छूद्रस्याऽध्ययनाभावादनधिकार इत्यन्तर्नीताभिप्रायः सिद्धान्तवाद्याह । इतरस्त्वविविताभिप्राय आह ।

गुणार्थत्वान्नेति चेत् ॥ ३४ ॥

क्रत्वङ्गमध्ययनं, संस्कारो विद्यार्थः, विद्या च पुरुषार्था इत्यत्र पूर्व एव न्यायो द्रष्टव्यः ।

विद्यानिर्देशान्नेति चेत् ॥ ३६ ॥

यस्योपनयनादयः संस्कारा विहितास्तस्य ते भवन्तु, इतरस्त्वनुपनीतः पठिष्यति । न च क्रतुवैगुण्यमुपनयनादीनां पुरुषार्थत्वात् ।

अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥

अनुपनीताध्ययने क्रतोर्वैगुण्यम् । कथं ? स्वाध्यायोऽध्येतव्य इति यमनियमादिभिरध्ययनं पुरुषार्थत्वेनावगतं तादृशमेव प्रसङ्गात्क्रतुर्गृह्णाति । न चान्यथानुपपत्त्याऽऽक्षिपति । अन्यथाऽप्युपपद्यमानत्वात् । अतो विशिष्टेनाऽध्ययनेन निराकाङ्क्षीकृतत्वादन्यादृशमध्ययनं न गृह्यते । यथा गोदोहनं दर्शपूर्णमासाङ्गं, प्रणयनेन नैराकाङ्क्ष्याद् बहिःप्रणयनेन विगुणं भवति एवमिहाप्यनियताध्ययनेन विगुणो भवति । अत आह अधीयानस्याऽप्यध्ययनफलं न भवतीति द्रव्यानापेक्षेऽप्ययमेव न्यायः ।

त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥

अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥

न च जाता कश्चिदद्रव्यो नाम, येनेतरे ऽधिक्रियेरन् । न च द्रव्यवान्, येनेतरे नाधिक्रियेरन् । तस्माद्द्रव्यवत्त्वस्याऽनवस्थितत्वात्पूर्वो न्यायः ।

अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥

आर्षेयं वृणीत इति सामान्येन विधिः । एकत्वादयस्तु प्राप्तत्वात्स्तुत्यर्थाः । चतुरादिप्रतिषेधश्चाऽस्मिन्नेव पक्ष उपपद्यते । अथ वा सामान्येन विहित एकत्वादिभिर्विशेष्यते ।

एवं प्राप्ते ब्रूमः । आर्षेयं वृणीत इति साकाङ्क्षं त्रीन्वृणीत इति विशेष्यते । एकत्वादयो ऽत्रयुत्यानुवादाः । इतरथा वाक्यभेदो, ऽदृष्टकल्पना ऽश्रुतकल्पना च । सामान्येन विधिरेकत्वादयो ऽनुवादा इति चेत् ? एवमपि चतुरादिप्रतिषेधाद्वाक्यभेदः स्थित एव । अस्मत्पक्षे पुनरेकवाक्यत्वान्न कश्चिद्दोषः । त्रीण्यार्षेयाणि यः सम्पादयितुं शक्नोति सो ऽपि क्रियते । चतुरार्षेयस्य त्रित्वसम्पादने ऽस्ति सामर्थ्यम् । न चेह वाक्यं त्र्यार्षेय एवाऽधिक्रियत इति । नन्विदमेवास्ति त्रीन्वृणीत इति । त्रीणि यः सम्पादयितुं शक्नोति तस्य वरणमुच्यते । न । यस्य त्रीण्येवेति गुरु वाक्यं भवति । अनपेक्षितश्च सम्बन्धः । न पञ्चातिवृणीत इति पञ्चातिक्रमणप्रतिषेधादिदमवगम्यते । अस्ति पञ्चानां वरणम् । नैतदेवम् । अनुमानादेव तद्वरणं कल्प्यते । न चानुमानेन शक्यः शास्त्रार्थो ऽनुष्ठातुम् । त्रित्ववरणे न पञ्च व्रियन्ते नाप्यतिक्रम्यन्ते एवं लघुत्वेन च स्तुतावेकवाक्यत्वं घटते । इतरथा वाक्यभेदादि स्थितमेव । तस्मात्त्रित्वसम्पादनसमर्थो ऽधिक्रियते । भार्गव इत्येतावन्मात्रं वरणं न कर्त्तव्यम् । मनुवत्पक्षे तु यस्याप्येको, यस्याऽपि पञ्च, तस्याऽपि सकृदेवोच्चारणं मनुवदिति ।

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ॥ ५१ ॥

कर्मधारयो ऽयं न षष्ठीतत्पुरुषः । एवं पदद्वयं स्वार्थवृत्तम् । इतरथा निषादशब्दो लक्षणया स्थपतावध्यारोपितः स्यात् । सामानाधिकरण्यसमासप्रतिपत्त्यर्थमुत्पलशब्दस्यापि तदेवाधिकरणं,नीलशब्दस्यापि । अत एकाधिकरण्यात्सामर्थ्यं, सामर्थ्याच्च समासः । यदि च निषादशब्देन निषाद एवोच्यते,स्थपतिशब्देन स्थपतिरेव, ततो भिन्नाधिकरणत्वात्सामर्थ्याभावः, सामर्थ्याभावात्समासाभावः । तस्मान्निषादशब्देन स्थपतिं यावद्गन्तव्यमित्येषा लक्षणा । न वा ऽत्र षष्ठी विद्यते । अनुपलभ्यमानत्वाल्लुप्तेति चेत् ? उच्यते । यत्रात्राश्रवणेन कारणेन लोपः, स्वादयो लुप्ता इति किमिति न कल्प्यते ? तस्माल्लोपे नास्ति प्रमाणम् । ततो राजपुरुष इत्यत्रापि राजा चाऽसौ पुरुषश्चेतीदृशो विग्रहः कर्त्तव्यः । तत्रापि षष्ठ्यश्रवणादेव नास्ति; किं तु स्वस्वामिसम्बन्धात्षष्ठ्यर्थमध्यारोप्य तदा समासो भवति । राज्ञः पुरुष इति वाक्यमर्थप्रदर्शनार्थम् । तस्मात्स्थपतिशब्दे या विभक्तिः सेतरत्रानुषज्यते । अन्यस्या अश्रवणात् । अथ वा समुदायादुत्पादादुभयत्रापि द्रष्टव्या ।

इति षष्ठाध्यायस्य प्रथमः पादः ।



# अथ द्वितीयः पादः ।

पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥

नन्वितरेतयुक्ता इतरत्राऽप्यनुतिष्ठन्तीतरत्राऽपि । तस्मात्प्रयोगे नास्ति विशेषः । प्रयोगगता ऽधिकारचिन्ता मुक्ता कृत्स्नेन फलेन व्याप्यते फलावयवेन वेति काकदन्तपरीक्षाप्रयोगाविशेषात् । उच्यते । किं कृत्स्नफलार्थिनो यागोपदेश उताऽवयवार्थिनो ऽपीत्युपदेशो ऽधिकार एव चिन्त्यते सत्यप्यनुष्ठानाविशेषे । अथ वा क्रियाफलं कर्तृगामि भवत्येकस्मिन्पक्षे, इतरत्राकर्तृगामि । एवं चेत्समुदायस्य कर्तृत्वान्न ते कर्तारः । ईदृश्यां प्रतीतावस्ति विशेषः । समुदायकर्तृत्वे कर्ममध्य एकस्मिन्प्रमीते नान्य आनेतुं लभ्यते । सिद्धान्ते त्वेकैकस्य कर्तृत्वात्सङ्ख्यापूरणार्थमानीयते ।

नन्वितरत्राऽप्यविशिष्टं सङ्ख्यापूरणम् । द्रव्यभेदात्तत्र सङ्ख्या न कर्तृभेदात् । एवं चेत्सप्तदश प्राजापत्यानित्यत्र यथा पूर्वपक्षे एकस्मिन्पशौ विनष्टे कृत्स्नः पशुगण आवर्तते एवमिहाप्येकस्मिन्नष्टे सप्तदश भूत्वा पुनरादावारभ्य यागमनुतिष्ठन्ति । ईदृशस्य साधनत्वावगमात् । किं तावत्प्राप्तं, फलावयवेनैव सम्बन्धः । कुतः फलं प्राप्नुयाद्यद्येकैकः पृथक् पृथक् प्रयोगः स्यात् । ततो बहुवचनं नोपपद्यते । अपि च यत्कर्म बहुषु फलेषु तदेकत्र प्रयोग एकमेव फलं साधयति । किमुत यदेकफलमेव चोदितम् ? किं च ऋद्धिकामा इत्येकशेषो ऽयम् । तत्र यदी-

तरेतयुक्ताः फलं कामयन्ते तत एकशेष उपपद्यते । द्वन्द्वापवादो ह्ययम् । ननूद्दिश्यमानत्वादितरेतरयोगाविवक्षा । उच्यते । यद्यप्यस्मिन्पदे ऽविवक्षितस्तथा ऽपि यादृशानां साधनभावो ऽवगतस्तादृशानामेव फलसम्बन्धः । इतरेतरयुक्ताश्च फलसाधनत्वेनावगतास्तत इतरेतरयुक्ता एव फलेन सम्भन्त्स्यन्ते ।

एवं प्राप्ते ब्रूमः । यस्मिन्प्रीतिः पुरुषस्येत्यनेन न्यायेनैकैकस्य फलं प्रार्थयमानस्य सत्रमुपायो विधीयते; न सत्रं प्रति ते विधीयन्ते । कर्त्रभिप्राये क्रियाफल आत्मनेपदं भवति । यदि चैकैकः कर्ता ततो बहुत्वात्कर्तॄणां बहुवचनमुपपद्यते । इतरथा परिषद एकत्वात्कर्तृभेदाभावः, कर्तृभेदाभावाद्द्वन्द्वत्वमनुपपन्नम् । अथ कर्तृत्वे श्रुतं द्रव्येषु कल्प्येत, ततो ऽयमेव दोषो यदन्यत्र श्रुतमन्यत्र कल्पितम् । सामादिभिः प्रयोक्ष्यत इति फलं प्रार्थयतः सत्रमुपायो विधीयते । तच्च बहुकर्तृकं फलसाधने समर्थं तत्र मया सह भवता यष्टव्यं नान्येनेत्यस्मिन्विषये सामादयो ऽवतरन्ति । यद्येकैकस्य कर्तृत्वमितरे सङ्ख्यापूरणार्थाः स्युस्ततः कर्तृत्वाभावाद्बहुवचनाभाव इति स एव दोषः । यदुक्तम् " प्रयोगभेदाद्बहुवचनाभाव " इति । तदुच्यते । स एव प्रयोग एकैकस्य तुल्यस्तत्र न गम्यते विशेष इतरस्य प्रयोगो नेतरस्येति । देवतोद्देशेन द्रव्यस्य यः सङ्कल्पः स एकैकस्याऽविशिष्टः । एवं च प्रयोगभेदो न लभ्यते ।

अपि वोत्पत्तिसंयोगाद्यथा स्यात्सत्त्वदर्शनं तथा भावो विभागे स्यात् ॥ २ ॥

नाऽत्रोत्पन्नसंयोग, उत्पन्नस्यैवाऽत्र सङ्ख्यया कर्म संयुज्यते । ऋद्धिकामा इत्यत्रोत्पत्तिवाक्य एव कर्तृगामिनी सङ्ख्या श्रूयते ।

यदि गुणवाक्ये श्रूयेत न यागे, तत एकैकस्य क्रियाफलेन सं-योगो न स्यात् । तस्मिन्पक्षे न फलेन व्याप्यमानाः स्युरित्यु-च्चार्यन्ते किं तर्हि, यागो बहुसङ्ख्याविशिष्टः कार्य इत्येव-मर्थमुच्चार्यन्ते ।

प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥३॥

ननु यागनिर्वर्त्तकत्वेनोपादीयमानत्वाद्विवक्षिता सङ्ख्या । कुतः संशयः ? उच्यते। फलेन व्याप्यमानत्वात्कर्त्ता प्रधानभूतः । प्रधानभूतस्य चाविवक्षिता सङ्ख्या । तत्रासौ नान्तरीयकत्वाद्याग-मनुतिष्ठति । तस्यां विवक्षायामविवक्षिता सङ्ख्या । अथ वा यागप्रयोगनिर्वर्तकत्वेन कर्तोपदिश्यते । उपदेशाच्च विवक्षिता सङ्ख्या । किं प्राप्तम्, अविवक्षिता, यजेत स्वर्गकाम इति सामाना-धिकरण्यं, स्वर्गेण कर्त्ता व्याप्यते । भवति व्याप्यमानश्च प्रधा-नभूतस्ततो ऽस्मिन्पदे ऽविवक्षिता सङ्ख्या । यजेतेत्यत्राऽपि यद्य-विवक्षितैव ततः सामानाधिकरण्यमुपपद्यते । एकत्र विवक्षिता सङ्ख्या नेतरत्रेति नास्ति सामानाधिकरण्यम् । किं च सर्वः फले-नाहं व्याप्येय इत्येवमर्थं यतते । तत्रेतरथा फलमहं न प्राप्नु-यामित्यर्थाद्यागमनुतिष्ठति । एवं चेदचोदितत्वाद्यागे कथं तस्य सङ्ख्या विवक्ष्येत ? प्रयोगे पुरुषश्रुतेः प्रयोगे पुरुषस्याऽश्रव-णादित्यर्थः । अथ वा प्रयोगे पुरुषश्रुतेः प्रयोगे पुरुषं श्रावयि-त्वा कृतार्थः शब्दस्तेन यागः कार्य इति । यदीदृश उपदेशो भ-वेत्ततो निर्वर्त्तकत्वेन विवक्षिता सङ्ख्या स्यात् । न चेदृश उप-देशो ऽस्ति ।

प्रत्यर्थं श्रुतिभाव इति चेत् ॥ ४ ॥

फलेन व्याप्यमानस्य नान्तरीयकत्वाद्यागे गुणभाव इति,

एतन्नोपपद्यते । कथं ? स्वर्गः साध्यो यागः साधनम् । तत्र साध्यसाधनसम्बन्धो विधीयते । न ह्यर्थाद्यागः साधनं प्राप्नोति । अतो विधीयमानो निर्वर्त्तकं कर्तारमपेक्षते तत्परिच्छेदिकां च सङ्ख्याम् । तस्मादस्मिन्पदे विवक्षिता सङ्ख्या । पदार्थपूर्वकत्वाच्च वाक्यार्थस्य यादृशो ऽर्थः पदवेलायामवगतस्तादृश एवोत्तरेण पदेन संबध्यते । तस्माद्यद्यपि स्वर्गकामपदेन नियता सङ्ख्या प्राप्ता, तथा ऽप्यनया ऽप्याख्यातनियतविशेषणविशेष्यतया सामानाधिकरण्यमुपपद्यते । अथ चोपादीयमानत्वाद्विवक्षिता सङ्ख्या व्याप्यमानत्वादविवक्षिता । न चान्ययुक्तेन क्रियमाणो यागः फलं साधयति यदा विवक्षिता स्यादाख्यातसङ्ख्या । न च वाक्यभेददोषः । यत्र सकृदुच्चरिते द्वे विवक्षिताविवक्षितत्वे भवतस्तत्र वाक्यभेद, इह तु भिन्नपदोपादानाद्विवक्षाऽविवक्षादोषो नास्ति ।

यदुक्तं न यागः कर्त्तव्य उपदिश्यते यागेन वा कर्त्तव्यमिति, उच्यते । यागं कुर्यादिति सत्यं नोपदिश्यते । यागेन कुर्य्यादिति यदि नोपदिश्येत ततः साध्यसाधनसम्बन्धाभावात्फलं न स्यात् । ततश्च सर्वमेव नोपपद्यते । स्वर्गकाम इति न विधीयते । अनर्थकं वाक्यं स्यात् । तस्माद्विवक्षिता सङ्ख्या । सिद्धान्तसूत्रमिदं न सुविवृतम् ।

तादर्थ्ये न गुणार्थता ऽनुक्ते ऽर्थान्तरत्वात्कर्तुः प्रधानभूतत्वात् ॥ ५ ॥

फलेन व्याप्यमानत्वात्प्रधानभूतः । प्रधानभूतश्चेदविवक्षिता सङ्ख्या । अतो यजेतेति या सङ्ख्या प्रतीयते सा गुणभावांशेन विवक्षितेत्येतन्नानुक्ते न्याये स्यात् । उक्तश्च न्यायो, व्या-

प्यमानगता सङ्ख्या ऽविवक्षिता । तद्विरोधादितरदप्यविवक्षितम् ।

अपि वा कामसंयोगे सम्बन्धात्प्रयोगायोपदिश्येत प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ॥ ६ ॥

फलेन व्याप्यमानस्यैकत्वाद्यविवक्षा । स चार्थात्फलेन व्याप्तिमात्मन इच्छति । या ऽत्र पदे विवक्षा सा न शास्त्रात्किं तर्ह्यर्थात् । यजेतेत्येकत्वविवक्षा शास्त्रात् । तत्र यदि द्वे विवक्षिते स्यातां ततो ऽर्थान्तरत्वाद्दोषो भवेत् । तस्माद्यः स्वर्गं प्रार्थयमान आत्मसम्बन्धितया ह्यात्मन इच्छति तस्य यागो ऽभ्युपाय इत्यर्थादवगम्यते । तस्मादनेन प्रकारेण विवक्षितमेकत्वम् । अथ वा यजेतेति भावना प्रतीयते । कालोपग्रहनिमित्तादिविशिष्टा तत्र सङ्ख्या गुणभूतस्य पुरुषस्य परिच्छेदिका येनांशेन व्याप्यते तेनांशेनाविवक्षिता । तदुभयमप्यनन्यगम्यत्वादुभयमस्मिन्विवक्षितम् ।

अन्यस्यापीति चेन्न ॥ ७ ॥

यदि स्वर्गकामशब्दः परस्याऽऽत्मनो वा यः स्वर्गं कामयते तत्राविशेषेण वर्तते एवं चेत्परस्याऽपि स्वर्गमिच्छन्यजेतेति ।

अन्यार्थेनाभिसम्बन्धः ॥ ८ ॥

आत्मनेपदात्कर्तृगामि क्रियाफलम् । तस्माद्यो न कर्त्ता तस्य क्रियाफलं नास्ति । सौर्यादीनां त्वाधानात्मनेपदेनाधानकर्तुः फलं भवति । नन्वाधानस्याग्न्युत्पत्तिरेव फलम् । उच्यते । ज्वलनपचनप्रकाशनादीन्याधातुरनाधातुश्च तुल्या-

नीति न तत्फलं नियन्तुं शक्यम् । तस्मादाहवनीयेन यानि साध्यन्ते ऽपूर्वाणि, तदभिप्रायमात्मनेपदम् । दर्शपूर्णमास-ज्योतिष्टोमादिषु यदाहवनीयसाध्यं, तत्रानुवाद्येवात्मनेपदम् । यानि त्वनग्निसाध्यानि, गोदोहनेन पशुकामस्येत्यादीनि तदर्थम् ।

प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात् ॥ १३॥

विगतायामपि फलेच्छायां समापनीयमेव कर्म । कुतः ? आरम्भो निमित्तं कामश्च । तत्र यथा कामे ऽनुष्ठातव्यं तथा ऽपगते कामे आरम्भस्य विद्यमानत्वान्नैमित्तिकी समाप्तिः कर्त्तव्या । सा फले विधीयते । यद्यारम्भो विधीयेत, ततः समाप्तिरविहितत्वान्नावश्यं कर्त्तव्या । समाप्तौ विधीयमानायामर्थाक्षिप्तत्वादारम्भमध्यौ लभ्येते । तस्मात्समाप्तिः शास्त्रचोदितत्वाद्वीतायामपि फलेच्छायां कार्य्या ।

फलार्थित्वाद्वा नियमो यथा ऽनुपक्रान्ते ॥ १४ ॥

फलमात्मन इच्छतो याग उपायो विधीयते । वीतायामपि नाऽसावभ्युपायो भवति । अभ्युपेयाभावात्कथमसौ क्रियते ? न वा ऽऽरम्भो निमित्तम् । यद्वृत्तसम्बन्ध्योरभावात् । न च केन चिच्छब्देनारम्भो निर्दिश्यते । कर्तव्योपदेशश्च शक्येष्वर्थेषु भवतीति यागः शक्यः कर्तुमित्यस्मिन्नर्थे कर्त्तव्यतावचनस्य कल्पना शक्या कर्तुम् । ननु त्वदीयो ऽर्थो यागः कर्तव्य इति ।

नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् ॥ १५॥

न स्वाच्छन्द्येन विगर्हन्ते । अशिष्टा एव ते स्युर्यदि कि-

गर्हयेयुर्विना शास्त्रेण। ततः शिष्टाचारात्स्मृतिः, स्मृतेः श्रुतिः, तैत्तिरीयाणां चानन्यपरं वचनमस्ति। आरभ्य यजेतैवेति सिद्धम्।

प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥

त्वन्मतेन तु प्रतिषेधो मम तु पर्य्युदास एव। कथं? न कलञ्जं भक्षयितव्यमित्युपश्लेषलक्षणया श्रुत्या भक्षयतेः कर्तव्यतां तव्यो विदधाति। नकारश्च कर्मव्यवहितत्वान्न कर्त्तव्यतावचनेन सम्बध्यते। तस्मात्प्रच्युतो ऽन्येन सम्बध्यमानः पर्य्युदासो भवति। तत्र नायं कलञ्जेन सम्बध्यते। किंकारणम्? समासत्वात्सुबन्तयोः। समासे सति पर्य्युदासो भवति; नासमासे। अतस्तस्मात्पर्य्युदस्तो धातुना सम्बध्यते। तत्र सुबन्तत्वाभावात्समासो नास्ति। तस्मादभक्षणं कलञ्जादिविशिष्टं फलार्थिना कर्तव्यम्। अथ वा सर्वपदानि भावनोपनिपातीनि। तत्र यद्ययं स्वार्थवृत्तः सम्बध्यते, ततो भावनावैपरीत्येन प्रवर्तते। तस्माद्भावनाविरोधात्स्वार्थं हित्वा लक्षणावृत्तः सम्बध्यते। न च केवलो लक्षणां प्रतिपत्तुं शक्नोति। ततो धातुना सम्बध्यते। तेनैव न्यायेनार्थभावनाविरोधात्तस्याः प्रच्युतो ऽनन्तरेण धातुना सम्बध्यते। तस्मादभक्षणं नाम मानसो व्यापारो ऽनुष्ठेयः। क्रियां कुर्वन्प्रथमं तावत्सङ्कल्पं करोति, तदुत्तरकालं तस्यां प्रवर्त्तते। स्पर्शनादिक्रिया विप्रकृष्टा, मानसस्तु सङ्कल्पो ऽनन्तरः। अतस्तमेवातिष्ठते। प्रतिषेधे ऽपि प्रथमं सङ्कल्पयति; ततो निवर्तते। एवं चोदितत्वान्नान्तरीयकः सङ्कल्पः। यथैवाब्राह्मणमानयेति नकारेण ब्राह्मणजातेरभावः क्रियते, पुरुषजातेर्नाभाव

उच्यते । तस्माद्यत्र पुरुषत्वं विद्यते ब्राह्मणत्वं पर्युदस्तं, स आनीयते, एवमिहापि नकारेण भक्षणं पर्युदस्तम् । यस्तु मानसो व्यापारोऽनुस्यूतः सोऽन्तरङ्गत्वात्कर्तव्यतावचनेन सम्बध्यते । यथा नोद्यन्तमादित्यमीक्षेत । इयांस्तु विशेषः । तत्र शतृप्रत्ययान्तोद्यन्तमित्यनेन निमित्तमभिधीयते । अतस्तत्र नियमनुष्ठानम् ।

शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ २० ॥

तस्य व्रतमित्युपक्रम्य नोद्यन्तमादित्यमीक्षेतेति श्रूयते । व्रतमिति च कर्मनाम । तद्यदि प्रतिषिध्यते, पूर्वमुत्तरेण न संबध्यते । तस्मात्तत्र विरोधान्नञ्प्रच्युतः प्रत्ययानन्तरेण धातुना संबध्यते । इह तु नास्ति व्रतस्थानीयं पूर्ववाक्यम् । अतः श्रुत्या कर्त्तव्यतावचनेन नञ् संबध्यते । धातुसम्बन्धे हि उभे अपि पदे लक्षणावृत्ते स्याताम् । असमासे च समासेऽप्यारोप्य प्रवर्शनीय इत्येते दोषाः । तथा नञ्प्रत्ययसम्बन्धे सर्वाणि स्वार्थवृत्तानि । शिष्टविगर्हणा चोपायत्वेन वर्णयितव्या । चोदनायां फलाश्रुतेरिति द्व सूत्रे अस्मिन्नूहेन नेये ।

अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥

न सामान्यतो दृष्टेन शास्त्रे व्यवहारः । येनोपनयनोत्तरकालं वैदिकानि कर्माणि । इयमप्युपनयनोत्तरकालमेव प्रवर्त्तते स्मृतिः । तस्मात्तत्सामान्यतो दृष्टेन वर्ण्यते । सुरा न पेया, ब्राह्मणो न हन्तव्य इत्येवमादयो जातमात्रेण न कर्त्तव्याः ।

अन्यासु प्रागुपनयनात्कामचारवादभक्षा इत्यप्रतिषिद्धत्वात्करिष्यति । उपनयनोत्तरकालमभिवादनप्रत्युत्थानादीन्युपदिश्यन्ते । अतो वेदाध्ययनकाल उपदेशाद्वेदतुल्यत्वादिति । अथ वा विशिष्टकाल एवैते स्मर्यन्ते । स्मृतीनां वेदमूलत्वाद्वेदतुल्यता ।

इति षष्ठाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः ।

सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥ १ ॥

यावज्जीविके प्रयोगे चिन्त्यते । किं सर्वाङ्गोपसंहारसमर्थः पुरुषो ऽधिक्रियते, उतैकदेशोपसंहारसमर्थो ऽपीति । एकादशे तु कथंभावः सर्वैरङ्गैर्निराकाङ्क्षीक्रियते उतैकैकेनापीति सर्वैरिति सिद्धान्त एकादशे स्थित इदमारभ्यते । अग्निहोत्रं जुहोतीत्येवमुत्पन्नस्य विपरिवर्त्तमानस्य निमित्ते फले च विधानान्न तावत्कर्मान्तरमिदम् । नाऽपि प्रयोगभेदः । अन्तर्गतत्वात्काम्ये नित्यप्रयोगस्य । श्रुतिकृतस्त्वस्ति भेदः । तमेव भेदमाश्रित्य भाष्यकारस्त्वाह द्वितीये श्रवणा इति । सर्वशक्त्यधिकरणसिद्धान्तजनिताशङ्कस्योत्तरमधिकरणमारभ्यते । काम्येषु चैवमर्थित्वादिति । फले च सर्वाङ्गोपसंहारसमर्थस्याधिकारस्तादृशस्य विद्यमानत्वात् । न तु नित्ये तादृशो ऽस्ति सर्वदा यः सर्वाङ्गान्युपसंहर्तुं शक्नोति । तस्मादेकदेशाङ्गोपसंहारसमर्थो ऽप्यधिक्रियते । सर्वैरङ्गैः क्रतुर्निराकाङ्क्षीक्रियते । तादृश एव कर्तुर्धर्मत्वेन चोद्यते । तदुक्तं "तथाभूतोपदेशात्" ।

अथ वा यथा काम्ये धातोः पूर्वापरीभूतभावनाकरणता सर्वैरङ्गैर्निराकाङ्क्षीक्रियते, तथा नित्ये ऽपीत्यतस्तथाभूतोपदेशात् ।

अथ वा यथा काम्यस्य सन्निधावितिकर्तव्यता तथा नित्यस्याऽपि सन्निधानाविशेषादित्यतस्तथाभूतोपदेशात् ।

अथ वा भावनाभावनात्मनेपदेतरेतरयोगकारणानां तुल्यत्वात्तथाभूतोपदेशात् ।

अथ वा पुरुषार्थस्योभयत्र विद्यमानत्वात्तथाभूतोपदेशात् ।

अपि वा ऽप्येकदेशे स्यात्प्रधाने ऽप्यर्थनिर्वृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥

नास्तीतिकर्त्तव्यता ऽपूर्वाभावात् । कथमपूर्वाभावः ? फलाभावात् । कथं फलाभावः ? निमित्तफलयोरेकत्रासम्भवात् । कथमेकत्रासम्भवः ? निमित्तफलयोरनुपादेयत्वात्ते प्रतिकर्मोपादीयेते । तत्रान्यतरोपादाने कृतार्थत्वादेकं प्रत्युपादीयते । उभयोपादाने वाक्यभेदः । निमित्तस्य श्रुतत्वात्तत्प्रत्युपादीयते ।

ननु भावनावचनस्य किमित्याकाङ्क्षोत्पन्ना ? न निमित्तेन पूर्यते न यागेन । केन तर्हि ? फलेनैव । उच्यते । यदि फलार्थी कर्मणि प्रवर्त्तेत, तस्य यावज्जीवमित्येतदङ्गत्वेन स्यात् । फले चानर्थी न प्रवर्तेतेत्ययं च दोषः । कृत्स्ना चेतिकर्तव्यता स्यात् । अपि वा ऽप्येकदेश इति च विरुध्येत । व्यपदेशभेदश्च न स्यान्नित्यकाम्ययोः फले सति । अथोच्येत द्वावंशौ प्रयोजकौ फलांशो निमित्तांशश्च । तत्र श्रुतेन निमित्तांशो विवक्षितः । फलं तु विद्यते । अतो न विरोधो भिन्नविषयत्वादेव च निमित्तप्रयुक्तमवश्यं कर्तव्यं कर्म । तस्मिन्क्रियमाणे फलं किमिति न कामयत इति ।

एतदप्यनुपपन्नम् । यः स्वर्गं न कामयते बन्धात्मकत्वान्मोक्षार्थी, तस्य कर्मस्वरूप एव कर्तव्यतानिमित्तसम्भवात् । न च सकृत्कृतस्य कं चित्प्रति प्रयोजकता कं चित्प्रत्य-

प्रयोजकता न्याय्या । तस्मान्निमित्ते कर्मविधानम् । अथोच्येत क्रियायाः कर्तव्यतोपदेशात्कर्मणः स्वसामर्थ्याच्च फलोत्पादकता । न चान्यत्फलमस्ति यागस्य स्वर्गादृते । तस्मात्क्रियाशक्त्या फलमस्ति । न च शक्तयो वेदेनोत्पाद्यन्त इति ।

एतदप्ययुक्तम् । कथं ? ज्योतिष्टोमदर्शपूर्णमासयोः सकृत्प्रयोगे सर्वफलप्राप्तिः स्यात् । न चेष्यते त्वया । तस्माद्यासु क्रियाफलं प्रत्यक्षतो ऽवगम्यते ताः फलवत्यो नाश्रुतफला वैदिक्यः । न चाकाम्यमानं फलं भवति । अपुरुषार्थत्वात् । कर्त्तव्यतावचनः पुरुषार्थेनाऽविनाभूत इति चेत् ? प्रयाजादीनामपि पुरुषार्थत्वादनङ्गता स्यात् । न चेष्यते । तस्मान्निमित्तं प्रति कर्ममात्रं विधीयते । अत इतिकर्त्तव्यताभावः । कथमेकदेशशब्द इति चेत् ? साङ्गस्य वाचकः कृत्स्नशब्दः प्रधानमात्रापेक्षयैकदेशशब्दः । अथ वा दृष्टार्था या पुरोडाशनिवृत्तिस्तामपेक्ष्यैकदेशशब्दः ।

कैश्चित्पुनरेकदेशशब्दो वर्णितः । कथंभावाभावात्प्राकरणिकीतिकर्त्तव्यता नास्ति । आहवनीयादिवाक्यात्प्रापिता ऽस्ति तामपेक्ष्यैकदेशशब्दः ।

एतदप्यनुपपन्नम् । अपूर्वप्रयुक्तत्वादाहवनीयादीनाम् । न चापूर्वमस्तीत्युक्तं । तस्मादग्निमुद्दिश्यामावास्यायां पुरोडाशस्त्यक्तव्य इत्येतावदुपदिश्यते । कथं तर्हीदृशे पुरुषप्रवृत्तिः प्रत्यवायानुत्पत्त्यर्था ? विहिताकरणाद्धि प्रत्यवायः स्मर्यते । पुरुषेण च हितप्राप्तिर्यथेष्यते, ऽहितनिवृत्तिरपि तथेष्यते । यथा लोके उपानद्धारणादिका क्रिया कण्टकपरिहारार्था, एवमिहाऽपि प्रत्यवायपरिहारार्था । नन्वेवमप्रत्यवायः फलं स्यात् । उच्यते । फलं तावद्भावः, अप्रत्यवायश्चाऽभावः । कथमसौ क्रियाफलं

स्यात् ? आगामिनी प्रत्यवायानुत्पत्तिः फलमिति यद्युच्येत, तन्न । नाकरणमात्रात्प्रत्यवायः । किं तर्हि, विहिताकरणात् । तत्राऽयमेव विधिः प्रत्यवायानुत्पत्त्यर्थः । कृत्स्नस्य चाकरणात्प्रत्यवाय इतीतरेतराश्रयता । तस्मात्प्रत्यवायानुत्पत्तिः फलमिति नैवंपरा चोदना । कथं तर्हि प्रत्यवायो भवति ? क्रियाया अकरणात् । अकरणं करणनिवृत्तिः । अकरणाद्दोषो यः स करणे निवर्त्तते । नन्वकरणनिवृत्तिरेव फलं स्यात् । उच्यते । आत्मव्यतिरेकेण क्रियायाः फलम् । अकरणनिवृत्तिश्च करणं, स क्रियाधर्मः कथं फलं स्यात् ? न च प्रत्यवायाभावः फलमित्युक्तमेव । यदि चाप्रत्यवायः फलं स्यात् फलनिमित्तयोरेकत्राऽभावादिदोष उक्त इति केचिदेवं वर्णयन्ति ।

तन्नोपपद्यते । कथं ? भावनातस्तिस्र आकाङ्क्षा उत्पद्यन्ते । किं, केन, कथमिति । तन्निमित्ता चेतिकर्त्तव्यता । सा चेह विद्यते । तस्मादस्तीतिकर्त्तव्यता । यदि चास्मिन्यागेन पूर्य्यते पशुकामादिष्वपि तत्र साधनत्वेन स भविष्यति । तत्र निमित्ताभावादिति चेत् ? तन्न । असत्यपि तस्मिन्किमित्याकाङ्क्षोत्पत्तेर्यागेनैव परिपूरणान्न फलान्तरम् । फलनिमित्तयोर्विरोध इति चेत् ? अविरोधः भिन्नवाच्यत्वात् । निमित्तं हि कर्म प्रयुङ्क्ते, न कामार्थतां व्यावर्तयति । न हि कर्मणा निमित्तं जन्यते, येन फलोत्पत्तिर्न स्यात् । तस्मिन्निमित्ते कर्मणि क्रियमाणं प्रयोजनमिति सुतरां फलाभिमुखं भवति ।

फलं न कामायत इति चेत् ? उच्यते । न हीदृशः पुरुषोऽस्ति योऽवश्यकर्त्तव्ये फलं न कामयते । मोक्षार्थीति चेत् ? तन्न । तेनाप्यवश्यं पापक्षय एषितव्यः । तस्मिन्सति मोक्षाभावात्मोक्षार्थिनोऽप्यसावेषितव्यः फलाय । इतरथा फलाप्राप्तेः । तस्मान्नि-

त्यानि कर्माणि तस्योपायत्वेन चोद्यमानानीतिकर्त्तव्यतामपेक्षन्ते। वीतायां च फलेच्छायां कर्मण इदमेव फलम्। यदि च नित्ये श्रुत्यनुग्रहाद्यागः कर्मभूतः। ततः सर्वत्राविशिष्टः श्रुत्यनुग्रह इति सर्वत्र कस्मान्न भवति? फलप्रदानर्थक्यप्रसङ्गात्तु न भविष्यति। साधनत्वेन तस्योपनिपातादिति। यदि च क्रिया स्वशक्त्या स्वतो ऽन्यत्किञ्चिदुत्पादयति ततस्तत्त्वेन वेदेनोच्यते। न ह्यशकनीयं स उत्पाद्यत्वेन चोदयति ज्योतिष्टोमस्य सकृत्प्रयोगे सर्वफलप्राप्तिरिति। उच्यते। पश्वादीनां क्रियाणां द्वौ धर्मौ दृष्टौ। एकस्मिन्प्रयोगे एकफलता नियतफलता च। तत्र ज्योतिष्टोमस्य फलचोदनाभिरनियतफलता विहिता। एकस्मिन्प्रयोगे एकफलता केन वार्य्यते?

यदि च फलं नास्ति, करणविभक्तीतरेतरयोगात्मनेपदानामभावप्रसङ्गः। भिन्ने जुहोतीति निराकाङ्क्षत्वात्क्रतुसम्बन्धो न स्यात्। आकाङ्क्षोत्तरकालं हि क्रत्वर्थता पुरुषार्थता वा। न च भवत्पक्षे आकाङ्क्षा ऽस्ति। निमित्ते श्रुतत्वात्। न ह्याकाङ्क्षा जन्यते क्रतुना। यदुक्तं फलनिमित्तयोरनुपादानादिति। भिन्ने जुहोतीत्यनेनैव तुल्यं यथैतत्क्रतुं प्रत्युपादीयते निमित्तं च, एवमिदमपि। यथा च त्वत्पक्षे पिण्डपितृयज्ञ एवमिदमपि। भाष्यकारश्च फलमिच्छति प्रधानाच्चिदमन्यत्फलमेकदेशाङ्गयुक्तात्प्रधानात्फलं न भविष्यतीति ब्रुवन्, तथा पिण्डपितृयज्ञे पुत्रकामेष्ट्यां च सूत्रकारो नित्य इतिकर्त्तव्यतामिच्छति प्रयाजवदिति दृष्टान्तोपादानात्सिद्धवत्कृत्वं दर्शयति। कर्त्तव्यतावचनश्च पुरुषार्थतां न व्यभिचरति। न हि फलमन्तरेण पुरुषः प्रवर्तते। केषु चित्साक्षात्केषु चित्पारम्पर्य्येण। यदि च धात्वर्थः करणतां जह्यात्प्रयाजादीना-

मङ्गत्वं न स्यात् । कर्मभूतत्वान्नैतदपेक्षते, किं मया कर्त्तव्यमिति। अनपेक्षमाणश्च कथमितिकर्त्तव्यतया सम्बध्येत? यदि च यत्र फलपदमस्ति तत्रैव धात्वर्थः करणभूतः उत्पत्तिवाक्ये धात्वर्थस्य कर्मभूतत्वात् । स्वर्गस्य च प्रयोगवाक्ये कर्मत्वेन सम्बन्धो नास्ति। एवं च कर्मान्तरत्वप्रसङ्गः । करणत्वे तु न दोषः। तस्माद्यत्र यत्र विधायकस्तत्र तत्र करणता। नित्ये ऽप्यसौ विद्यते । व्यपदेशश्च कर्त्तव्यत्वादवश्यकर्त्तव्यत्वादेवं च साङ्गं यावज्जीवं न शक्नोति कश्चिदपि कर्तुमिति कृत्वा यावच्छक्नुयादित्युपनिबध्यते । शक्तस्य कामतो वैगुण्यं स्यात् । काम्ये तु यदा शक्नुयात्तदा प्रवर्त्तते ।

प्रायश्चित्तविधानाच्च ॥ ७ ॥

येषामितिकर्तव्यता नास्ति तेषां प्रायश्चित्तविधानमत्यन्तानुपपन्नम् । सेतिकर्त्तव्यताके तु नैमित्तिके निमित्ते सञ्जाते वैगुण्यात्तत्परिहाराय होमाख्यमङ्गमुपजायते । तत्क्रियत एवासत्यां भेदेन उपजाते वैगुण्यं नास्ति । तस्मात्प्रायश्चित्तदर्शनं सर्वथा ऽनुपपन्नमिति ।

अपि वा व्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

दर्शपूर्णमासौ यथा कालान्तरदेशान्तरपुरुषान्तरेषु क्रियमाणौ नातिरिच्येते, न न्यूनौ भवतः, एवं द्रव्यान्तरे ऽपि। न द्रव्यान्तरे ऽपि तावेव दर्शपूर्णमासाविति तस्य प्रत्ययस्य प्रत्यक्षावगतस्य बाधो ऽस्ति । शब्दान्तरादीनामभावात् । न हि नीवारैः क्रियमाणस्य शब्दान्तरादिभेदो भवति । येन तद्भेदमिति प्रत्ययो बाध्येत । द्रव्यान्तरेणापि च क्रियमा-

णो दर्शपूर्णमासाद्यभिधेयता ऽस्त्येव । यथा नैव चैत्रीप्रयोगाद्वैशाखीप्रयोगो भिद्यते । तेन तौ दर्शपूर्णमासाभिधेयतां न जहीतः । तथा तत्सामान्यान्नीवारैरपि क्रियमाणयोरस्त्येव । तस्यैव सामान्यं फले चोद्यत इति चेत् ? तदयुक्तम् । न हि साक्षादिवत्सामान्यमत्राभिव्यज्यमानमुपलभ्यते । किं तर्हि षडाग्नेयादयो व्यक्तिविशेषा उत्पन्नाः फले विधीयन्ते । दर्शपूर्णमासशब्दवाच्याश्च व्यक्तय एव । अतो द्रव्यान्तरेणाऽपि क्रियमाणे व्यक्त्यन्तरबुद्धिर्नोपजायते ।

श्रुतिप्रमाणत्वाच्छिष्टाभावे ऽनागमो ऽन्यस्याऽशिष्टत्वात् ॥ १३ ॥

व्रीह्यभावे तदन्तमेवोत्स्रष्टव्यम् । नियमफलसम्पत्ती हि यथाश्रुताद्भवतः ? तस्माच्छ्रुताभावे तदन्तोत्सर्गः ।

आगमो वा चोदनार्थाविशेषात् ॥ १५ ॥

आग्नेयो ऽष्टाकपाल इतीयं चोदना नीवारैरपि सम्पादयितुं शक्यते । प्रारब्धमवश्यं सम्पादनीयमिति नियमो ऽस्या एव चोद्यते । या च नियमेनार्थाद् द्रव्यमाकाङ्क्षति सा श्रुतैरेकवाक्यतां प्रतिपद्यमाना ऽर्थप्राप्तं बाधते । श्रुताभावे या ऽप्राप्तिः सा केन निवार्यते ? तस्मादागमः कर्त्तव्यः ।

नियमार्थः क्वचिद्विधिः ॥ १६ ॥

एतदयुक्तम् । उत्पत्तिवाक्यशिष्टत्वात्सोमस्य नास्ति प्रतिनिधिः । कथं ? उत्पत्तिवाक्ये यद्रूपमवगतं तद्रूपमेव प्रयोगवाक्येनारूपेण फले विधीयते । नीवारैः क्रियमाणे उत्पत्तिवाक्ये यद्रूपं तन्न भिद्यते । इह तु सोमेन विना भिद्यते ।

तस्मात्तद्रूपभेदः। रूपभेदाच्च शब्दान्तरम् । यत्र सगुणा चोदना भवति वाक्यान्तरेण वा गुणस्तत्र तदभाव उत्पत्तिचोदनासम्पत्त्यर्थं द्रव्यमुपादीयते। यथोत्पत्तेः तत्स्थयागस्यावगतः प्रतिनिधिः। सोमे तु यस्मिन्नेव क्षणे प्रत्ययेन परामर्शो यागस्य, द्रव्यस्यापि तस्मिन्नेव। अतः पूर्वमनुत्पन्नत्वादपेक्षा नास्ति। अपेक्षाक्षिप्तश्च प्रतिनिधिः। नियमार्थो विधिरित्येतदप्ययुक्तम्। न हि सुसदृशे सति ईषत्सदृशः पक्षे ऽपि प्राप्तः। तस्मादप्राप्तो विधीयमानो न नियमार्थो भवतीति।

अत्रोच्यते। प्रक्रान्तमवश्यं समापनीयम्। तस्मात्सोमाभावे द्रव्यान्तरमुपादेयम्। यजेतेत्येतद्यत्किञ्चिद्द्रव्यमपेक्षमाणं सोमेनेति पदान्तरेण निराकाङ्क्षीक्रियते। यथा वाक्यं वाक्यान्तरेण व्रीहिभिरिति। एवं चेत्पदान्तरवाक्यान्तरप्राप्तयोर्न विशेषो ऽस्ति। अपेक्षायास्तुल्यत्वात्। अथ यदुक्तं, सोमकलुषितस्योत्पन्नत्वाच्छुद्धस्य प्रत्ययव्यापार एव नास्ति, तत्र कुतः पदान्तरापेक्षा? उच्यते। पदार्थपूर्वकत्वाद्वाक्यार्थस्यानपेक्षया विना सम्बन्ध एव नास्ति। अन्यदिदानीमेतदेकस्य पूर्वकालः परामर्शः एकस्य समकाल इति एकस्य पूर्वकालेन सम्बन्ध एकस्य समकालेनेति न कश्चिद्विशेषो ऽपेक्षाभावादस्ति। अपेक्षाक्षिप्तश्च प्रतिनिधिः।

अपि च सोमो नैव यागसाधनं; किं तु तदुपलक्षितो रसः। स चाविशिष्टः पूतीकेष्वपि। तस्मान्नास्ति रूपभेदः। एवं च शब्दभेदो नास्ति। अतो नामधेयमविरुद्धम्। एवं च दशमे वक्ष्यति, पश्वाकृत्युपलक्षितं हृदयादि हविरिति। इहापि स तुल्यः।

अथोच्येत सोमाकृत्युपलक्षितो यो रसः यागसाधनं न

पूतीकाकृतिकः। दर्शपूर्णमासयोरपि शक्यं वदितुं व्रीह्याकृत्यु-पलक्षितमन्नदानं यागसाधनं, न तु नीवाराकृत्येति न वैषम्यम्।
अथ यदुक्तमभावे विधिरिति। उच्यते। यन्न कदाचिदपि प्राप्नोति स विधिः। यथा ऽग्निहोत्रं जुहुयादिति। पूतीकाः कदाचित्प्राप्नुवन्ति। तस्माद्युक्तमुक्तं, नियमार्थः क चिद्विधिरिति। यदि विधिः स्यादिन्द्रवाय्वादिभिर्न सम्बन्धः स्यात्।
कथं? सोमरसग्रहणे ता यागसम्बन्धिन्यो न साक्षात्। द्रव्याश्रितो यः संस्कारः स तद्द्रव्याभावे न भवति। न च पूतिकाः सोम इत्यनेनांशेन गृह्यन्ते। यथा नीवारा व्रीह्यंशेन। न च विकल्पेनोपदिश्यन्ते। व्रीहियववद्भावविध्यभ्युपगमात्। न च कार्यापत्तिः। प्रत्यक्षविधानात्। तस्मान्नास्ति देवतासम्बन्धः।
सत्यप्यपूर्वप्रयुक्तत्वे द्वाराभावान्न धर्मसम्बन्धः। उत्पत्तिवाक्यशिष्टेन प्रतिनिधिमनिच्छतो ऽभावे विधानं प्रतिनिधिनियमश्च न स्यात्कर्मान्तरं तथा प्रसज्येत। प्रक्रान्तं न समाप्येतेति।

न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥

अर्थो वाचिकया श्रुत्योच्यमानो देवतात्वं प्रतिपद्यते नान्यथा। तद्वाचकस्याभावे च कथमर्थो देवता स्यात्? नीवारैस्तण्डुलनिर्वृत्तिः प्रत्यक्षा न देवतात्वम्। किं च सदृशं प्रति विधातव्यं देवताऽभावश्च शब्दनाशः। अतो देवताशब्दं स्मृत्वोत्तरकालं स्यादुपादानं, तत्तु मुख्येनैव सिद्धम्। मन्त्रे ऽप्येष एव प्रसङ्गः। इयांस्तु विशेषः। अर्थेन स्मृतेन न मुख्येन, न सदृशेन प्रयोजनमस्ति। न च शब्देन स्मरणं कर्तव्यमिति। किं तर्हि आम्नानसामर्थ्यादुपद्रष्टादिनिवृत्तिर्मन्त्रनियमात्तदभावादुपद्रष्टादि केन वार्यते? आहवनीयो यागहोमाभ्यामनाश्रितः अदृष्टोपकारित्वाद्वचनाद्विधीयते। तयोरभावे नास्त्या-

क्षेपः । आक्षेपाभावाच्च न प्रतिनिधिः । यत्प्रयाजादिभिः क्रियन्ते तदन्या क्रिया करिष्यतीति नास्ति प्रमाणम् । हन्त्यादीनां दृष्टार्थत्वादस्ति अन्यार्थसंयोगादिति । किमुक्तं भवति, प्रतिनिधिकारणासंयोगादिति यावत् ।

प्रतिषिद्धं चाविशेषेण हि तच्छ्रुतिः ॥ २० ॥

वरकादेः श्रुतद्रव्यचिकीर्षयोपादानम् । न तेषामङ्गत्वेन विधानमङ्गत्वं च प्रतिषिध्यते । तस्माद्वरकाद्युपादेयम् । एवं प्राप्ते ब्रूमः । अर्थाद्यद्यत्र यज्ञसाधनं प्राप्तं तत्तन्न प्रतिषिध्यते ।

तथा स्वामिनः फलसमवायात्फलस्य कर्मयोगित्वात् ॥ २१ ॥

यदा प्रतिनिधीयमानो दक्षिणादानं, हविःप्रदानं च करोति तदा स एव मुख्यः स्यात् । यदा द्रव्यपरित्यागं कृत्वा ऽन्यत्र व्यापृतो भवति तदा यानि क्रत्वर्थानि तेष्वध्वर्युरेव प्रतिनिधित्वेन कर्त्ता । पुरुषसंस्काराणां च क्रत्वर्थत्वान्न वैगुण्यम् । यानि च ब्रह्मचर्य्यादीनि फलग्रहणयोग्यतायाः कारणानि, तानि बहिरवस्थितेन क्रियमाणानि क्रतोरुपकारकाण्येव । तस्मादेकत्र विद्यमानत्वादितरत्राऽसम्भवादनुपपन्नः प्रतिनिधिः । पूर्वे तु नैव प्रतिनिध्याशङ्का ऽस्ति ।

बहूनां तु प्रवृत्तावन्यमागमयेदवैगुण्यात् ॥ २२ ॥

आसीरन्निति कर्तृगता ऽनियमेन सङ्ख्या प्राप्ता 'सप्तदश' इत्यनेन नियम्यते । फलेन व्याप्यमानः कर्त्ता भवति । तत्रान्य आनीयमानः क्रियाफलेन न सम्बध्यते । अतस्तत्फलाभावात्कर्तृगतसङ्ख्यापूरणं नास्ति । अपि च देवतोद्देशेन द्रव्यत्यागं कुर्वत इयं सङ्ख्या । न चाऽऽनीयमानो द्रव्यत्यागं

करोति। तस्य प्रथममेव कृतत्वात्। अत आनीयमानः स्वामिगतां कर्तृगतां सक्तुगतां च सङ्ख्यामसमर्थः पूरयितुम्। तस्मान्न प्रतिनिधिः। आरब्धसमाप्तिस्त्वविशिष्टैव।

एवं प्राप्ते ब्रूमः। आरब्धमवश्यं समापनीयम्। यथाश्रुतमेव तत्राऽऽनीयमानः स्वामिगतां सङ्ख्यां न पूरयति। यस्तु म्रियते, तस्य पदार्थे कर्तृत्वं शक्नोति प्रतिपत्तुमिति। तस्मादनेनांशेनाऽवश्यमुपादेयः।

स स्वामी स्यात्तत्संयोगात् ॥ २३ ॥

एतस्मिंश्च स्थित उत्तरेऽधिकरणे यो विचारः स नैव।

तस्मिंश्च फलदर्शनात् ॥ २५ ॥

फलसरूपोऽयमर्थवादः। सत्यपि फले मूलस्य प्राप्त्यभावादितरस्य कर्मकरत्वादपि नास्ति फलसम्बन्धः।

सामान्यं तच्चिकीर्षा हि ॥ २७ ॥

अष्टाकपालादिचोदना येन केन चिन्निर्वर्त्स्यते। तत्र किं सादृश्योपादानेन? अथोच्येत, व्रीहिचोदनानुग्रहार्थं सादृश्योपादानम्। उच्यते। व्रीहिचोदनायां फलार्थिनः प्रवर्तामहे; न तस्याः स्वरूपानुग्रहार्थं शक्यं वक्तुं नीवारास्तत्फलं साधयन्तीति। यदि साधयेयुर्विकल्पेरन्। तस्मान्न सादृश्योपादानम्।

एवं प्राप्ते ब्रूमः। फलार्थिना यथाश्रुतं प्रक्रान्तं, तत्र व्रीह्यभावे फलाभावात्तदन्तोत्सर्गे प्राप्ते वचनात्प्रारभ्य यजेतैवेति समाप्तिर्विधीयते। सा च यादृशः प्रक्रान्तस्तादृशस्य। तत्र व्रीह्याकृतिर्यागस्य साधनं द्रव्यं परिच्छिन्दत्तद्गतां प्रतिपद्यते यथा,एवं तद्गता विशेषा दीर्घशूकत्वादयस्तानपि परिच्छि-

नस्ति। तत्र यद्यपि नीवाराकृतिर्व्यक्तिश्चान्या, तथाऽप्यन्ये बहवो धर्माः समानाः। ते श्रुतसम्पत्तये ऽवश्यमुपादेयाः। यत्त्वधिकं तन्नान्तरीयकत्वादुपादीयते। तत्र कर्तव्यतोपदेशात्फलेन भवितव्यम्। सोमयागस्य यत्फलमन्त्रगतं तत्राऽप्यनुषज्यते। अवश्यकर्तव्ये सौकर्यादिप्रकर्षाच्च दर्शपूर्णमासफलानुषङ्गः। अनाकाङ्क्षितत्वाच्च। अथ वा कर्तव्यतानियमः। स च गुणस्तस्य यन्मनसि विपरिवर्तते तत्साधयति। वीतायां फलेच्छायां पापक्षयादि। अवीतायां तु यत्सन्निहितम्। स चाऽनाश्रितो न शक्नोति साधयितुमिति प्रक्रान्तं कर्माऽऽश्रयति। तच्च साङ्गं प्रक्रान्तम्। तत्र व्रीह्याकृतिर्व्यक्तिर्वा केवलासम्भवान्नीवारेषूपादीयमानेषु परित्यज्यते। शिष्टं तु यथाश्रुतमेवाश्रयत्वेन गृहीतम्।

प्रवृत्ते ऽपीति चेत् ॥ ३६ ॥

केषु चित्संस्कारेषु कृतेष्वनभिनिर्वृत्ते प्रयोजने श्रुतमेवोपादातव्यं; न संस्काराणामनुरोधः। द्रव्यगुणत्वात्। तस्माद्येऽभिनिर्वृत्ताः संस्कारास्तेषामावृत्तिः स्यात्। एवमिदं सिद्धान्तसूत्रं भवति। पूर्वपक्षस्तूत्प्रेक्ष्यः।

नानर्थकत्वात् ॥ ३७ ॥

एतदपि सिद्धान्तसूत्रमुत्प्रेक्ष्यपूर्वपक्षकम्। अथ वा प्रवृत्तेऽपीति चेत् कृते प्रयोजने श्रुतमागमयितव्यमिति। तत्स्योत्तरं नानर्थकत्वादिति।

इति षष्ठाध्यायस्य तृतीयः पादः।

# अथ चतुर्थः पादः ।

शेषाद् व्यवदाननाशे स्यात्तदर्थत्वात् ॥ १ ॥

यद्याग्नेयचोदना अवदाननिष्ठा, ततस्तद्विनाशे शिष्टस्यानाग्नेयत्वाद्द्रव्यान्तरमुत्पाद्यम् । अथ सकलनिष्ठा, ततः शिष्टस्याग्नेयत्वात्तत एव ग्रहीष्यते । केचिदेवं संशयमाहुः । अन्ये पुनरेवमाहुः । आग्नेयो ऽष्टाकपालो भवतीति यद्यग्निमुद्दिश्य त्यज्यते, एवमस्याग्नेयतोपपद्यते । एवमन्यथानुपपत्त्या कृत्स्नस्य यागार्थता । मध्यपूर्वार्धयोर्वचनेन यागार्थत्वादन्यथानुपपत्तिः क्षीयते । अतो मध्यपूर्वार्धयोर्वचनेन यागार्थतायां स्थितायामिह चिन्ता । मध्यपूर्वार्धावयवोपलक्षितं होमसाधनं नष्टे ऽपि मध्यपूर्वार्धावयविनि उपलक्षणत्वेन विद्यमानत्वादवदेयम् । कृत्स्नस्य मध्यपूर्वार्धे इति चेद्? तथा शास्त्रार्थत्वाद् । यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरिति कृत्स्ननाशे दोषे वा ऽऽज्यस्य प्रतिनिधित्वम् । न चेह कृत्स्ननाशः ।

निर्देशाद्वा ऽन्यदागमयेत् ॥ २ ॥

विशिष्य मध्यपूर्वार्धे निर्दिश्येते । कथं? प्रमाणतस्तावद्भिरङ्गुष्ठपर्वमात्रैरुपलक्षितः स यागसाधनम् । एवं चेत्कृत्स्नमध्यपूर्वार्धे इति शास्त्रार्थ एवायम् । इतरथा ऽनाशे उपलक्षणं, नाशे तूपलक्ष्यमिति न वैरूप्यमेकरूपेण शास्त्रेण भवितव्यम् । तस्मादुपलक्षणत्वेनेतरन्निर्दिश्यते ।

अपि वा शेषभाजां स्याद्विशिष्टकारणत्वात् ॥ ३ ॥

स्विष्टकृदग्निप्रयुक्तस्य ग्राहकः। एवं चेत्सन्निहितं परकीयं ग्रहीष्यति। किमतः ? उच्यते। यदि प्रयोजकः स्याद्यादृशं प्रयुक्तं तादृशस्याभावान्न पुनः शिष्टादवदेयम्। यत्तु द्रव्यं संस्कार्य्यं तस्य विद्यमानत्वात्पुनरवदानेन संस्कारः किमिति न क्रियते ? न चात्रावयव्युपलक्षणार्थः। किं तर्हि ? संस्क्रियते ऽसौ।

इत्येवं प्राप्ते ब्रूमः। विशिष्टो देशः संस्कार्यत्वेनापेक्षितः। तस्याभावात्कः प्रतिपत्तिं प्रयुञ्जीत ? अपूर्वमिति चेत् ? न। द्रव्यप्रतिपादनानुनिष्पाद्यत्रापूर्वम्। अतस्तदप्रयोजकं द्रव्यप्रतिपत्तिश्चिकीर्षिता न यागनिर्वृत्तिरिति।

निर्देशाच्छेषभक्षो ऽन्यः प्रधानवत् ॥ ४ ॥

भक्षो निर्वर्तयितव्यः। तस्मिन्यथासमाख्यं कर्तृषु प्राप्तेषु परिसङ्ख्या क्रियते, इडामेवैते भक्षयेयुरिति। अनिर्ज्ञातकर्तृकेषु भक्षेषु पूर्वपक्षोत्थानम्।

सर्वैर्वा समवायात्स्यात् ॥ ५ ॥

द्रव्यसंस्कारत्वाद्यजमानो ऽप्राप्तो विधीयते। वाक्यप्रकरणसमाख्याभिरेभिर्भक्षयितव्यमित्यस्यापि नियमस्य दृष्टमेव प्रयोजनम्। कर्तॄणां कियत्यपि तृप्तिरुपजायते। तदनुनिष्पाद्यपेक्ष्याह, तद्धि भक्षणं पुरुषसंस्कारार्थमिति। याज्ञिकैर्विवेकमगृहीत्वा भक्षाः पुरुषसंस्कारा इत्युक्तम्।

अर्थसमवायात्प्रायश्चित्तमेकदेशे ऽपि ॥ १० ॥

कृत्स्नाभिन्ने प्रायश्चित्तम्। कुतः ? तस्य भिदुरद्रव्यस्य पर-

स्परसंघर्षणादवश्यम्भावी कियानपि मात्रापनयः । तस्माव-र्जनीयत्वान्नित्यता प्रसज्यते । भिन्नमिति भिदिक्रियोपसर्जनी-भूतं निष्ठया द्रव्यमभिधीयते । तदेवमुपसर्जनं भवति यत्कृत्स्नं व्याप्नोति । तस्मान्नैकदेशे भिन्नहोम इति ।

एवं प्राप्ते ब्रूमः । संघर्षेण संघृष्टमिति बुद्धिर्भवति । न भिन्नमिति भेदनं कदा चिद्भवति । तस्मादेकदेशकृत्स्नाभि-प्रयोरुभयत्र भिन्नबुद्धेः सम्भवादुभयत्राऽपि होमः । यदुक्तं भेदनविशिष्टं द्रव्यं प्रधानमिति । उच्यते । विशेषण एव नि-मित्तप्रत्यये जाते किमर्थं विशेष्यं यावद्गम्यते ऽर्थाद्द्रव्यं लक्ष्यते न शब्दात् ? तस्माद्भेदश्चेदुपजातो होमश्चेति ।

न त्वशेषे वैगुण्यात्तदर्थं हि ॥ ११ ॥

एकदेशभेद एव होमः । कुतः ? भिन्न इति द्रव्यप्रधानो निर्देश इत्युक्तमेव । भेदनेन द्रव्ये दोष उत्पन्नः । स होमेन प्रतिसंधीयते । निर्हृतदोषं च यागयोग्यं भवति । सकलभेदे चायोग्यत्वात् तदर्थे होमः सन्ननर्थकः स्यात् । भिन्न इति स-प्तमी द्वितीयार्थे, भिन्नं द्रव्यमिति । एवं च वाक्येन होमस्य स-म्बन्धः । सन्निपत्योपकारितायाश्च निमित्तत्वे प्रकरणेन सम्ब-न्धः । स दुर्बल आरादुपकारकः सन्नसंयुक्त उपकुर्यात् । अ-यमपि दोषः ।

स्याद्वा प्राप्तनिमित्तत्वान्न तद्धर्मो नित्यसंयोगा-त्सन्निहितस्य गुणार्थे नित्यत्वात् ॥ १२ ॥

कपालार्थे होमे अश्रुतिनिमित्तकानां दर्शपूर्णमासापूर्वं निमि-त्तम् । यावद्दर्शपूर्णमासापूर्वं निमित्तं तावन्नैमित्तिकेन भवितव्यम् । नैमित्तिकेन प्रयोजितत्वाद्धोमस्य । भेदनं च तत्र कदाचित्

तत्रोपकार्यस्याऽनित्यत्वात्, प्रयोजकस्य नित्यत्वात् । नित्या-ऽनित्यसंयोगविरोधः। भेदनस्य निमित्तत्वे भिन्नेन होमे प्र-युक्ते ऽपूर्वस्य तादर्थ्यमित्यदोषः । सप्तमी च निमित्तत्वेन य-थाश्रुता । निमित्ततादर्थ्ययोर्नित्यत्वादस्ति सम्बन्धः । यथा जीवननिमित्तं होमं प्रयुङ्क्ते स दोषो ऽपघातार्थः । तत्र जी-वनस्य पुरुषदोषस्य च विद्यमानत्वादविरुद्धः सम्बन्धः । द्व-योरथ नित्ययोरस्ति सम्बन्धः। यथा ब्रह्महत्याद्यनित्यं निमित्तं पुरुषदोषश्च तत्र प्रायश्चित्तं ब्रह्महत्याप्रयुक्तं दोषनिर्घाताय च। तस्मादुपकार्ये विद्यमाने ऽस्ति सम्बन्धः । इहोपकार्यं कदा-चिन्न शक्यं नित्यं येनोपकर्त्तुमिति होमो न शक्नोति नित्य-मुपकर्तुम्। उपकार्यस्याभावात्। तेन नित्यमुपकुर्यादिति दर्श-पूर्णमासं ब्रवीति नित्यमुपकुर्यादिति प्रयुञ्जानम् । तस्मात्कपा-लविशिष्टं भेदनं निमित्तम्।

गुणानां च परार्थत्वाद्वचनाद्व्यपाश्रयः स्यात् ॥ १३ ॥

प्रकरणात्प्रधानार्थो होमः । भिन्नमपि प्रयुञ्जानं प्रणाड्या तादर्थ्यमेव । न च कपालार्थत्वेन होमस्य प्रतिपादकम् । न च तदस्ति। द्वितीयाविभक्तेरभावात्। न च भिन्नस्य प्रत्य-क्षतो दोष उपलभ्यते, येन दोषनिर्घातार्थो होमः स्यात्। न च भिन्नमाधारत्वेनोपदिश्यते। श्रुतिसम्भवमात्रेणोपन्यस्यते। स-म्भवति हि सप्तमी निमित्ते आधारे च । आधारः सन्नाग्नेया-दीनां स्यात्। तेषामेव विपरिवर्त्तमानत्वान्नाङ्गानाम्। न च क-र्मान्तरमाहवनीयसंयोगो बाध्येतेति। पाक्षिकं बाधमाह न नित्यं बाधमभिप्रेत्याह—वचनाद्विकल्प इति चेत् । प्रयुक्तो ऽयं विकल्पः। भिन्नस्य प्रकरणसम्बन्धात्। आहवनीयस्य चा-

नारभ्याधीतत्वात् । तद्यथा पाश्ववश्येन साप्तवश्यं बाध्यते, एवमिहाऽपि । किं चाहवनीयस्याऽन्यत्र कृतार्थत्वाद्भिन्नस्य त्वन्यत्रानवकाशत्वात् तदुपमर्देनैव निवेशः । तस्माद्विकल्पाभिधानमभ्युपेत्यवादेन ।

केचिदाहुः । युक्त एवायं विकल्पः । उभयोर्वाक्येन जुहोतिसम्बन्धात् । न प्रकरणात्किञ्चिदभ्यधिकम् । तत्र सामिधेनीसम्बन्ध आनर्थक्यादपूर्वसम्बन्ध एषितव्यः । तत्रैकस्य प्रकरणेन क्लृप्त इतरस्य कल्प्य इति विप्रकर्षात् पाश्ववश्येन साप्तवश्यं बाध्यते । कृतार्थत्वात् । तदर्थत्वे च न शास्त्रं नियमेन कारणम् । अनुग्राह्यत्वाच्छास्त्रस्य । प्रमाणाद्यस्य बाधो गम्यते स बाध्यते । इह जुहोतिशब्दः, समानाधिकरणविभक्तिश्च सप्तमी, तस्माद्विकल्पः । ननु पदे जुहोतीत्यत्र तुल्यत्वादाहवनीयबाधः । उच्यते । उत्पत्तिवाक्यशिष्टेन वाक्यान्तरशिष्टं बाध्यते । पदं चोत्पत्तिवाक्यशिष्टम् । किं च होमेनाधारस्यानपेक्षितत्वाद्वाक्येनासौ नीयमानो ये शुद्धा होमास्ताननूद्याऽऽहवनीय आधारो विधीयते, न य आधारकलुषिताः ।

यथाश्रुतीति चेत् ॥ २२ ॥

प्रत्ययः प्रातिपदिकार्थमवश्यमुच्चारणीयः । न केवलं प्रातिपदिकं स्वार्थे वर्त्तते । इहोभयस्य नान्यदुच्चारणे प्रयोजनमस्ति । तस्माद्विवक्षितम् । अपरे आहुः । द्वितीयया तादर्थ्ये प्रतिपादिते संमार्गः कथं विनियुज्यत इति, किं ग्रहमात्रे उतैकस्मिन्निति । इह किमुभयेनाधिक्रियते, उतैकेनापीति । द्वितीया संमार्गस्य तादर्थ्यं प्रतिपादयन्ती किं ग्रहमात्रे प्रतिपादयति उतैकस्य ? तस्मात्तत्र शेषभावः । इहाधिकारश्चिन्त्यते । एवं कैश्चिदपुनरुक्ततोक्ता ।

सा चेयमयुक्ता। कथं? यस्य पुरोडाशौ क्षायत इतीदमप्यत्रोदाहरणम्। तत्रापि न विभक्तेर्वचनमेवैकं प्रयोजनमिति द्वित्वाविवक्षा। न वास्य प्रमादात्तत्राविवक्षा। उपचयत्वेन तत्रायमायातः। इत्थं विनियुज्यते इत्थमधिकार इति विकल्पमात्रम्। तस्मादन्यथा वर्ण्यते। निमित्तमात्रं चिन्त्यते। तच्चोद्दिश्यते। उद्दिश्यमानस्य च विशेषणमविवक्षितमिति स्थितमेव उभयपदं किं निमित्तसन्निपाति, उत नेति पूर्वपक्षवादी मन्यते। यथा ऽऽर्तिहविषोः श्रवणात्तयोरभावे नास्ति निमित्तमेवमुभयपदश्रवणात् तयोरभावे नास्ति निमित्तम्। अथ वा यस्येत्यस्मात्सामान्येन बुद्धावुपजातायां किं यस्य, तत आह उभयमिति। किमुभयमिति हविरित्युक्ते ऽनिराकाङ्क्षत्वादार्छतावुच्चरिते निमित्तप्रत्ययो निराकाङ्क्षीभवति। अतः सर्वं विवक्षितम्।

न तल्लक्षणत्वादुपपातो हि कारणम् ॥ २३ ॥

नैमित्तिकप्रयोगवचनो यथैव पञ्चशरावमपेक्षते आत्मसिद्ध्यर्थमेवं निमित्तमपि। तत्र यन्निमित्तासन्निपाति, तदनपेक्षितत्वादविवक्षितम्। उभयमिति चासन्निपाति। कथं? यस्य हविरार्तिमार्च्छेदित्येतावति निमित्तप्रत्यये जाते नैमित्तिकेन गृहीते ऽन्यस्यानपेक्षित्वादविवक्षा। हविरार्तिमार्च्छेदित्यनूद्य पञ्चशरावो विधीयते। तच्चोभयमित्युभयम्। अतो वाक्यभेदो ग्रहैकत्वन्यायेन। आह—विशेषणं यदि न मृष्यते इति। यद्युभयशब्दस्यार्छतिना सम्बन्धो नेष्यते, हविषो ऽपि माभूत्सम्बन्ध इति। विशेषणशब्देन सम्बन्धमभिधत्ते। कियान् पदगणो निमित्तत्वं प्रतिपद्यत इति विवेकमगृहीत्वा चोद्यते। मृष्यामहे हविषा विशेषणमिति। हविरार्तिसम्बन्धादृते

निमित्तप्रत्ययाभावो हविर्विशेषणमिति परपक्ष उभयथा निराक्रियत इति हविर्विशेषणं ब्रवीति ।

परमार्थतस्त्वार्तिरेव हविषो विशेषणम् । तथा हविरार्तिसम्बन्धनिर्वृत्तिनिमित्तं पञ्चशरावस्य शक्नोति हि श्रुत्या, तत्सम्बन्धं तु वाक्येन ब्रूयात् । कर्त्तव्यतावचनो यस्मात्परः श्रूयते तस्यैव कर्तव्यतामाह । सा च कारकैर्विना नात्मानं प्रतिलभत इति कारकेष्वपि व्याप्रियते । फलनिमित्ते क्रियया ऽऽकाङ्क्ष्येते इति ते प्रति क्रियां विदधाति । यद्धविषो विशेषणं तत्रासौ न तत्साधनमिति प्रत्ययेन न परामृश्यते । एवं चेदार्तिविशिष्टेन हविषा निमित्तप्रत्यय उपजायते । नैमित्तकप्रयोगवचनेन तावन्मात्रस्यैवापेक्षितत्वाद्यदन्यत्पदान्तरमुदीक्ष्यते, तद्विलम्बितत्वाद्वाक्यम् । अथ वा ऽऽर्छेदिति यस्मात्परः श्रुतस्तन्निमित्तभावमाह । तत्र केवलश्रुतिपरिग्रहे निमित्तव्याघात इत्यार्छतिना हविषि विशेष्यमाणे श्रुतिर्न हीयते । यथा धात्वर्थेनात्र विधीयमाने । हविरुभयसम्बन्धे तु न धात्वर्थो विधीयते न सो ऽन्यत्र । तस्मादुभयपदं निमित्तकर्त्तव्यतावचनेन नापेक्षितं न नैमित्तिकेनातो ऽविवक्षितम् । अथ कस्मान्न पदद्वयविशिष्टार्त्तिर्निमित्तं प्रतीयत इति । यथा हविःशब्दाम्नानाद्विशेषणविशेष्यभावः परमार्थश्रुतित्यागेन, एवमुभयपदाम्नानाद्यादृशी श्रुतिस्तादृश्येव ग्राह्या । तस्मादार्त्ती द्वे अपीतरेतरयुक्ते विशेष्येते । अथ वार्तिर्विशेषणमित्येवं विवेकमगृहीतवान् । कियत्तु गृहीतम् आर्त्तिनिर्वृत्तिरपि तत्र गम्यत इति । तस्मादार्त्तिविशिष्टा तत्र निमित्तमिति । एवं चेद्यथैवैकेन विशेष्यमाणा ऽप्यार्तिनिर्वृत्तिरस्ति, एवं द्वितीयेनाप्यार्त्तिनिर्वृत्तिरस्त्येव । न श्रुतिर्हास्यते ।

अत्रोच्यते। इदं तावद्देवानां प्रियः प्रष्टव्यः इत्यादिनान्तर्नीताभिप्राय इदानीं प्रतिपादयति। कर्म निमित्तं चोद्दिश्य धात्वर्थस्तत्र विधीयते। तद्विशेषणं न तत्क्रियाङ्गमिति तस्तस्याऽविवक्षोक्ता। इहार्त्तिविशिष्टं द्रव्यं निमित्तं तद्व्यस्तमपि, हविराकृतिलक्षितं समस्तमपि। तस्माद्यद्यद्धविराकृतिकं तस्य तस्य निमित्तता शब्देन प्रतिपाद्यते। यथा गौर्न पदा स्प्रष्टव्य इति यो यो गौः स स पदा न स्पृश्यते एवमिहापि। अपि चोभयशब्दे हविषा सम्बध्यमाने ऽपि नैवोभयविशिष्टार्त्तिः प्रतीयेत। ननूभयशब्दो हविर्विशेक्ष्यतीत्यनेन गतार्थस्य किमर्थं पुनरुपन्यासः ?

उच्यते। आर्त्त्या सम्बध्यमानो हविर्विशेक्ष्यतीत्युक्तम्। यथा शुक्लो गौरानीयतामिति गां सम्बध्यमानां शुक्लो ऽर्थाद्विशेषयन् कृष्णादिनिवृत्तिं करोति, एवं दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वे चोदिते इतरदविवक्षितं हविषा पूर्वं सम्बन्धमूरीकृत्य निराकरोति। आर्त्तिना हविः परामृश्यते; नोभयशब्दो विद्यमानो ऽपि। अथार्त्याश्रयविभक्तियोगादित्यनेनैकविभक्तिमानन्तर्यमेकवाक्यत्वं चोपन्यस्यते। आर्त्तिर्हविराश्रयस्तत्र या विभक्तिः सेतरत्राऽपि। तस्माद्यया विभक्त्या हविरुच्चार्यमाणं सम्बध्यते, तेनैवोभयमपि सम्भन्त्स्यते। यथा च मनसि विपरिवर्त्तमानया ऽऽर्त्त्या हविः सम्बध्यते एवमुभयमपि। विपरिवृत्तेस्तुल्यत्वादेकवत्। वाक्यगते चोभे अप्यानर्थक्यादुभयशब्दस्य यद्येवं मन्यसे, इत्युपन्यस्य परिहरति। एकविभक्तियोगाद्धविषा सम्बन्धः स्यादार्त्त्या। यथा भार्यया सम्बध्यमानो राजानन्तर्ये ऽपि न पुरुषेण सम्बध्यते, निराकाङ्क्षत्वात्,एवमुभयपदम्। यथा श्वेतं पटेन सम्बध्यमानमेक-

वाक्यत्वे ऽपि नाश्वविशेषणं तेनानपेक्षितत्वात्, एवं हविष आर्त्या सम्बद्धत्वादुभयपदस्य नार्छतिना सम्बन्ध इति ।

तदयुक्तम् । अनेन वाक्येन सम्बन्धित्वेनावधृतत्वात् । अपि चोभयशब्दो ऽपि हविषा सम्बध्यते; न हविःस्वरूपेण । किं तु येनार्त्तेराश्रयो हविस्तस्मादार्त्या ऽनुरक्तेन हविषा सम्बध्यते । यथा व्रीहिषु प्रोक्षणमपूर्वीयांशेन । एवं चेदुभयविशिष्टार्तिरिति युक्तम् ।

उच्यते । तत्र प्रकरणादपूर्वीयांशता शक्या लक्षयितुं व्रीहिस्वरूप आनर्थक्यात् । इह तु प्रकरणस्थानीयस्याभावादशक्या लक्षणा । पूर्वमार्छतिना सम्बन्धस्ततस्तदनुरक्तस्योभयेनेति । एवं च लक्षणा भवेत् । एवं च हविषो द्विरुच्चारणाद्वाक्यभेदः । एवमार्त्यनुरागे निराकृते, "अथोच्येतार्तिविशिष्टेन हविषोभयस्य सम्बन्ध" इत्यनेन ग्रन्थेनानुरक्तेन हविषा सम्बन्धः कस्मान्नभवतीति ? एवं च पूर्वदोषद्वयं परिहृतं भवति, नार्छतिना सम्बन्धः शुद्धेन हविषेति । इतर आह—नार्छेदिति हविर्विशेषणत्वेनोपादीयत इति ।

नन्वेतदयुक्तम् । आर्तिर्हि विशेषयन्ती निमित्ततां प्रतिपद्यते । विपरीते विशेषणविशेष्यभावे ऽवश्यम्भावित्वादार्त्तेर्नित्यत्वप्रसङ्गान्निमित्तत्वव्याघातः ।

उच्यते । नायं हविर्विशेषणत्वनिराकरणपरः; किं तर्हि, परमताभिप्रायेण हविर्न विशेषयति । कथं तूभयपदेन हविः सम्बध्येतत्यनेनांशेन विशेषयति । अथ हविराकृतिलक्षितेन सम्बद्धमुभयमित्यध्याहारः, अस्मिन्पक्षे हविर्विशेषणमुभयं विशेष्यं; तदुत्तरकालं हविरनुक्तमुभयमार्छतिना सम्बध्यते । एवमपि स एव वाक्यभेदः । तत्र वचनव्यक्तीरुपन्यस्यन्नाख्यातस्य गुणप्रधानविवेकमाह ।

प्रधानभूत आख्याते विशेषणं विवक्षितं, गुणभूते ऽविवक्षितं शब्दवृत्तेनाविधीयमानं परार्थमुच्चार्य्यते । तेनायमर्थः । यत्राख्यातार्थः स्वविधानार्थमुच्चार्य्यते तत्र विवक्षितं विशेषणं, यत्र परविधानार्थमुच्चार्य्यते, यथा दध्ना जुहोतीति दधिसम्बन्धविधानार्थं होम उच्चार्य्यते, तत्र द्वितीयपदसम्बन्धो नास्ति । वाक्यभेदप्रसङ्गात् ।

एवं विवेके कथिते वचनव्यक्तय उपन्यस्यन्ते । प्रथमं हविःशब्दस्तन्त्र्यते । एवमुभयशब्दो यथा ऽर्त्तिना सम्बध्यते न हविर्विशिष्टं स्यादित्यनेनार्त्तिपदं तन्त्र्यते । अथ हविःशब्देन सम्बध्यते इत्युभयमित्यध्याहृत्योभयशब्दस्तन्त्र्यते । ततो दोषो वाजपेयाधिकरणोक्तः ।

होमाभिषवभक्षणं च तद्वत् ॥ २४ ॥

सत्यपि पदार्थाभिधाने होमाभिषवयोः क्रमो न विधीयते ऽर्थप्राप्तत्वात् । ननु यागहोमयोर्भिन्नत्वाद्धोमो विधीयते । उच्यते । वाक्यान्तरेण विहितत्वादविधेयः । सदसि भक्षान्भक्षयन्तीत्यप्यविधेयम् । अर्थप्राप्तत्वाद्देशस्य । प्रत्यक्तमपि होमोत्तरकालं भक्षणं होमोत्तरकालं प्रत्यग्गमनम् । उभयस्य क्रमो न विधीयते । भक्षो ऽभिषवकर्तुर्होमकर्तुश्च विधीयते । कर्तृसंस्कारत्वाद्भक्षस्य साहित्यमविवक्षितम् । नन्वभिषुत्येति साकाङ्क्षत्वादुत्तरेण क्त्वान्तेन सह सम्बध्यते । एवं चेदुभयविशिष्टेन कर्त्रा सम्बन्धाद्भक्षस्य नैकक्रियाकर्तुर्भक्षः ।

उच्यते । नास्ति क्त्वान्तानां परस्परसम्बन्धः । कुतः ? यस्मादभिषुत्येति साकाङ्क्षम् । उत्तरमपि क्त्वान्तत्वादेव साकाङ्क्षम् । तस्माद्यन्निराकाङ्क्षीकरणासमर्थं तदभिलषति । सर्वान्तेन स-

म्बन्धः । एवं चेदभिषुत्य हुत्वा भक्षयन्तीति नास्ति सम्बन्धः । प्रत्ययेन सम्बन्धे क्रियमाणे वाक्यभेदः ।

उभाभ्यां वा न हि तयोर्धर्मशास्त्रम् ॥ २५ ॥

भक्षस्य द्रव्यसंस्कारत्वेन विधिना कर्तुर्गुणभावः । तस्मादुभयक्रियासंयुक्तता विवक्षिता । अत उभयनिमित्तो भक्षः ।

पुनराधेयमोदनवत् ॥ २६ ॥

यस्योभावनुगतावित्यनुगमनमग्निं प्राप्नुवन्निमित्तम् । तस्य यत्स्वपदगतं पदान्तरगतं वा विशेषणं तदविवक्षितमित्युक्तम् । इहापि स एव न्यायः । इह पक्षे इह सुकृतं करिष्यामीत्यग्निद्वयदर्शनात्सिद्धान्तग्रन्थो ऽयम् ।

द्रव्योत्पत्तिर्वोभयोः स्यात् ॥ २७ ॥

आहवनीयस्य लौकिकत्वाद्यथा ब्राह्मणात्सन्ताद्विनद्रावेनात्मलाभः, एवं गार्हपत्येन सहोत्पत्त्या ऽऽत्मलाभो न केवलस्य । एवं गार्हपत्यस्यापि कार्यार्था चोत्पत्तिः । सा ऽन्यस्मिन्नविद्यमाने न घटते । अथ सहोत्पाद्यते इतरस्य च त्यागः अविद्यमान उत्पाद्यते। स च विद्यत एव। उत्पन्नस्य यावज्जीवं धारणम्। परित्यागे दोषः श्रूयते । किं चाविद्यमानसहोत्पत्त्या ऽऽहवनीयोत्पत्तिः शास्त्रावगता; नेतरथा । तस्मान्नैमित्तिकं सदुभयानुगमे पुनराधेयम् ।

पञ्चशरावस्तु द्रव्यश्रुतेः प्रतिनिधिः स्यात् ॥ २८ ॥

द्रव्यविनाशे द्रव्यमभिलषतः प्रकृतस्यौदनः पञ्चशरावपरिमितो द्रव्यं विधीयते । एवमपेक्षितः सम्बन्धः । कर्मान्तरे

ऽपेक्षितत्त्वादहष्टं कल्प्यम् । एवं चोदनस्यानन्तर्य्यलक्षणया श्रुत्या न्याय्यैव कर्तव्यता ।

चोदना वा द्रव्यदेवताविधिरवाच्ये हि ॥ २९ ॥

देवतापरिमाणयोरप्राप्तत्वादनेकगुणविधानात्कर्मान्तरम् । द्रव्ये चासति प्रतिनिधिर्भवति । विद्यते च लौकिकं पयः ।

स प्रत्यामनेत्स्थानात् ॥ ३० ॥

अमावास्याभावो द्रव्याभावात् । ततः किम्? आह । कर्माभावेन प्रतिषेधो लक्ष्यते । प्रतिषेधेन स्वकार्यं पञ्चशरावो ऽपि । दर्शाभावे विधीयमानः प्रयोजनाभिलाषी । तस्मादभावेन यल्लक्ष्यते तत्साधयन्नेकवाक्यतां दर्शे नयति । फलसाधनस्य नाङ्गं भवति । अयथाश्रुतकरणे फलवत्त्वाभावः । फलवत्त्वाभावादङ्गत्वाभावः । अफलसाधनस्य यदङ्गं तदनर्थकम् ।

अङ्गविधिर्वा निमित्तसंयोगात् ॥ ३१ ॥

आरब्धं कर्मावश्यं समापनीयम् । तस्माद्दर्शकर्मणो नास्त्यभावः । तद्भावात्कार्य्यस्य लक्षकं नास्ति । न दर्शं प्रतिषिध्य पञ्चशरावो विधीयते । यथा गिरं प्रतिषिध्येरापदम् । तत्रेरापदस्य गिरापदं कार्य्यं लक्षयति प्रतिषिध्यमानम् । एवमिह नास्ति । तस्मात्पञ्चशरावविधावपि कार्य्यापत्तेरभावाद्दर्शस्थानापत्तिर्नास्ति । यथाश्रुताकरणाद्दोष उपजायते । तन्निर्घातापेक्षायां विधीयमानं तद्दोषप्रतिसमाधानार्थत्वेनैकवाक्यतां याति ।

विश्वजित्त्वप्रवृत्ते भावः कर्मणि स्यात् ॥ ३२ ॥

फलमात्मसम्बन्धि कर्मापीत्येवमभिसन्धाय पुमान्प्रवर्तते

अतश्च सत्रायावगूर्य्येति सत्रफलमागूर्येत्यर्थः। तत्र फल आगूःकृते विश्वजिदुपायत्वेन विधीयते। सत्रफलमागूर्य्य विश्वजिता तत्सा-धयेदिति। एवं च यदि विश्वजिता तत्साधितं न सत्रेणार्थः। अथ सत्रेण, न विश्वजिता, तुल्यकार्य्यत्वाद्विकल्पः। अथ वा यः सत्रेण फलं करिष्य इति संकल्पयति तस्य सत्रकर्तव्यता-ऽशक्तौ यत्फलमभिप्रेतं तस्मिन्विश्वजिद्विधीयते। सत्रमागूर्य वि-श्वजितं कुर्यादिति वाक्यार्थः। आगोरणमात्रे एकस्य द्वे भिन्ने प्रयोजने स्याताम्। तत्र विवक्षाभेदमोषः। सत्रायेत्येका फ-लायेत्यपरा। अङ्गपक्षे चागोरणस्य प्राप्तत्वादागूर्येत्यवाच्यम्। यथा ऽन्येष्वङ्गेषु यः सत्रायागुरुते इति नोच्यते तथा ऽत्रापि।

वत्ससंयोगे व्रतचोदना स्यात् ॥ ३४ ॥

एतदौपोद्घातिकम्। अनेन कालेन कस्मिन्पक्षे ऽधिकार इति।

प्रस्तरे शाखा श्रयणवत् ॥ ४३ ॥

वत्ससंयोगप्रसङ्गेनाऽऽरभ्यते। अथ वा शाखाप्रहरणे काधिकार इति सम्बन्धः। ननु चतुर्थे प्रतिपत्तिः शाखा प्रहर-णमिति स्थितम्। उच्यते। प्रस्तरस्य प्रतिपत्तावपि जिह्वादेर-ङ्गभावो दृष्टस्तेनेहाऽपि तद्वदेव सम्भवेत्। तत्कथमित्याशङ्कायां युक्तस्तन्निराकरणार्थ आरम्भः।

कालविधिरुभयोर्विद्यमानत्वात् ॥ ४४ ॥

ननु च "सहयुक्ते ऽप्रधान" इति सहयोग एवं तृतीया। उ-च्यते। यद्येवं, ततः शाखाया अपि यजौ गुणभावः प्रस्तरव-त्स्यात्। यथा सूक्तवाक एव याज्याप्रस्तर आहुतिः। एवं चे-

न कालार्थता ।

उच्यते । प्रस्तरे सूक्तवाकस्य निर्देशात्तस्य वा प्रस्तरस्य यज्यकृत्त्वेन निर्देशाद्याजिरूपम् । अन्यथा याज्यादीनि न स्युरिति । नैवमत्र । अतः प्रहरतिमात्रे शुद्धे सह योग इति सूक्तम् ।

तस्माच्च विप्रयोगे स्यात् ॥ ४६ ॥

यदि प्रस्तरस्य गुणभूता शाखा, ततो विना शाखया प्रस्तरो न प्रहर्तव्य इति व्याख्येयम् । पौर्णमास्यां प्रस्तरः शाखां प्रयोजयेत् । सिद्धान्ते विनैव शाखया प्रहर्तव्यः । अथ वा ऽन्यथा व्याख्येयमुदाहरणम् । प्रातःसवनीयेषु प्रस्तरं विना न प्रहर्तव्या शाखा पूर्वपक्षे । सिद्धान्ते प्रहर्तव्येति ।

इति षष्ठाध्यायस्य चतुर्थः पादः ।



# अथ पञ्चमः पादः ।

अभ्युदये कालापराधादिज्याचोदना स्याद्यथा पञ्चशरावे ॥ १ ॥

यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियाद्ये मध्यमास्तानग्नये दात्रे ऽष्टाकपालमिति च द्वे एते वाक्ये । अर्थभेदाच्च तयोः सम्बन्ध इति केचिद्वदन्ति । तन्न । अर्थैकत्वादेकं वाक्यमित्युक्तं निमित्तनैमित्तिकत्वेन चैको ऽर्थः । न चाऽभ्युदयो विधीयते । इदानीं यस्य हविर्निरुप्तमिति पञ्चपदविशिष्टं निमित्तम् । न च तावन्निमित्तं नैमित्तिकेन सङ्गच्छते । यावानाश्रयस्तावानपेक्ष्यते यथा हविष आर्तिः ।

उच्यते । सर्वमपेक्षितम् । अभ्युदयस्य तावत्कर्ता विवक्षितो नाविशिष्टो ऽभ्युदयो निमित्तं भवति । पुरस्तादिति नित्यानुवादः । पश्चाद्दर्शनं नाभ्युदयः । न च कदा चिच्चन्द्रमा नोदेतीति हविःप्रक्रमेण विशेष्यते । अतः सर्वमीप्सितं विवक्षितम् । एवं विशोध्य विचार्यते । किं कर्मान्तरं किं वा दर्शस्य विशेषमात्रमिति । यागे च विधीयमाने नानेकगुणविधानं दुष्करम् । प्रकृते तु गुणविधाने वाक्यभेदः स्यात् ।

अपनयो वा विद्यमानत्वात् ॥ २ ॥

विद्यन्ते हि कर्माणि प्रकृतानि । कतमानि तानि ? उ-

च्यते । श्रूयते ह्यत्र त्रेधा तण्डुलान्विभजेदिति । अत्र त्रेधेत्य-नुवादः । त्रित्वाद्दर्शयागानां तण्डुलानित्यपि प्रदर्शनं विभागस्य दर्शनात् । अन्यथा ऽनेकार्थविधानाद्वाक्यभेदः स्यात् । न च वि-शिष्टविधानमत्र युक्तं कल्पनाभयात् । अतो विभजेत् । किं ? संयु-क्तम् । किञ्च संयुक्तम् ? द्रव्यदेवतं, केन संयुक्तं ? यागेनेति । अतो विभागोत्तरकालं शुद्धयागा विद्यन्ते । प्रकृता इदानीं निर्वपेदिति भावना द्रव्यदेवतागुणविशिष्टा यागमन्तरेणाना-श्रया यागं कल्पयति । प्रकृतं चोपादत्ते । तत्र कल्प्यात्प्रकृ-तप्रत्ययो बलवान् प्रकृतसम्बन्धविधानाच्च प्रथमभावनायाः प्रथमो यागः । उत्तरौ तूत्तरयोः ।

तद्रूपत्वाच्च शब्दानाम् ॥ ३ ॥

नैवात्रानेको गुणो विधीयते । किं तर्हि ? विद्यमानस्य ह-विषो मध्यमविभागाग्निदातृत्वविशिष्टा भावना प्रकृतयागस-म्बद्धा विधीयते । तथोत्तरे दधिक्षोदिष्ठचर्वाधारेन्द्रप्रदातृत्ववि-शिष्टा, पयःस्थविष्ठविष्ण्वादिविशिष्टा । मध्यमादिश्रवणात् । एवं चार्थानामविभागः भाष्यव्याचिख्यासया वर्ण्यते । अत्र प्र-कृतेषु यागेषु द्रव्ये चाविभक्ते देवताविभागमात्रं विधीयते । तथाभूतस्य च देवतान्तरं विधीयते । अत्रार्थप्राप्तश्रयणे सति चरुतेति सत्यमेतत् । दध्नस्तु श्रपणमेव न प्राप्नोति । उच्यते । वचनाच्छ्रपणं सह श्रपयतीति । ननु श्रपणमनूद्य सहत्वं वि-धीयते लाघवात्सहत्वमेव । अनेन तु दध्न एव श्रपणं विधी-यते । अर्थप्राप्ता चरुता सप्तम्यर्थश्च ।

लक्षणार्था शृतश्रुतिः ॥ ९ ॥

धर्माधिकं पयः शृतमित्युच्यते । श्रपणेन च सहचरिता

धर्मा यस्मिन्वत्सापाकरणादयः। तदिदं गृतसहचरितधर्मकं पथः।

उपांशुयाजे ऽवचनाद्यथाप्रकृति ॥ १० ॥

उपांशुयाजः पौर्णमास्यामेव नामावास्यायामिति वक्ष्यति। न चेयं कृत्वा चिन्तेति वृत्तिकारो ऽभिलषति। अधिकरणारम्भो न युज्यते। युक्तो वा बह्वृचब्राह्मणे स्पष्टेन वाक्येन विहितत्वादुपांशुयाजस्य। कथं तर्हि दार्शमिकमनपेक्ष्य वचनम्? न्यायमात्रमेतत्।

अपनयो वा प्रवृत्त्या यथेतरेषाम् ॥ ११ ॥

अकाले तन्त्रप्रवृत्तौ नैमित्तिकं विधीयते। विभजेदत्र व्युपसर्गः कर्म्मव्यतिहारार्थीयः। अन्योन्यं देवताविशेषं प्रति द्रव्यस्य भजनं कर्त्तव्यमित्यर्थः। एवं विशब्दः श्रुत्यावृत्तो भवति। धातुना च प्रत्ययस्याविप्रकर्षः। एवमन्योन्यसम्बन्धभजनं कुर्यादिति सामान्यवचनेन विभाग उपांशुयाजद्रव्यस्य मध्यमादिवद्विशेषवचनाभावात्। अस्मिन्पक्षे चतुर्गृहीतं त्रिष्वपि यागेषु विभागेन प्रक्षेप्तव्यम्। सो ऽस्य सामान्यविभागः। अथ वेत्यस्मिन्पक्षे विभजेदिति विभागार्थीयो विशब्दः श्रुतिवृत्तः। व्यतिहारपक्षे तु संयुक्तस्य कारकस्य विभागेनोत्तरसंयोगं लक्षयेत्। लक्षणा च लौकिकी सत्यां गतावयुक्ता। ननु वियोगो भजनं च विरुद्धावर्थौ न शक्यौ परस्परेण विशिष्टौ विधातुम्। उच्यते। *विशब्दाद्द्रव्यदेवताभजने प्राप्ते ऽपराधे निमित्ते नैमित्तिको भजनवियोगः शिष्यते। तत्र दे-

* अत्र मध्ये-- विशब्दार्थं केवलं विधास्यामः। ननु वाक्यार्थः स्यात्। सत्यमेतत्। विशिष्टविधानात्तु लघुतरौ ऽसौ, यौ धात्वर्थे वियोगविधिः। अनपराद्धस्य यथा प्रकृतिदेवताभजने इति पुस्तकान्तरे ऽधिकः पाठः।

वताभ्यो ऽपनीतेषु कृते नैमित्तिके यस्य द्रव्यस्य पुनः संयोगवचनमस्ति देवतान्तरेण युक्तं तद्यस्य तु नास्ति प्रहीणं तद् । न च चतुर्गृहीतसंयोगो ऽस्ति, तस्मात्प्रहीणमुपांशुयाजकर्मेति ।

निरुप्ते स्यात्तत्संयोगात् ॥ १९ ॥

आर्त्यां पदान्तरगतो गुणो विचारितः, इह पदान्तरगता क्रिया विचार्य्यते,एतावान्भेदः ।

अभावाच्चेतरस्य स्यात् ॥ २० ॥

तुशब्दार्थे चशब्दः । इतरथा चशब्दः समुच्चयं वदेत् । स चायुक्तः । न हि पूर्वोक्ते कस्य चिदभावो हेतुत्वेन । अपि च प्राकृतीभ्यो निर्वापपदार्थमाश्रित्य प्रथमे मुष्टौ संयोगो निर्वृत्तः । तस्याभ्युदयेन निमित्तेन विभजेदिति विभाग उच्यते । पदार्थ इति कृत्वा संयुक्तः पूर्वमिदानीमेकदेशो वियोज्यते । शक्यते च वियोक्तुम् । वियोगस्य संयुक्तमात्राश्रयत्वात् । न चान्यया देवतया संयोगः शक्यते कर्तुं, पदार्थाश्रयत्वात्तस्य । मुष्टिप्रक्षेपश्च पदार्थैकदेशः । तस्मात्प्राकृतनिवृत्तेर्विकृतासंयोगाच्च तूष्णीं निर्वापः । अन्यत्रापि बह्ववयवे पदार्थे ऽयमेव न्यायः । यथा प्रदाने तस्याऽप्यनुवचनप्रैषयाज्यादयो ऽवयवाः ।

नातत्संस्कारत्वात् ॥ २४ ॥

भिद्येत हि तथा वाक्यमिति स्वार्थपरार्थत्वद्वारापेक्षमेतदुच्यते । देवतासम्बन्धे ऽस्य स्वार्थता, चरुसम्बन्धे परार्थतेति सप्तम्यर्थो ऽनुवाद इति कथमेतद् ? एतच्चावद्यर्मकर्मैव निमित्ते अन्यथाकारं तत्र पयः स्वैर्धर्मैर्धर्मवत् । औषधस्यापि श्रपणं स्वैरेव धर्मैः प्रणीतादिभिर्धर्मवत् । तयोः प्रसङ्गेण चोदनावा-

क्येन भिन्नमेव श्रपणमुपदिश्यते । कुतः साहित्यं, येनार्थप्राप्तः सप्तम्यर्थो भवेत् ? दध्नस्तु श्रपणमपि नास्ति । तस्य दूरत एव नष्टः सहभावः ।

अथोच्येत पयसः पूर्वमवदाय तत्र चर्वेवदानं निक्षिप्यते, एवं पयसि दधनि च भविष्यति । तदपि न । न ह्येतदवदाने श्रूयते ऽभ्युदयेन निमित्तेन । किं तर्हि ? विभागो ऽभ्युदये विधीयते । न च वचनमन्तरेण दधि पयो वा चरोः शक्यं पूर्वमवदातुम् । तस्मादेवमेतद्विज्ञेयम्, अभ्युदितेष्टिप्रकरणे सहश्रपणविधातृवाक्यमस्ति, सह श्रपयतीति । अतः साहित्ये क्रियमाणे ऽर्थप्राप्तः सप्तम्यर्थो ऽनुवादः । विशिष्टविधानं तु निःसरणोपायत्वेन भवति । त्र्यविष्णानिन्द्राय प्रदात्रे दधनि चरुमिति पञ्चपदविशिष्टा भावना विधीयते । यागस्तु धात्वर्थः सन्निहित एव । यदि सन्निहितो न स्यात्कर्मान्तरं भवेत् । अस्ति तु सः । एवं भाष्यकारेणाङ्गीकृतां वह्वर्थत्वाद्वाक्यभेदसरूपमेवेति कृत्वा ।

साम्युत्थाने विश्वजित्क्रीते विभागसंयोगात् ॥ २५ ॥

विश्वजिदयं सत्रफलार्थः सत्रापरिसमाप्तिदोषोपघाताय च, न तु स्वर्गफलेनाश्रवणात् ।

दीक्षापरिमाणे यथाकाम्यविशेषात् ॥ २८ ॥

अत्राऽयुक्तः सिद्धान्तो वर्णितः । सत्यमत्र नित्यवदाम्नानं न हेतुः न तु द्वादशरात्रीर्दीक्षितो भूतिं चिन्वीतेत्यस्य वाक्यस्य । कस्य तर्हि ? एका दीक्षेत्येवमादीनाम् । तानि प्रकरणे किमित्युत्कृष्यन्ते ? तुल्यप्रमाणवतां च विकल्पः । आह—न तर्हि नित्यानि । उच्यते । प्रकृत्यपेक्षं नित्यत्वं यदि विकल्प्यते, कथं भूतिवचनवाक्यम् ? आह्योत्कृष्यतां को वा हेतुरत्र भवतो येन बहून्युत्कृष्य-

न्ते एकं नोत्कृष्यते? वरं बहूनामनुत्कर्षः प्रकरणानुग्रहात्। अपि च एकादिवाक्यान्यपि प्रकरणाज्ज्योतिष्टोमस्य। भृतिवचनवाक्यमपि। न च तुल्यप्रकरणेनान्यतमेनान्यतमदुत्क्रष्टुं शक्यते। अयं चाऽप्यनुवाद एव। यद्ययं विधीयेत वाक्यं भिद्येत। कथं? भृतिवचनं तावदर्थप्राप्तम्। न हि तेन विना परिक्रयः सम्भवतीति तत्तावन्न विधेयम्। द्वादश रात्रीरित्येतदपि नैव। सन्त्येव तस्य द्वादशरात्रयः। यद्वा दश दीक्षा इति वचनं नित्यवद् द्वादश रात्रय इत्येतदपि नैव। एकादिवाक्यानर्थक्यभयाद्दीक्षितो दीक्षाऽस्य सञ्जातेत्येतदपि नैव। सञ्जातैव हि तस्य दीक्षा आग्नावैष्णवादिभिः। किं तर्हि? भृतिवचनस्योपपदस्य सम्बन्धो विधीयते। तत्र यदि तावद्भृतिवचनं कुर्याद् द्वादश रात्रीरिति ततो नित्यानित्यसंयोगः नित्यवद्भृतिवचनमनित्या द्वादश रात्रयः।

अथ रात्रावेव भृतिवचनं कस्मान्न विधीयते? उच्यते। वाक्यं भिद्येत, रात्रिषु भृतिवचनं कुर्यात्तच्च द्वादशस्विति। अथ यद्रात्रिषु भृतिवचनं तद्द्वादशस्विति ततो विशिष्टानुवादः। यदि त्वन्यः पक्षः यद्भृतिवचनं कुर्याद्दीक्षित इति, ततो न दोषः। विधेयं चैतत्। तद्धि दीक्षितस्य न प्राप्नोति। द्वादशरात्रीरिति चानुवादः पाक्षिकः। लक्षणया वा दीक्षितकालसम्बन्धेनेति। तस्मादियमेवावधारणा दीक्षापरिमाणे याथाकामीति।

द्वादशाहस्तु लिङ्गात्स्यात् ॥ २९ ॥

द्वादशाहे ज्योतिष्टोमीयदीक्षापरिमाणे याथाकाम्यं प्राप्तं, तत्र संदेहः। तथैवेह उत नियमः? अविशेषाद्याथाकामीति प्राप्ते द्वादशाहस्तु लिङ्गात्स्यात्। किं लिङ्गम्? षड्विंशदहो वा एष यद्द्वादशाह इति। न चायं विधिरन्यस्तुतित्वात्। अपि च दीक्षावाक्ये द्वाभ्यां लोमावद्यतीति षड्त्रिंशाननुक्रम्य द्वादशत्वं

स्तौति । तस्माद् द्वादशाहे दीक्षाः ।

पौर्वापर्य्ये पूर्वदौर्बल्यं प्रकृतिवत् ॥ ५४ ॥

पौर्वापर्य्योत्पत्तावपि निमित्तयोस्तन्नैमित्तिकप्राप्तौ पूर्वेण न्यायेन विकल्प इति पूर्वः पक्षः । अत्र पूर्वबलीयस्त्वेन पक्षान्तरं ततस्तद्दौर्बल्यात्परबलीयस्त्वमिति सिद्धान्तः । यत्पूर्वं नित्यं परेण नैमित्तिकेन बाध्यते तद्वन्नैमित्तिकविज्ञानं परेण नैमित्तिकविज्ञानेन बाध्यते । अत इहोत्पन्नस्य पूर्वविज्ञातस्य विद्यमानशब्दस्योत्तरेण विज्ञानेन स्मृत्या प्रत्यक्षमूलस्य विरुध्यमानस्य चतुर्थे क्षणे बाधो भवति यथाशक्त्यनुबन्धावाख्याते । परं स्वमुत्पन्नत्वेनासत्त्वादपर्य्यालोच्यत्वादविरुद्धत्वादबाध्यम् । इहैवंलक्षणो बाधः । श्रुतिलिङ्गादिविरोधे प्रमाणानुत्पत्तिलक्षणो बाधः । उपक्रमवशेनोपसंहारशब्दार्थकल्पनायां लक्षणापरिग्रहेण शब्दार्थविज्ञानस्य धर्मबाधः । नित्यनैमित्तिकयोर्नित्यकाम्ययोः प्राकृतवैकृतयोश्च पौर्वापर्य्यनैमित्तिकन्यायेन पूर्वबाधः । सामान्यविशेषेषु सामान्याश्रयस्य विशेषे लक्षणया कार्य्यप्राप्तिः । विशेषाश्रयस्य तु श्रुत्या । श्रुत्या च लक्षणाप्राप्तं बाध्यते । तत्र बाध्यसम्बन्धविज्ञानबाधः । वैकल्पिकयोस्तु एकनिमित्ताश्रयत्वादपूर्वधर्माणां प्रयोजकं निमित्तं चेति पौर्वापर्य्याभावादितरेतरबाधनम् । इह तु पौर्वापर्य्ये पूर्वदौर्बल्यमिति ।

यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्याद्यथेतरस्मिन् ॥ ५५ ॥

द्वादशशतं सर्ववेदसेन बाधितं न तद्दास्यन्भवति । सर्व-

वेदसमर्थदाक्षिण्येन प्रतिषिद्धं तदपि वा दास्यन्न भवतीति सामान्ये परिचोदिते परिह्रियते । बाधो हि परिमाणान्तरोपदेशेन प्रतिषेधेन वा सम्भवति । न च परिमाणान्तरं चोद्यते । न च सर्ववेदसं प्रतिषिध्यते । न त्वदक्षिणः संस्थाप्य इति दक्षिणाप्रतिषेधः । न यथा न गृह्णाति षोडशिनमित्यदक्षिणस्य संस्थापनं निर्वृत्तिः कथ्यमाना ऽन्यथा न सम्भवतीति दक्षिणानिर्वृत्तिः कल्प्यते न शब्दात् । साभ्यासत्वात्क्रतोरुभयं सम्भवति । तस्मान्नार्थात्सर्ववेदसनिवृत्तिरिति । अनिवृत्तौ तु प्रतिहर्त्रपच्छेदात्सर्ववेदसं दास्यन्भवति । तस्य प्रयोगान्तरे निक्षेपः क्रियते ।

इति षष्ठाध्यायस्य पञ्चमः पादः ।



# अथ षष्ठः पादः ।

संनिपाते ऽवैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥

सिद्धान्तोपक्रममिदमधिकरणम् । भिन्नकल्पानामधिकार इति पूर्वः पक्षः । एवंकामाः सत्रमासीरन्निति सामान्यवचनप्राप्तेर्वसिष्ठादीनां कर्तृणां नाराशंसो द्वितीयः प्रयाज इति पूर्वपक्षवाद्यभिप्रायः । तत्र सन्निपाते ऽतत्कर्तृत्वान्निमित्तविघातादनङ्गं नाराशंसः । तत्कर्तृत्वाद्वा वसिष्ठानाम् । तैरपि क्रियमाणेन नाराशंसेनेतरेषाम् । अत्रासत्राण्यप्यनेककर्तृकाण्युदाहरणमेव ।

वचनात्तु द्विसंयोगात्तस्मादेकस्य पाणित्वम् ॥ १२ ॥

अभिन्नकल्पानामधिकार इति पूर्वत्र स्थितम् । इह राजपुरोहिताविति भिन्नकल्पयोरधिकार इति प्रतिपादयितुमधिकरणम् । राजपुरोहिताविति किमयं षष्ठीतत्पुरुषैकशेषः, उत कृतैकशेषेणोत्तरपदेन तत्पुरुषः, उत समानाधिकरणैकशेषः, उत द्वन्द्वः, इति संशयः ।

तत्र न तावत्कृतसमासस्यैकशेषः, राजशब्दानर्थक्यात् । यत्र एव हि स भवति । न च कृतैकशेषेणोत्तरपदेनेति भाष्य एवोक्तम् । न समानाधिकरणैकशेषः, राज्ञो ऽपुरोहितत्वात् । द्वन्द्वो ऽस्त्विति सिद्धान्तः । भिन्नकल्पयोरिहाधिकारः ।

सत्राणि सर्ववर्णानामविशेषात् ॥ १६ ॥

न स्वामित्वं हि विधीयते । ये यजमानास्ते ऋत्विज इत्येवं यदाऽऽनुपूर्व्यं तत्र यजमानर्त्विक्शब्दयोः पृथगर्थसिद्धयोः सामानाधिकरण्यानुपपत्त्या एकेन लक्षणार्थेन भवितव्यम् । तत्र मुख्यत्वाद्यजमानशब्दः श्रुतिवृत्तो जघन्यत्वादृत्विक्शब्दो लक्षणार्थः । यच्छब्दतच्छब्दकाबुद्देशकप्रतिनिर्देशकाविति को वाक्यार्थ इति चिन्त्यते । तत्र यजमानानां निर्दिष्टप्रतिनिर्दिष्टानामार्त्विज्यं विधीयते इति पूर्वः पक्षः ।

सिद्धान्तस्तु सर्वे वर्णा उद्दिष्टप्रतिनिर्दिष्टा यजमाना आर्त्विज्यस्य कर्तृत्वेन विधीयन्ते । तदिह प्रधानम् । तस्य च द्वौ धर्मौ, अन्यकर्तृकता ब्राह्मणकर्तृकता च । तत्रान्यकर्तृकता व्यावर्तते । ब्राह्मणकर्तृकता स्वधर्मकर्तृणां यजमानानां धर्मवशे त्रैवर्णिकत्वेन न जहाति । तदुक्तम्—अङ्गगुणविरोधे च तादर्थ्यादिति ।

पुरुषकल्पेन विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नधिकारः स्यात् ॥ ३६ ॥

सप्तदश वैश्यस्यानुब्रूयादिति सप्तदशस्य वैश्यः कर्ता विधीयत इति पूर्वपक्षवाद्यभिप्रायः, तद्वन्त्वध्वरकल्पादीनि नान्यः शक्नोति कर्तुमिति ।

न वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता चोदना ॥ ३८ ॥

वैश्यस्य साप्तदश्यमुपकारकं विधीयत इति सिद्धान्तः ।

इति षष्ठाध्यायस्य षष्ठः पादः ।

# अथ सप्तमः पादः ।

अहर्गणे च तद्धर्मा स्यात्सर्वेषामविशेषात् ॥ १४॥

अस्मिन्नधिकरणे सिद्धान्तदूषणम् । न ह्यहर्गणो गतो विश्वजितश्चोदकेन नामधेयेन वा धर्मान्गृह्णाति । यत्कारणं प्रयोगाङ्गं दक्षिणाकर्त्रायातद्वारेण चिकीर्षितार्थं च कर्तार उपादीयन्ते, यच्च फलवतश्चिकीर्षितम् अहर्गणाः फलवान्नकेवलो विश्वजित् । तस्मान्न पृथक्त्वेन समुदायिभिर्दक्षिणा अपेक्ष्यन्ते । प्रत्यक्षवचनविहिता बहवः कल्पाः सहस्रं प्राक्क्रतुराट्भ्य इत्येवमादयः । द्वादशाहप्रकृतित्वात्तु दक्षिणा प्राप्नोति । सहस्रसंवत्सरं तदायुषामसम्भवान्मनुष्येषु शतान्यायुरस्येति विग्रहीष्यामः इत्युक्तेनैवं संख्याशब्दानां समास इष्यत इति । यौ द्विवचनबहुवचनान्तौ संख्याशब्दौ ताभ्यां न समास इष्यते । कयोपपत्त्या? द्विवचनबहुवचनयोः प्रमाणाभावात् । राजपुरुष इत्युक्ते न राजशब्दात्परं द्विवचनं बहुवचनं वा श्रूयते । नन्वेकत्वे ऽपि प्रमाणं नास्ति, तेन वा कथं विग्रहः ? उच्यते । एकत्वे जात्यपेक्षं लिङ्गमर्थप्राप्तं त्वपेक्षम् । तस्मादेकवचनान्तेनान्यतमलिङ्गयुक्तेन विग्रहो भवति । चित्रगुरिति चित्रा गावो यस्येति विग्रहे प्रयोगस्मृतिः प्रमाणम् । भूमादिष्वर्थेषु मतुबादय इति ।

इति षष्ठाध्यायस्य सप्तमः पादः ।

# अथाष्टमः पादः ।

स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्यादपवृज्येत ॥ २० ॥

अत्र चोदयति । चोदकेनाग्नयः संस्कृतास्तस्यां प्राप्येरन् । स च यत्तस्यां न विद्यते तत्प्रापयति । विद्यन्ते च तत्राग्नयः । यदाहवनीय इत्यनारभ्यवादः प्रकृत्यर्थः । खादिरवन्न सर्वार्थः । खादिरता स्रुवस्य विधीयते । तत्रैवर्णिकानां येषु कर्मस्वधिकारो न तेष्वाहवनीयादिविधिप्रयुक्तिः । कस्मात् ? अग्निमत्वात्तेषाम् । सामर्थ्यादग्निमत्त्वम् । कामश्रुतयस्तेषामाधानश्रुतिं कल्पयन्ति । विद्यन्ते हि तेषामाधानश्रुतयः । तच्चाग्निप्रयुक्तं; न कर्मप्रयुक्तं । एवं त्वग्निमतो निषादस्थपतेरभावादग्निसाध्यत्वादग्निं प्रयुङ्क्ते । अग्नयो ऽप्याधानं, सामर्थ्यात् । अत इदमाधानं स्थपतीष्टिप्रयुक्तम् । अतस्तदर्था सा । तेनाऽऽधानेनाग्निभिश्च तद्व्यतिरेकाधानेन ब्राह्मणादयो नित्यमग्निमन्तः । अतस्तदपवर्गे ऽपवृज्येत । यदि तादर्थ्यान्नापवृज्येताग्निमत्त्वात्समर्थ इतीतरैरपि कर्मभिरधिकारः स्यात् ।

अपि वा लौकिके ऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥

आधानमनङ्गत्वान्न चोदकेन प्राप्यते । न च स्थपतीष्टिप्रकरण आम्नायते । अतो नौपदेशिकं, नातिदेशिकम् । लौकिक-

स्वग्निः । स चाऽऽचारतः प्राप्नोति । तस्मिन्गृह्याणि गृहाय हितानीत्यर्थः ।

उदगयनपूर्वपक्षाहःपुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ॥ २३ ॥

य इष्ट्या पशुना चेति पौर्णमास्याममावास्यायां वा नियतं ग्रहणमग्निहोत्रादेः । पक्षे निवृत्तत्वात् । सूत्रोपात्तेषु सर्वेषु कालेष्वन्यानि यथासम्भवम् । उत्तरसूत्रद्वयं न व्याख्यातं निष्प्रयोजनत्वात् । अहनि रात्रौ वा कर्मसाकल्यं भवसेत्र । इतरेषु तु पित्र्याणि । पित्र्याण्येतान्युदकतर्पणमहरहः, पिण्डपितृयज्ञो ऽमावास्यायाम्, उभयोः पक्षयोः श्राद्धम् । पित्र्या चातुर्मास्यकाला पौर्णमास्याम् । तानि नियोगत इतरेषु ।

याञ्चाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥

यैस्तु द्रव्यं चिकीर्ष्यत इति द्रव्योपादानार्थत्वाद्द्रव्यं चिकीर्षितम् । तत्तत्प्रयुक्तं तन्निमित्तं चेति पूर्वः पक्षः ।

नियतं चार्थवत्त्वात्स्यात् ॥ २७ ॥

प्रकरणाम्नानादपूर्वयुक्तं तन्निमित्तं वेत्युत्तरः ।

पशुचोदनायामनियमो ऽविशेषात् ॥ ३० ॥

पशुमालभेत इति नोभयथा प्रतिभातो वाक्यात्संशयः । वक्ष्यमाणेन तु कारणेन मन्त्रवर्णात् । यदि नियतो मन्त्रः छाग एव । अथ पाक्षिकः यः कश्चिद् गोऽश्वादीनां पशुत्वं सामान्यमत्र सूत्रे पश्वर्थः ।

छागो वा मन्त्रवर्णात् ॥ ३१ ॥

न चोदनाविरोधात् ॥ ३२ ॥

न हि विधायकगतयोर्विशेषणविशेष्यभावेनैकवाक्यता। छागस्य वपया इति वपाविशेषणं छागशब्दः। आर्षेयवरणे तूभौ विधी। तत्रैकेन वरणं विधीयते। अपरेणावयवसङ्ख्या। स्तुतिवाक्येन वरणे त्रित्वम्।

नियमो वैकार्थ्ये ह्यर्थभेदाद् भेदः पृथक्त्वेनाभिधानात् ॥ ३५ ॥

अत्र सूत्रे पशुशब्दः छागाश्वादीनां वाचकः। पूर्वस्मिन्नशब्दार्थे न शक्नोति विशेष्टुं मन्त्रवर्णः स्वार्थो ऽपि। व्यक्तिवचनत्वे तु मन्त्रगतो ऽपि सन्निधानाच्छागविषयं करोति। छागादीनां सामान्यं पशुत्वं पशुशब्देनोच्यते इति स एव शब्दार्थः, न च्छागत्वादीनि । एवमेव शब्दार्थेन वा प्रयोगसमवायित्वाविति प्रयोगवचनोपसंग्रहार्थं छागनियमः। एवं विशेषणविशेष्यभावे। विशेषणविशेष्यभावो हि पदे ऽपि प्रकृतिप्रत्यययोर्भवति। अश्व इति वाक्ये पदयोरपि भवति शुक्लः पट इति। वाक्यान्तरस्थयोरपि भवति आर्षेयं वृणीते। इहापि प्रकरणवशेन प्रयोगवचनवशेन वेति।

इति षष्ठाध्यायस्याष्टमः पादः।

समाप्तश्च षष्ठो ऽध्यायः।

# अथ सप्तमो ऽध्यायः ।

श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भा-
वः स्यात् ॥ १ ॥

प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनां कर्त्तव्यताचिन्ते-त्येतदयुक्तम् । सर्वपृष्ठायां किं सकृदुत्तरार्द्धाद् स्विष्टकृते ऽवदेयमुत भेदेनेति चिन्तितम् । तथा दृतिनवनीतमाज्यं भवतीत्येवमादिषु प्रत्यक्षधर्मकेष्वपि चिन्ता वृत्ता । अत एवं वाच्यं, प्रकृतौ विकृतौ चोपदेशश्चिन्तितः । सप्तदश प्राजापत्यानित्येवमादिषु प्रत्यक्ष एवोपदेशः । सर्वपृष्ठादिष्वानुमानिकवचनोपदिष्टानामुपदेश एष चिन्तितः । सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति प्रतिपाद्यते । अष्टमेन विशेषः । नवमेन विशेषातिदेशः प्रसङ्गेनारभ्यते । किं मन्त्रो ऽग्निस्वरूपप्रकाशनार्थमुच्चार्यते उताग्निस्वरूपमविवक्षितम् तस्मादित्थं प्रयोक्तव्यमित्यतिदेशप्रकार एव चिन्त्यते । स दशमव्यापारमनुमन्यमान एवात्मा लभ्यते । दशमे बाधाभ्युच्चयानुनिष्पादिनि शेषयत्ताचिन्ता । इयत्ताप्रसङ्गेन चैकादश आरभ्यते । तन्त्रावापेनेदृश्यामियत्तायां प्राप्तायां तदपवादत्वेन द्वादशः । अन्यादृशीयत्ता प्रसङ्गेन भवति ।

यद्यपि तन्त्रावापप्रसङ्गा उभयत्राविशिष्टास्तथा ऽपि पूर्वपक्षे नैषामवसरः । यावद्भेदो नावधृतस्तावच्छेषिचिन्ता नास्ति । प्रयोजकाप्रयोजकत्वं च शेषशेषित्वादृते । तथा क्रमः प्रयोजकाप्रयोजकत्वादृते । तदीदृशैः को ऽधिक्रियत इत्यधिकारल-

क्षणमापतति । न च षष्ठसप्तमयोर्मध्ये तन्त्रावापप्रसङ्गानामवसरः अधिकारानन्तरमिदम् किं यागो ऽधिक्रियते नेति प्रसङ्गेनारभ्यते ।

अथ सौर्यादयः प्राकृतैर्धर्मैरधिक्रियन्ते ऽतिदेशेन वेत्यनेन प्रसङ्गेन सप्तमः । पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तुताः । श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारभावः स्यादिति । करणेतिकर्त्तव्यतानामविशिष्टा भावना विधीयते । तत्र यदस्यां करणमितिकर्त्तव्यता तदन्यत्र न कर्मान्तरत्वात् । शब्दान्तरत्वात्कर्मभेद इत्युक्तम् । इतिकर्त्तव्यता च भावनाकाङ्क्षिता किं, केन, कथमिति । न यागापूर्वफलानां स्वयमित्थमन्याकाङ्क्षा ऽस्ति । तस्माद्भावनया सम्बन्धः ।

उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैककर्म्यं स्यात् ॥ २ ॥

यजिप्रयुक्ता धर्माः । तत्र केचिद्वर्णयन्ति । प्रकरणाम्नानानुमितेन वाक्येन सम्बन्धः । एतदपरे दूषयन्ति । यः फले चोद्यते स कथंभावाकाङ्क्षी धर्मैः संबध्यते । स च विशेषः साकाङ्क्षः तस्मात्प्रयोगे ऽन्यस्मिन्विशेषान्तरे कुतो धर्मप्राप्तिः? अयं यजिविशेषः श्रुत्या वाक्येन प्रकरणेन चेति तत्र प्रयोगवाक्यं धर्मसम्बन्धित्वेनोदाहरन्ति । यागोत्पत्तिरपि न क्रियते । वाक्यान्तरैरुत्पत्तेः । फलसम्बन्धश्च, विश्वजिन्न्यायेन प्राप्तेः । पारिशेष्यादितिकर्त्तव्यतासम्बन्धायेदम् । यथा ऽध्वर्युर्गृहपतिं दीक्षयित्वेति दीक्षाक्रमपरं वाक्यम् । तत्रोद्दिश्यमानत्वाद्यागस्य स्वपदस्थं च विशेषणमविवक्षितम् । तस्मात्सर्वयागेषु धर्माः । न च दर्शपूर्णमासपदेन सम्बध्यन्ते । अत्यन्तवाक्यत्वात् । यागे विधीयमानेतु धात्वर्थे किंचिद्विधानाच्छ्रुतिः ।

एतदप्ययुक्तम् । प्रयाजादीनामप्यनेन न्यायेन फलसम्बन्धः स्यात् । ततश्च कतरे धर्माश्चिन्त्यन्ते ? विश्वजिदन्यथानुपपत्त्या फलकल्पना । इह तु शब्दतत्त्वात् फलस्यान्यथाऽनुपपत्तिः क्षीणा । तस्मात्प्रथममेव व्याख्यानम् । यः फले चोद्यते स इतिकर्त्तव्यतया सम्बध्यमान इतिकर्त्तव्यतां प्रति प्रधानम् । प्रधानस्य चोद्दिश्यमानस्य विशेषणमविवक्षितम् । प्रकरणाम्नानानुमिते ऽपि वाक्ये न स्वशक्त्या सर्वयागानां धर्मसम्बन्धः । उपपत्तिस्तु करणानुग्राहिणीतिकर्त्तव्यता दृष्टा । सा तथैवेहापि भवितुमर्हति । सर्वाण्यपूर्वाणि यजिमन्त्येवमादिः । स च यजिसम्बन्धः सर्वेषां तुल्य इत्यन्तो युक्तो ग्रन्थः । यागो ऽपूर्वेणाविनाभूतो न त्वपूर्वयोगेन । अपूर्वे चासम्भवन्तो यागे क्रियन्त इत्यप्ययुक्तम् । अन्यत्र श्रुता अन्यत्र कृताः स्युः । अन्विताभावमङ्गीकृत्य सर्वाण्यपूर्वाणि यजिमन्तीति ब्रवीति । अपूर्वे चासम्भवन्त इति यागस्यैव शक्तिरपूर्वमिति । शक्तिमति च क्रियमाणा नाश्रुते कृता भवन्ति ।

चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥

भावनाशेषभावादित्यर्थः । तद्भेदाद्व्यवतिष्ठेरन् । उत्पत्तेर्गुणभूतत्वान्न स धर्मैः सम्बध्यते । सम्बध्यमाने च स्वार्थपरार्थता, वाक्यभेदादिदोषश्च । अतः सर्वविशेषणविशिष्टा भावना विधीयते । अर्थात्परस्परनियमः । एवमपि श्रुत्या सामान्यस्य भावनावाक्याद्विशेषस्य । न चैतद्युगपद्भवतीति प्रत्युक्तो ग्रन्थः । उपश्लेषलक्षणया श्रुत्या धातुना सम्बन्धः । तृतीयया तादर्थ्येन दर्शपूर्णमासयोः । तत्रोपश्लेषलक्षणया ता-

दृष्टं कल्प्यम् । यदि दर्शपूर्णमासौ भावनया सम्बध्यमानौ यागवद्द्रव्यस्य करणतां प्रतिपद्येयातां, ततो विरोधे श्रुत्या वाक्यं बाध्येत । इह विरोध एव नास्ति । यदि वेदश्यः श्रुतयः परिगृह्यन्ते, ततो नामपदानामसम्बन्धात्केवलान्याख्यातान्यवतिष्ठेरन् । एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते । किं तर्हि? वाक्यार्थः । इत्यप्ययुक्तम् । भावार्थाधिकरणविपरीतत्वात् । यागसामानाधिकरण्याच्च यागवचनम् । तच्च यागफलसम्बन्धे भवति । तस्माच्च ज्ञायते किमनेनोच्यते ।

अपि च फले विधीयमानस्याश्रयाः क्रियादेयः । सा च गोवाहनादिवन्न लभ्यते अविहितत्वाद्यागस्य । ततश्चाश्रयो वाक्येन देयः । तत्र वाक्यभेदः । तस्मादन्यथा वर्ण्यते । एवमपीति नोपश्लेषलक्षणां श्रुतिमभिप्रेत्य । किं तर्हि? अभिधात्रीम् । यजेतेत्ययं प्रकृताप्रकृतयागं भावनासम्बन्धित्वेन प्रतिपादयति । दर्शपूर्णमासपदेन प्रकृते स्थाप्यते । तत्र प्रकृतत्वाविशेषे ऽपि विशिष्टेषु स्थाप्यते; न प्रयाजादिष्वपि । तस्मादिदं विलम्बितं दृष्ट्वा वाक्यमित्युक्तम् । न च सकृदुच्चरितः प्रकृताप्रकृतवचनः प्रकृतवचनश्च । इतरस्त्वाहार्य एव । यागा विपरिवर्तन्ते त एव फलेन सम्बध्यन्ते । कुतः? रूपवत्ता सन्निधावरूपः शिष्यमाणः प्रकृतग्राहकः । यजेतेति चायमरूपः । तत्र प्रकृतत्वाविशेषत्वात्सर्वेषु प्रसक्तेषु दर्शपूर्णमासवाच्या एव फले विधीयन्ते । अतो भावयेद्यागेन करणेन दर्शपूर्णमाससंज्ञकेनेति । दर्शपूर्णमासाभ्यामिति फलेनोपसंहृतं भाष्यकारेण ।

सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥

लक्षयित्वा यो धर्मः स सार्वत्रिकः । गवादयश्च तथा । उपादीयमाने विपरीतम् । न च तत्र सम्भवन्स्ततो ऽभावाकृतिः स-

द्दचारिपिण्डलक्षणार्था । अयुक्तमिदं पशुमालभेतेत्यत्रापि न स्यात् । एकस्यालम्भो ऽनेन न्यायेनाकृतिः लक्षितासु व्यक्तिषु सम्भवात् । शक्यते वाकृतिः स्प्रष्टुम् । तस्मादनेन यत्सार्वत्रिकत्वमुक्तं तदतिप्रसज्यते ।

अविभागात्तु नैवं स्यात् ॥ ५ ॥

अनेन सन्निपत्योपकारकास्तदर्था उच्यन्ते । तन्मध्यपातात्प्रयाजीदानामर्थगतामाह । त्रिविधं नाम । कर्मनाम, संस्कारनाम, यौगिकं चेति । तत्र यौगिकं नातिदेशकम् । कथं ? येनैव योगेन द्वादशाहे प्रायणीयशब्दस्तेनैव गवामयने ऽपीति ।

अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥

इतरशब्दो नाधिक्ये लोके प्रसिद्धस्तर्हि उपयुक्ताद्यदितरत्सन्निहितं तत्र प्रसिद्धः । न चैकस्य शब्दस्य द्वावर्थौ । तस्मादिषौ वषट्कारनिधनं विप्लुतिसमस्ताङ्गं भवतीत्युक्त्वा समानमितरच्छ्येनेनेति । तत्र ज्योतिष्टोमाच्चोदकेन यत्प्राप्तं तदितरशब्देन परामृश्यते । तस्य विकारो विधीयते । यदितरज्ज्योतिष्टोमात्प्राप्तं तच्छ्येनेन समानं कर्त्तव्यं, तथा लोहितोष्णीषादि विकारमात्रमतिदिश्यते । इतरदधिकार्थे चेतरशब्दे वर्ण्यमाने ऽप्यप्राकृताः कण्टकचोदनादयस्तेषामप्यतिदेशः स्यात् । भाष्यकारव्याख्यानेन यच्छ्येनेन समानं तदितरदित्याश्रीयमाणे स्तुतिरपि नोपपद्यते । प्रदेशान्तर इषुर्विहितः । प्रदेशान्तरेण समानमितराविति । तस्मादानर्थक्याद्वाक्यस्य पूर्वपक्षवचनव्यक्तिपरित्यागः ।

इति सप्तमाध्यायस्य प्रथमः पादः ।

# अथ तृतीयः पादः ।

उक्तं हि क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥ १ ॥

नैयमिकस्याग्निहोत्रशब्दो नामधेयमित्युक्तम् । पुनरुच्चार्यमाणो धर्मातिदेशको भवति । कथमग्निहोत्रस्य या ऽवगतेतिकर्त्तव्यता तां शक्नोति लक्षयितुं विनापि वतिना ? न वाक्यसंयोगात् । न चाऽयं गुणविधिः तद्धितचतुर्थ्योरभावात् । उच्चार्यमाणे एव विज्ञातं नामिनमवबोधयति । उभयत्र नामधेयमिति चेत् ? तन्न । नामधेयं विशिष्टं भवति । न चेह विशिष्टता ऽस्ति द्रव्यदेवताभावात् । उभयत्र च नामधेयत्वाददृष्टा शक्तिः कल्प्या ।

अपि वा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥

प्रयन्त्यनेनेति प्रायणीयमित्यनेन योगेन द्वादशाहे इयं संज्ञा प्रवृत्ता । गवामयने ऽप्ययं योगो विद्यत एवेति धर्मातिदेशो नास्ति । यत्र तु पञ्चमः षष्ठो वा प्रायणीयः तस्य योगाभावादनुदाहरणत्वम् । तस्मात्तादृशो न पूर्वाधिकरणापवादः ।

प्रडहाद्वा तत हि चोदनाः ॥ ७ ॥

ज्योतिष्टोमे रथन्तरं पृष्ठं भवतीत्येकस्य पृष्ठस्याविहितत्वात्स-

---

१ नितान्तं स्फुटत्वात्सङ्क्षिप्तत्वाच्च न व्याख्यातो द्वितीयः पादः ।

र्वशब्दस्य विधेयाभावाद्वाक्यानर्थक्यं प्रसज्यते । षडहे च गायत्रं प्रकृत्य सर्वाणि पृष्ठानि कार्याणीति विहितं, तत्र सर्वपृष्ठशब्दावर्थवन्तौ । ज्योतिष्टोमे च चक्रिवन्न्यायेन पृष्ठशब्दप्रयोगाल्लक्षणा । सप्तदशानि पृष्ठानीति च सप्तदशता विधीयते न पृष्ठता । न च विकल्पप्राप्तयोः समुच्चयेनार्थवत्ता व्यर्थत्वादेव सर्वशब्दस्य । सर्वपृष्ठ इति च समासोऽयम् । समासेन च विदधतो नानेकगुणविधानम् दुष्करम् । ([१]अथ वा पृष्ठेषु सर्वता विधीयते न पृष्ठानि न वा विधाय पृष्ठानि सर्वता शक्या विधातुम् । तस्मादर्थापत्त्या सर्वपृष्ठानां विधानम् । ) एवं च क्रमविधिपरं वाक्यमुपपत्स्यते तस्मिन्विश्वजिति ।

प्राकृतं वाऽनामत्वात् ॥ २१ ॥

प्राकृते प्रणयने स्थिते परिसङ्ख्या श्रवणमित्येवमादीनि सूत्राणि परस्परेण संबद्धानि । कथं ? यदा परिसङ्ख्या भवति तदा द्वयोः प्रणयनाभावादाहवनीयाभावः । आहवनीयाभावाद्यागाभावः । न च दर्शपूर्णमासयोः प्रणयनं धर्मवत् । येन धर्मपरिसंख्यायां कृतायां प्रणयनं केवलं क्रियेत । गुणानामपि नोपपद्यते । कथं ? यत्र तस्मिन्नेव वाक्ये गुणिनमुच्चार्य गुणो विधीयते, यथा दध्ना जुहोति, शरमयं बर्हिर्भवति, तत्र भवति गुणविधिः । इह प्रणयनमुच्चार्य न कश्चिद्विधीयते । उत्तरवेदिविधिरिति चेत् ? न । प्रणयनवाक्याद्वाक्यान्तरे उत्तरवेदिग्रहणात् । अर्थवादोऽप्यनुपपन्नः । यत्र विधीयते तत्रार्थवादः । प्रणयनं दर्शपूर्णमासयोर्विधीयते । इह त्वविधानात्किमर्थवादेन ?

१ अत्र-अथ पृष्ठगता सर्वता साक्षाद्विधीयते । तस्मादर्थापत्त्या पृष्ठानां विधानम् । तस्मात्षाडहिकानि सर्वपृष्ठानि विधीयन्ते इति पुस्तकान्तरपाठः ।

## मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥

वरुणप्रघाससाकमेधयोर्विधीयमाने पुनः श्रवणादुपपद्यत एवार्थवादः। अस्मिन्पक्षे युक्तो दोषः। परिसङ्ख्येति प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति। इदमपि प्राकृते प्रणयने स्थिते न सम्बध्यते। यत्र प्रणयनं तत्राग्निः तत्रैव चोत्तरवेदिप्रतिषेधादिति। इदमपि प्राकृते प्रणयनम्। अनेन प्रतिषेधलिङ्गेन प्रथमोत्तमयोः प्रणयनम्। प्राकृते प्रणयने स्थिते संशयाभावः। अनियमपक्षस्य चानुत्थानं उत्तरवेदेश्चाप्रसङ्गात्। उत्तरवेदिप्रतिषेधेन यः पक्षः प्रथमोत्तमयोरिति तस्य मूलाभावः। मध्यमयोर्वा गत्यर्थवादादित्युक्तम्। अविधानात्प्रणयनस्यार्थवादो न घटते। ननु (वरुणप्रघासानां गुणवाक्यप्राप्तेरयं तेषामेवात्रेतिवादः स्यात्। को ऽयमर्थः?) उपात्रवपन्तीत्यवान्तरप्रकरणात् वरुणप्रघासानामवान्तरवेदेः प्राप्तत्वात् प्रथमोत्तमयोः प्रतिषेधानुपपत्तिमाह। तत्र त्रीण्यपि पर्वाण्यनुकीर्तयेत्। यद्यवान्तरप्रकरणेन वरुणप्रघासानामुत्तरवेदिस्तत्र त्रयाणामेवोत्तरवेदेरभावात्सर्वत्र कार्यप्रतिषेधः सामर्थ्यादिति। न चाऽयमनुवादः। यत्रार्थवादत्वेन प्रतिषेधः तत्र नित्यानुवादो भवति। तस्मादनारभ्य श्रवणाच्चातुर्मास्यानामुत्तरवेदिः प्रथमोत्तमयोः पर्युदस्यते। एवं प्राकृते प्रणयने सूत्राणि न घटन्त इत्यन्यथा वर्ण्यते। इह हि त्रयः पक्षाः। किं दार्शिकं प्रणयनं सौमिकमपूर्वं वेति। दार्शिकमिति पूर्वपक्षं कृत्वा प्रणयनं तु सौमिक-

---

१. अत्र च—तत्रोत्तरवेदिः प्राप्नोत्यग्निसंस्कारिका। स यत्राप्रतिषिध्यते तत्राग्निर्विद्यते। तत्र प्रणयनमिति। पुस्तकान्तरस्थः पाठः।

() एतच्चिन्हगः पाठः। पुस्तकान्तरे नास्ति।

मित्यनेन निवार्यते । एवं तु शब्दो ऽर्थवान् प्रणयनमुत्तर-वेदिप्रतिषेधश्च तद्भाष्यव्याख्यानमेव प्राकृते वा नामत्वादिति वा पूर्वप्रणयनानन्तरं वरुणप्रघाससाकमेधयोर्विधीयते । अ-ग्निप्रणयनोत्तरकालमाहवनीयाद्वा ऽग्निः प्रणीयत इति श्रू-यते । प्रागपि होमादाहवनीयः श्रुतश्रवणनिर्वापोपस्थानप्रा-यश्चित्तप्रयुक्तो विद्यते । तस्मादेशलक्षणार्थ आहवनीयश-ब्दः । एवं चेत्प्रणयनान्तरं विधीयते । प्रकृते चेति स्वाभा-विकमित्यर्थः । अनामत्वादिति भाष्यं व्याख्यातमेव । प्रथ-मस्य प्रयोजनसूत्रमिदं परिसङ्ख्यार्थं श्रवणगुणार्थमर्थवादो वेति । यथासम्भवमेतेषु पुनः श्रुतिर्योजनीया । प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधादिति मध्यमस्य पक्षस्य प्रयोजन-मिदं सूत्रम् । द्वयोः पर्वणोः प्रणयनान्तरं भवति उत्तरवेदि-प्रतिषेधश्च तद्वदिति ।

औत्तरवेदिको ऽनारभ्यप्रतिषेधः ॥ २५ ॥

इत्येतत्परिहारसूत्रं भाष्यव्याख्यातमेव ।

स्वरसामैककपालामिक्षं च लिङ्गदर्शनात् ॥ २६ ॥

अपवादापवादप्रसङ्गेनेदमारभ्यते । नामधेयेनातिदेशः । स्वराणि सामान्यस्येति । यथैव गवामयने गुणविधिस्तथेतर-त्रापि । इह स्वरसामानाविसामिक्षैककपालानपि द्रव्य-विधित्वाद् गुणविधी । एवं गुणविधित्वादतिदेशाभावे प्राप्ते यस्य लिङ्गमर्थसंयोगादित्यनेनातिदेशः प्राप्यते ।

रूपं वा ऽशेषभूतत्वात् ॥ २७ ॥

आकृतिवचना एवैते । न क्रिया समुच्चार्यते । यथा लावकः

पावक इत्यनेन शब्देनाश्रयो बाध्यते । क्रिया तु लक्षणया ज्यायसी ।

विशये ऽलौकिकः स्यात्सर्वार्थत्वात् ॥ ३० ॥

आहवनीयादयः कैमर्थ्याभिलाषिणः प्रयोजने दत्ते निराकाङ्क्षीभूताः । अन्यत्र शेषभाव एषां नास्ति प्रमाणम् । ध्रौव्या अपि व्याघारणार्थमुत्पन्नास्तेनैव निराकाङ्क्षा नाऽन्यत्र विनियोक्तव्याः । व्याघारणे कृते ऽपवृत्ते कर्मणि लौकिक इति प्रसङ्गादुपनिधाने सम्भवति–यो ऽन्य आनीयते तत्र प्रयत्नः कर्तव्य इति ।

अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दः स्यात् ॥ ३६ ॥

द्रव्यवचनः पृष्ठशब्दः । तस्मादन्यत्र श्रुतानुमितौ द्वौ धातू ।

---

१ शब्देनाकृतिर्बोध्यते । क्रिया लक्षणया । श्रुतिश्च लक्षणाया ज्यायसीति पुस्तकान्तरपाठः ।

२ द्रव्यवचनः पृष्ठशब्दः । कुतः ? आत्मनेपदं मन्त्रकरणे स्मर्यते । तच्च मन्त्रकरणं नाभिधानमन्तरेण सम्भवतीत्यभिधाता धातुरनुमीयते परस्तस्मात् । अतो ऽत्र श्रुतानुमितौ द्वौ धातू । तत्र तिष्ठतिः सामर्थ्यप्राप्तो ऽनूद्यते । उपसर्गार्थो ऽनुवादः । सामीप्यस्य प्राप्तत्वात् । यस्योपस्थानं क्रियते तस्मात्समीप एव स्थितत्वात्क्रियते; नान्यथा । तस्मादुपग्रहात्पृष्ठशब्द आत्मीयान् मन्त्रान् लक्षयति । पृष्ठशब्दे श्रुतिवृत्ते गृह्यमाणे ऽत्यन्तं बाधलभ्यत्वान्न विरुध्यते । इतरस्त्वाह—अभिधानस्य मन्त्रः । एवं चेत् अभिधानार्थः स कथमुपतिष्ठतेस्तादर्थ्यं प्रतिपद्यते ?' उच्यते । यथा दीक्षणीयादयः पुरुषसंस्काराः फलप्रतिग्रहणयोग्यं पुरुषं कुर्वन्तो यागकार्ये वर्तमानास्तदर्थाः, एवमिहाप्युपतिष्ठतेरभिधानं कार्यम् । एवं च तद्व्यापारं कुर्वन्तस्तदर्थतां प्रतिपद्यन्ते । इति पुस्तकान्तरपाठः ।

तत्र तिष्ठतिः सामर्थ्यात्प्राप्तो ऽनूद्यते । उपसर्गार्थो ऽनुवादः, सामर्थ्यस्य प्राप्तत्वात् । यस्योपस्थानं क्रियते तस्य समीपे स्थित्वा क्रियते, नान्यथा । उपग्रहात्पृष्ठशब्द आत्मीयान्मन्त्रान् लक्षयति । पृष्ठशब्दश्रुतिवृत्ते गृह्यमाणो ऽसन्तबाध आत्मने । तस्मात्पृष्ठशब्दो मन्त्राभिधायी । आह—उपस्थानवचनः कथमभिधाने वर्तते ? धातूपसर्गयोरर्थः सो ऽभिधानार्थः । कुतः सामर्थ्यलभ्यत्वान्न विरुध्यते ? इतरस्त्वाह—अभिधानस्य मन्त्रो नोपतिष्ठतेः । एवं चेदविधानार्थस्तत्र कथमुपतिष्ठतेरभिधानकार्य्यमेव चेद्व्यापारं कुर्वंस्तदर्थतां प्रतिपत्स्यते ।

इति सप्तमाध्यायस्य तृतीयः पादः ।



# अथ चतुर्थः पादः ।

इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥

नाम्ना ऽतिदेशो ऽभिहितः । इदानीमानुमानिकेन वचनेनातिदेश उच्यते । किमत्र तृतीयया कार्य्यं यदा स्वभावसिद्ध एष कर्मणां गुणभाव इत्येतदयुक्तम् । साध्यसाधनसम्बन्धस्य वैदिकत्वात् । यथाश्रुतं तदा भवति । न चाश्रवणे तृतीयायाः साधनतां प्रतिपद्यते । न च सामान्यतो दृष्टं लौकिकं कर्म गुणभूतम् । अनेनापि कर्मणा गुणेनैव भवितव्यम् । अतः को ग्रन्थार्थः ? यजेतेत्युच्चरिते किं, केन, कथमिति तिस्र आकाङ्क्षा जायन्ते । तत्र किमिति नियमेव पुरुषार्थापेक्षः साक्षात्पारम्पर्येण वा धातुस्तत्करणं भवति । पुरुषार्थस्य कर्मभूतत्वात् । आह—स्वभावनिबद्धः कर्मणां गुणभाव इति । अथ वा स्वर्गमभिलषतः करणमभिलषतस्तृतीयया करणं निर्दिश्यते । तद्विवक्षायां दर्शपूर्णमासादीनि निर्दिश्यन्ते । स्वर्गं प्रार्थयमानः कमुपायं कुर्यात् ? यागं कुर्यादिति । केनोपायेन कुर्यात्? यागं कुर्यादिति । ईदृश्यां विवक्षायां सौर्यादीनि विधीयन्ते । भवति हि द्विःप्रकारस्यापेक्षा । तस्मादविरोधः । येषां चार्थानां ज्ञायत एवेतिकर्तव्यता, तेषां कर्त्तव्यत्वमात्रमुपदिश्यते । यथौदनं पचेदिति ।

नन्वयुक्तमिदम् । ओदनं पचेदित्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते । एवं चेत्किं, केन, कथमित्याकाङ्क्षायामितिकर्त्तव्यता सम्बध्यते । तत्र प्रत्यक्षादिना निर्दिश्यते । इह शास्त्रेण निर्दिश्यते । आ-

काङ्क्षात्रयं तु तुल्यम्। अत ओदनं पचेदिति केवलं निर्दिश्यते। फलेनायं तु ग्रन्थः। पचेदित्येतावत्यपि निर्दिष्टे केन, कथमिति ज्ञायते एवेतिकर्तव्यता विधेः। यत्रेतिकर्तव्यता समीपे नाम्नायते तत्र कथंभावस्य साकाङ्क्षत्वात्कस्यापि सम्बन्धिन्या इति-कर्तव्यतया भवितव्यम्। यथा विश्वजित्किमंशसाकाङ्क्षत्वात् फलमनुवक्ष्यते, एवमिहापि। इदं सूत्रमुत्तरविवक्षार्थम्। न्याया-देवैतद् ज्ञायते भवितव्यमिति।

इदं तु चिन्त्यम्। किमसौ लौकिकी वैदिकी चेति। अपि च न्यायपूर्वत्वात्कथमत्र प्रयाजाश्च कृष्णलहोमश्च शक्यः कर्तुमित्ययुगपच्छक्या अभिधातुम्। भिद्यते हि तथा वाक्यम्। एवं तर्हि न प्रयाजार्थं वक्ष्यति। प्रयाजेषु कृष्णलहोमं विधा-स्यति। न चासत्सु प्रयाजेषु कृष्णलहोमः शक्यः कर्तुमित्यर्थात्प्र-याजान्करिष्यतीत्युक्तमिदम्। विशिष्टविधाने न भवति वीप्सा। यथा ग्रामो रमणीय इति नानवगते ग्रामार्थे वीप्सा, एवमिहाप्यनवगतोऽत्र प्रयाजार्थः, विधेयत्वात्। त-स्मादन्यथा सूत्रं वर्ण्यते। प्रयाजे प्रयाजे कृष्णलं जुहोतीत्यु-पपद्यत एव। गुणविधिः वीप्सा लिङ्गस्य कथंभावाकाङ्क्षायां. यत्रेतिकर्तव्यता नाम्नायते तत्र कथंभावस्याव्यावृत्तत्वा-च्चोदनासदृशं वाक्यं बुद्धावुपस्थापयति। तद्वाक्यमवबोधितं वाक्यार्थमवबोधयति। स च वाक्यार्थः फलकरणेतिकर्त्तव्य-तायुक्तस्तत्र फलकरणेनाकाङ्क्षितत्वान्न सम्बध्यते। इतिकर्त्त-व्यता त्वपेक्षितत्वात्सम्बध्यते। उपमितलक्षितप्रापणेन सादृश्यं च वैदिकेनैव भवति; न लौकिकेनेति।

द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिका-

माज्तदाख्यं स्यादेकाहवत् ॥ १३ ॥

चोदकनामधेययोर्बलाबलं चिन्त्यते । तत्र चोदको बलवान्नामधेयात् । कुतः फले विधीमान इतिकर्तव्यतामाकाङ्क्षति । गणश्च फले विधीयते । अतो गणत्वसामान्याद्द्वादशाहिको विध्यन्तः । अथ वा चोदकेभ्यो यदधिकं ज्योतिष्टोमाद्धर्मजातमाम्नायते तदपेक्षा गौरायुरित्येवमाद्याः संज्ञाः प्रकर्तव्याः । इहाऽपि नामधेयं श्रूयमाणं नास्ति । शिष्टान्धर्मानतिदिशति । अथ वा तत्राधिकधर्मागमान्नामधेयं भविष्यति । अस्मिन् पक्षे नामधेयं नातिदेशकम् ।

न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥

उत्पद्यमानमेव कर्माकाङ्क्षात्रितयसम्बद्धमुत्पद्यते । तत्राऽस्मिन् वाक्ये नामधेयं श्रूयमाणं लक्षणया शक्नोतीतिकर्तव्यतामवगमयितुमात्मीयाम् । चोदकस्तूपमितलक्षितप्रापणेनावगमयति । तत्र न किञ्चित् प्रत्यक्षम् । यागसामानाधिकरण्याच्च । यागनामधेयमिदं न धर्माणाम् । यदप्यधिकसामान्यादिति, तन्न किञ्चित् । क्रतुलक्षणा दोषः ।

प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥

गवामयने द्वादशाहिकं प्रथममहरित्येवमादिर्मुख्यं वाऽपूर्वचोदनाल्लोकवदित्येवमन्तो युक्तो ग्रन्थः । प्रायणीयशब्दो योगिकत्वान्नातिदेशक इति । तस्मात्कुतो ऽत्र द्वादशोपसत्त्वाप्राप्तिः ? अतः प्रायणीयातिरात्रयोरुभयोरपि ज्योतिर्विध्यन्त इति । भूयसां स्यात्स्वधर्ममिति नेदं पूर्वपक्षसूत्रम् । किं त-

हि ? यत्र बहूनामल्पानां च धर्मविरोधस्तत्र भूयोऽनुग्रहः । यत्र तुल्यसङ्ख्यानि तत्र मुख्यं वा ऽपूर्वचोदनाल्लोकवदिति । न न्यूनसङ्ख्यत्वेन कारणमेव भूयांसि समर्थं बाधितुम् । तस्मादन्यथा ऽवर्ण्यत । भूयसामत्र द्वादशाहिको विध्यन्तः, अल्पानामैकाहिकम् । तत्र भूयसामनुग्रह इत्यधिकप्रवृत्त्या लिङ्गदर्शनं सिद्धम् ।

इति सप्तमाध्यायस्य चतुर्थः पादः ।

समाप्तश्च सप्तमो ऽध्यायः ।



# अथाष्टमो ऽध्यायः ।

अथ विशेषलक्षणम् ॥ १ ॥

किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेश इति । एकस्मिन् कर्मणि ये धर्माः समाम्नायन्ते ते सर्वकर्मस्वतिदिश्यन्ते, उताहो नैकस्मात्सर्वकर्मस्वतिदेशः ? एतस्मिन् ग्रन्थार्थे न्यायो न विरुद्धयते । परस्तु ग्रन्थो न सम्बध्यत इतरेण । यद्येकस्यां विकृतौ सर्वधर्मातिदेश इत्ययं पक्ष आश्रितः स्यात्तदेदमुत्तरं युज्यते । एकेन विध्यन्तेन निराकाङ्क्षीकृते द्वितीयस्य प्राप्तिर्नास्ति । अथैकस्मिन् कर्मणि सर्वधर्मातिदेश उताहो नैकस्मादिति । सर्वकर्मधर्मातिदेश इत्ययं पक्षो निराकृतः । अथ कस्मादुभे इतिकर्तव्यते न प्रवर्तेते ? मिथोविप्रतिषेधादिति सूत्रेण निराकृतो ऽयं पक्षः । एकया निराकाङ्क्षीकृते द्वितीया न प्रवर्तते । प्रमाणाभावात् । तस्मात्सर्वधर्मातिदेश इति निर्मूलो ऽयं पक्षः । ईदृशः संशयो युक्तः—किमनियमेन यस्य कस्य चित्सकाशादितिकर्तव्यता प्रवर्तते, उतास्ति कश्चिन्नियम इति । तत्रानियम इति पूर्वः पक्षः । उत्तरस्तु नियमेनैव । अथ विशेषलक्षणमित्येतस्मान्नियमेन प्रवर्तत इत्यर्थः । विशेष इत्यसाधारण्यमुच्यते । यदि वा नियमेन ततो ऽसाधारण्यं न स्यात् । असाधारण्याभावाच्च विशेषो न स्यात् ।

अथ वा ऽन्यः सूत्रार्थः । विशेषाद्विशेषस्य धर्माः प्रवर्त-

न्ते । कतरस्मात्कतरस्येत्यत आह—यस्य लिङ्गमर्थसंयोगादि- ति । संशयस्तु नैव कार्यो ऽस्मिन् पक्षे ।

यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगो ऽनुभूतपूर्वः । संयोगिनोश्चान्यतरो दृश्यमान इतरमनुमानाद्बुद्धौ सन्निधापयतीत्ययुक्तो ऽयं ग्रन्थः । यथा ऽग्निधूमयोः सम्बन्धे ऽवगते धूमो दृश्यमानो ऽग्निमनुमापयत्येवं निर्वापादयो न शक्नुवन्त्यनुमापयितुम् । न चामीषां प्रयाजादीनां च सम्बन्धो ऽस्ति । प्रधानेनैव सहामीषां सम्बन्धः । परस्परसम्बन्धो नास्ति तेषां प्रमाणम् । यत्र निर्वापादयो न श्रूयेरन् तत्राग्न्यन्वाधानादीनामवबोधो न स्यात् । यथा धूमाभावे ऽग्न्यवबोधाभावः, एवमिहापि ।

अथोच्येत, कर्मास्माभिरितिकर्तव्यायुक्तं फलसाधनं दृष्टम् । इदमपि कर्म । तस्यापीतिकर्त्तव्यतया भवितव्यम् । उच्यते । अनुमानादितिकर्त्तव्यतासद्भाव उक्तः । स चाग्नेयात् प्रवर्तते इति नैतद्विषयमनुमानम् । अथोच्यते येनैकदेवत्यस्य फलं साधयतो ऽग्न्यन्वाधानादि दृष्टमयमपि चैकदेवत्यत्वादस्य भवितव्यमग्न्यन्वाधानादिभिरिति । तत्र देवदत्तस्य प्रयोजनं साधयतस्त एव प्राप्नुवतः त्वदीयेन । किञ्च फलवतो ऽङ्गं प्रयाजा दृष्टा अग्निहोत्रस्याऽपि फलवत्त्वात्तस्य स्युः । तस्मादनुमाने-

१ अत्र मध्ये—एवं सति दर्वीहोमानामपीतिकर्तव्यता । अथोच्येत, यदेकदेवतं सत्फलसाधनं पुरोडाशद्रव्यकं वा तदितिकर्तव्यतया युक्तं दृष्टम् । इहाप्येकदेवतत्वात्पुरोडाशद्रव्यकत्वाच्चेतिकर्तव्यतया भवितव्यम—इति पुस्तकान्तरे ऽधिकः पाठः ।

नेतिकर्त्तव्यतायां बहुसमञ्जसम् । अत उपमानेन धर्मप्राप्तिः। यजेतेत्युक्ते किं, केन, कथमित्याकाङ्क्षात्रयं भवति । तत्र किं, केनेति फलकरणाभ्यां निराकाङ्क्षीकृते कथमित्यव्यावृत्तायामाकाङ्क्षायां संनिधाने ऽनाम्नानादितिकर्तव्यतायास्तुल्यं वाक्यं बुद्धौ सन्निधीयते । तत्सन्निधापितमात्मीयमर्थं सन्निधापयति। अर्थद्वारेणाऽन्यन्वाधानेतिकर्तव्यता ऽनुषज्यते । एवं चेद्यत्र सादृश्यं तत्र धर्माः प्राप्यन्ते। असति सादृश्ये नास्ति धर्मप्राप्तिः।

ननु चैवमाकाङ्क्षायामुत्पन्नायामितिकर्त्तव्यता सन्निधाने नास्ति। तस्माद्भ्रान्तिराकाङ्क्षेति तदा ऽसौ भ्रान्तो भवति। प्रकृतावप्याकाङ्क्षासद्भावे इतिकर्तव्यतासम्बन्धः । एवं चेत्प्रकृतिविकृत्योर्न कश्चिद्विशेषः।

कृत्स्नविधानाद्वा ऽपूर्वत्वम् ॥ ५ ॥

अत्र सूत्रं भाष्यं चोभयमप्ययुक्तम्। न ज्ञायते कियत्येतिकर्त्तव्यतया निराकाङ्क्षीकृता भवतीति । अथोच्यते, सन्निधाने एको द्वौ बहवो वा पदार्थाः समाम्नायन्ते तावत्या निराकाङ्क्षीभवति। एवं सत्युपहोमादिति निराकाङ्क्षीकृतत्वादतिदेशो न प्राप्नोति । तत्रैवं वर्णयन्ति—उपहोमाः प्रयाजानुयाजमध्ये श्रुतास्तत्सम्बद्धपदव्यवाये ऽपि कथंभावनियन्त्रिता एव गृह्यन्ते। एवं वर्ण्यमाने यत्रापूर्वमङ्गं प्राकृतेनासंबद्धं श्रूयते तत्र तेनैव निराकाङ्क्षीभवति। कृत्स्नविधानताकृतत्वादतिदेशो न प्राप्नोति। न चेष्यते। तस्मादन्यथा वर्ण्यते। कथमित्याकाङ्क्षायां यत्र सन्निधावाम्नानं निराकाङ्क्षीकरणक्षमं तत्र तेनैव निराकाङ्क्षत्वाद्भवति कृत्स्नविधानता। इह च सन्निपत्योपकारकाः सर्वे आम्नायमाना निराकाङ्क्षीकरणसमर्थाः। उपहोमादिषु सन्निपत्योपकारकाभावात्कृत्स्नविधानता नास्ति। तस्मात्तत्राकाङ्क्षा सन्निवर्तते । अथ वा

साहश्येन विध्यन्तो नियम्यते । न च सोमस्य दर्शपूर्णमासाभ्यां सादृश्यमव्यक्तचोदनत्वात् । अनुत्पत्तिवाक्ये सोमेन यजेतेत्यव्यक्तचोदनः । प्रयोगवाक्ये तु देवतानां विद्यमानत्वाद्व्यक्तचोदनः ।

उच्यते । ग्रहणे देवताश्रवणं न यागे । प्रसङ्गात्तु यागं निवर्तयति; न तु तासामङ्गं प्रति तादर्थ्ये प्रमाणमस्ति । कथं ? क्रत्वर्थाद् ग्रहणेन देवताः संयुक्तास्ता यागमभिलषन्ति । यागो ऽपि देवताभिलाषी । तयोः सम्बन्धो ऽर्थाद्भविष्यति । यागो ऽपि द्रव्यं गृह्णन् तदाश्रितां देवतां गृह्णाति । यथा प्रणयनं क्रत्वर्थमात्मनिवर्त्तकं साधनमपेक्षमाणं गोदोहने पुरुषार्थं गृह्णाति गोदोहनमपि पुरुषार्थं सदाश्रयमपेक्षमाणं प्रणयनं प्रसक्तं गृह्णाति । यथा तत्सम्बन्धः एवमिहापि । तस्मात्तादर्थ्या देवताभावः । एवं चेदव्यक्तचोदनः । अत आह सूत्रकारः— अव्यक्तासु तु सोमस्येति ।

ननूपांशुयाजस्योत्पत्तिवाक्ये देवताभावादव्यक्तता । उच्यते । मन्त्रवर्णात्तत्र देवतायास्तादर्थ्याद्व्यक्तचोदनः । अतः सादृश्याभावादपूर्वे कृत्स्नविधानादिति यदाम्नायते धर्मजातं तेन निराकाङ्क्षत्वादर्थप्राप्तं न गृह्णाति ।

कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥

सौर्ये करणस्य प्रत्यक्षत्वात् करणान्तरस्याऽप्रवृत्तिः । आनुमानिकत्वादितिकर्तव्यताकाङ्क्षायामितिकर्तव्यता ऽतिदिश्यते । न च फलमितिकर्तव्यता यावज्जीविको नियमः कर्तृध-

र्मस्तु पुरुषार्थत्वान्नातिदिश्यते । फलेन व्याप्यमानो यः कर्ता स नाऽतिदिश्यते । तेनांशेनान्यत्र प्रधानत्वात्क्रत्वर्थः । यः पुनर्यजेतेत्यत्र कर्ता स क्रतुं निर्वर्तयतीति क्रत्वर्थः, सो ऽतिदेशमाप्नोति । किन्तु यत्र बहवः कर्तारः श्रूयन्ते तत्र तावदानुमानिको नातिदिश्यते । यद्येकसङ्ख्यास्तत्राप्यनुवादो ऽतिदेशः । तस्मादर्थालाभात्कर्तुरनतिदेशो गुणभूतस्यापि । समुदायः करणपरिच्छेदेनोपकृतवान् । स इह परिच्छेद्याभावान्नातिदेश्यः । समुदायं च गृह्णता ऽऽग्नेयादयः कार्याः । ते तु क्रियमाणाः स्वर्गं साधयेयुः । तथा सति यथाश्रुतफलव्याघातः । अथोच्येत समुदायं गृह्णन्नान्तरीयकतया ऽऽग्नेयादीन्करिष्यति न फलसाधनत्वेन । उच्यते । समुदाय एषां गुणभूतः । न च गुण आकृष्यमाणो गुणिनमाकर्षति । अतादर्थ्यात् ।

निवृत्तिर्वा कर्मभेदात् ॥ २४ ॥

यत्क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता ।

अपि वा ऽतद्विकारत्वात् क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥

गोदोहनादि पुरुषार्थत्वाच्चमसं विकृत्य निविशते । खदिरस्तु क्रत्वर्थत्वान्न कञ्चिद्विकरोति । एवं चेत्खदिरः प्रवर्तत एव । तस्मिन्प्रवर्तमाने तदाश्रितः कामो ऽपि प्रवर्तत इत्येतदयुक्तम् । यत्क्रत्वर्थं तदतिदिश्यते । वीर्यकामो यदि खदिरार्थः ततः खदिरे प्रवर्तमाने तदाश्रितत्वात्प्रवर्तते । स च विपरीतः खदिरस्तदर्थः । खदिरः पुरुषार्थत्वान्न प्रवर्तत इति चेत् ? उच्यते । येन रूपेण क्रत्वर्थस्तेन प्रवृत्तिरिष्यते न द्वितीयेन ।

एककर्मणि विकल्पो ऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

सौर्यं आग्नेयादुपमितलक्षितप्रापणेनेतिकर्तव्यतां गृह्णाति। आग्नेयस्य च पौर्णमास्याममावास्यायां च विद्यमानत्वात् अशक्यमवधारयितुम्। किं पौर्णमास्येतिकर्तव्यता प्रवर्तते उताऽमावास्या? तस्मादगृह्यमाणविशेषणत्वाद्विकल्पः। आसन्नानि हवींष्यभिमृशतीति हविरभिमर्शने मन्त्रस्य करणत्वाद्विकल्पः प्राप्तः। यद्यपि कालकृता व्यवस्था हविरन्तरवशेन प्रकृतौ जाता तथा ऽपि विकृतावशक्या व्यवस्था कर्तुम्। नैतद् ज्ञायते सौर्ये कतरस्याग्नेयस्य धर्मः प्रवर्तत इति। तस्मादाग्नेयाविशेषाद्विकल्पः। प्रथमे पादान्ते।

मधूदके द्रवसामान्यात्पयोविकारः स्यात् ॥ ४० ॥

तदिति सर्वनाम्ना एकवचनान्तेन यत्परामृश्यते तद्देवतासम्बन्धीन्यवघातादीनि परामृश्यन्ते। यदि च परामृश्येरँस्तानीति बहुवचनं स्यात्। यदि वा तत्तदिति वाक्यत्रयान्निर्देशः। तस्मान्नाधानादीनां परामर्शः। यदि वा एतानि परामृश्य देवतायां सम्बध्येरन् प्राजापत्यानीति बहुवचनमभविष्यत्। अतः सर्वनामैकवचनान्तेन संसृष्टमिति संसृज्य परामृश्य देवतासम्बन्धः। तत्रैवं वर्णयन्ति—सर्वनामनिर्दिष्टस्य प्रतिनिर्देशकम्। द्रव्याणि च निर्दिष्टानि। संसर्गःनिर्दिष्टेन बहुवचनाभावः कथं? प्रातिपदिकविरोधादविवक्षितं पाशवत्। अथ वा गुणत्वाद्यद्यत्परामृशति तदीयं लिङ्गं सङ्ख्यां च भजते। तस्य चैकैकस्य परामर्शादेकवचनमविरुद्धम्। सत्यामपि वीप्सायां वीप्सा कार्य्ये वर्तते। संसृष्टमित्येकप्रधानत्वादनूद्यते। प्राजापत्यमित्येकदेवताभिप्रायेणैकवचनम्।

इदमपि न शोभनं सन्निहितस्य प्रातिपदिकार्थस्य वाचकम्। अतो यत्र नपुंसकलिङ्गं विद्यते तदनेन परामृष्टव्यम्। प्रधानानां तण्डुलानां नपुंसकपरामर्शनिर्देशः अतो न तेन प-

रामर्शः । अयं च न्यायो ऽन्यत्राप्यभिहितः । लिङ्गविशेषनिर्देशात्समानेषु प्राप्ता सारस्वती स्त्रीत्वादिति पुल्लिङ्गं न मेष्या सम्बध्यते स्त्रीत्वात् । एवमिहापि संसृष्टशब्देन नपुंसकलिङ्गेनास्य सम्बन्धः । तस्य चैकत्वादेकदेवतासम्बन्धे एकवचनं न विरुध्यते । अत एको यागः । मधूदके द्रवसामान्यादिति विरोधे धर्माणां भूयस्त्वेन धर्मनियमं वक्ष्यति । तेन सिद्धेनेदमधिकरणमारभ्यते । किमाज्याद्धर्मप्राप्तिरुत साम्नायादिति ।

इत्यष्टमाध्यायस्य प्रथमः पादः ।

# अथ द्वितीयः पादः ।

अन्यतरतो ऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥

यत्रातिरात्रो ऽन्ते दृश्यन्ते सो ऽहीनः। अत्रान्ते ऽतिरात्रः। तस्मादहीनत्वम्। एवं चेदहीनो विध्यन्ते।

सत्रे वोपायिचोदनात् ॥ ३१ ॥

अध्येतारः सत्रमिदं स्मरन्ति। न चेदम्वचनमस्ति यो-न्यतरतो ऽतिरात्रः सो ऽहीन इति। उपायलिङ्गेन च सत्रलिङ्गेन सत्रत्वम्।

इत्यष्टमाध्यायस्य द्वितीयः पादः।

# अथ तृतीयः पादः ।

नानाहानि वा सङ्ख्यातत्वात्प्रवृत्तिलिङ्गेन चोदनात् ॥४॥

सन्ति तत्र चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि तान्यनूद्य त्रिवृत्त्वं विधातुं शक्यते इत्येतदयुक्तम् । जनकसप्तरात्रेण यजेतेति प्रयोगचोदनेयम् । प्रयोगश्चोत्पत्तिर्न युज्यते । अहःशब्दो योगविशेषवचनोऽश्रुतमपि विशेष्यमनुमापयति । नेदं विशेषणं यागमन्तरेण सम्भवति यथा वज्रपातीन्द्रमनुमापयति । बहुवचनादनियतबहुत्वे चत्वारीति नियम्यते । तेषां त्रिवृत्त्वमग्निष्टोममुखत्वं च विधीयते । ननु चत्वारि त्रिवृत्स्यहानि भवन्ति । अत उत्पन्नानि जनकसप्तरात्रेण यजेतेति फले विधीयन्ते । पूर्वपक्षे त्रिवृत्त्वेन लिङ्गेन प्रथमस्याऽह्नो विधातुः चतुर्ष्वपि सिद्धान्ते यागानां गुणाः सङ्ख्यातः । ततो येन गुणेन नानाह्ना यो धर्मः सो ऽतिदिश्यते । सङ्ख्यातसामान्याच्चित्वं पुनरङ्गावस्थितं तद्बहिरङ्गत्वाद् दुर्बलम् । एवं वर्णितमधिकरणम् । यथा भाष्यकारेण वर्णितं तथा बहवो दोषाःकथं चत्वारीत्यनूद्य त्रिवृत्त्वं विधीयते । न च सप्तरात्रे चत्वारि सन्त्यविधीयमानत्वात् चतुर्णां यान्यनूद्येरन् । अभ्युपेत्य ब्रूमः । सन्तु वा चत्वारि तत्राग्निष्टोममुखानीति द्वितीयो गुणो विधेयः । तत्र वाक्यं भिद्येतेति सिद्धम् ।

इत्यष्टमाध्यायस्य तृतीयः पादः ।

समाप्तश्चाष्टमो ऽध्यायः ।

# अथ नवमोऽध्यायः ।

यज्ञकर्म प्रधानं, तद्धि चोदनाभूतं, तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

ननु दशमानन्तरमूहश्चिन्तयितुं युक्तः । कुतः? उपकारातिदेशे सत्यूहो ऽवकल्पते । शास्त्रातिदेशे सत्यूहाभावः । यथा प्रकृतावग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि गृहीत्वा कथमेतान्युपकरिष्यन्तीति । तत्र कानि चिदारादुपकारकाणि कानि चित्सन्निपत्योपकारकाणि । एवं शास्त्रातिदिशे सौर्ये पेषणं प्राप्तम् । तद्यद्यपि प्रकृतौ दृष्टार्थं तथा ऽपि शास्त्रस्यातिदिष्टत्वाददृष्ट उपकारः कल्पनीयः । पेषणस्य प्रयाजादीनामिव । एवमेवाग्नये जुष्टं निर्वपामीति । तस्मादष्टमानन्तरं दशमश्चिन्तनीयः । बोधकार्थापत्त्यर्थलोपादिभिः स्थिते ततो नवमव्यापारो युक्तः । सत्यम् । किन्तु सप्तमे ऽतिदेशसद्भाव उक्तः । आग्नेयात्सौर्य इतिकर्तव्यता भवतीत्यष्टमे विशेषातिदेशः । नवमे सौर्य इतिकर्तव्यतायां प्राप्तायां किमविकृतः प्रयोक्तव्य उत विकारो ऽपीत्यनेन प्रसङ्गेन नवमो दशमव्यापारमनुमन्यमान एवोत्तिष्ठति । विधेः प्रकरणान्तरमिति सूत्रं नवमाक्षेपेणैवाऽऽरभ्यते । तस्मान्नवमदशमयोरपि वा ऽभिधानसंस्कारद्रव्यमित्यनेन सद्भावः । तेनाष्टमानन्तरं नवम आरभ्यते ।

त्रिविधश्चोह इत्येतदयुक्तम् । कथम्? ऊहो नाम वितर्कणा । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणा सैव सा, न तस्याः

कश्चिद्विशेषः। सामग्रहणाऽऽनर्थक्यं च। मन्त्रग्रहणेन संस्कारग्रहणेन चोपात्तत्वात्। अत्र वर्णयन्ति। नैव वयमूहभेदं प्रतिजानीमः। किन्तु विषयमस्य निरूपयामः। एषु त्रिषु वक्ष्यमाणेषु सम्भवतीति। तस्माद्विषयभेदः प्रदर्श्यते; न तूहभेदः। यजिसामान्ये यजतिशब्दवाच्ये विधीयमानाः सर्वत्र भवितुमर्हन्तीति को ऽभिप्रायः? करणानुग्राहिणीतिकर्तव्यता। तेन चापेक्षिता। तस्मात्करणमुद्दिश्य तत्रेतिकर्तव्यता विधीयते। उद्दिश्यमानस्य च विशेषणमविवक्षितम् तस्माद्यागमात्रविधानं वाक्येन।

अत्र चोद्यते। यागः फले विधीयमानत्वादुपादेय इतिकर्तव्यतां प्रति वोद्दिश्यमानः। सकृदुच्चारिते चोपादीयमानोद्दिश्यमानत्वे न सम्भवतः विवक्षाभेदात्। तस्माद्वाक्येनेतिकर्तव्यतासम्बन्धो न घटते।

उच्यते। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेतीदं यागोत्पत्तिं न विदधाति। यदाग्नेयो ऽष्टाकपालो भवतीत्येवमादिभिर्यागोत्पत्तेर्विधीयमानत्वात्। फलसम्बन्धमपि करोति। उत्पत्तिवाक्येन कृतत्वात्। विश्वजिन्न्यायेन परिशेषादितिकर्तव्यतासम्बन्धार्थं यथा ऽध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीति न दीक्षा विधीयते, नासौ यजमानस्य। न वा ऽध्वर्युः कर्ता सर्वस्य, चोदकेन प्राप्तत्वात्। किं तर्हि? दीक्षाक्रमो ऽनियमेन प्राप्तः सन्नियम्यते। एवमन्यत्राऽपि यागमनूद्य धर्मा विधीयन्ते। उद्दिश्यमानस्य विशेषणमविवक्षितम्। तस्माद्यागमात्रे धर्मप्राप्तिरित्यभिप्रायः। अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति। तस्मात्तत्रोहः सिद्धो भवतीति। को

ऽभिप्रायः ? भाव्यमानेन करणेतिकर्तव्यते आकाङ्क्षते। न च याग इतिकर्त्तव्यतया विना न सिध्यतीति निर्ज्ञातोपायत्वाद्यागस्य लोके तेन विशिष्टो भाव्यो विशिष्टेन करणेन भाव्यते इति न धर्माणां करणेन सम्बन्धः। प्ररुणाधिकरणन्यायेन तु करणेतिकर्तव्यतयोः सम्बन्धः। तस्माद्ये दर्शपूर्णमासप्रकरणे परिगृहीता धर्मा न ते ऽन्यत्र सन्ति प्रमाणाभावात्। तत्र विकृतौ भाव्यं ब्रह्मवर्चसं तस्य तत्प्रत्यक्षं वाक्यविहितं करणं भाव्यमानं धर्मानाकाङ्क्षति करणानुग्रहद्वारेण। न च सन्निधाने धर्माः सन्ति। तस्माच्चोदनासामान्यादाग्नेयधर्माः सौर्ये ऽतिदिश्यन्ते। साकाङ्क्षत्वाद्वाक्यस्य। तत्र चैषा वचनव्यक्तिः। यथा ऽऽग्नेय उपकृतं तथा सौर्ये ऽप्युपकर्तव्यम्। आग्नेये च मन्त्रेण भाव्यमानस्य देवता प्रकाशिता। इहाऽपि तथैव प्रकाशयितव्या। न चोहादृते शक्यते प्रकाशयितुम्। तस्मादूहः कर्तव्य इत्ययमभिप्रायः। न चैतत्सप्तमे गत उच्यते। यज्ञकर्मप्रधानमित्यनेनावयवेनापूर्वार्थान्प्रयुङ्क्ते धर्मान्। अथ वा परार्थान्भिन्ने जुहोतीतिवत्। यथा भेदनस्य प्रयोजकत्वे सत्यपि न भेदनार्थो होमः; किं तु क्रत्वर्थ, एवमिहाप्यपूर्वं तु प्रयोजकं यागार्थाश्च धर्माः। एतेनापि प्रकारेण सप्तमे प्रतिप्रकरणं नियताधर्मा इत्यूहस्त्वपूर्वार्थतामन्तरेण न सिध्यति।

अत्र चोद्यते। ये दर्शपूर्णमासार्था धर्मास्ते सौर्ये न सन्ति। तस्मात्तत्राप्रवृत्तिरेव धर्माणां प्राप्नोति।

उच्यते। वैकृतस्य वाक्यस्य साकाङ्क्षत्वादतिदेशेन वा ऽनुषङ्गेण वा प्राकृतैरङ्गैः सम्बन्ध इति तस्मादपूर्वार्थता प्रतिपाद्योहसिद्ध्ये। अथ वा सप्तमे ऽपूर्वार्था धर्मा इति स्थितम्। तेषामपूर्वार्थता

प्रकरणेन । तच्च प्रकरणमसंयुक्तानां ग्राहकं ये श्रुतिलिङ्गवाक्यैः संयुक्तास्तान्न गृह्णाति संयुक्तत्वादेव । तस्मात्ते ऽपूर्वार्था न सम्भवन्ति । दर्शपूर्णमासाधिकारे च पाठात्संयुक्तानामपि प्रकरण एव निवेशः । अनेनाऽपि प्रकारेण सप्तमाष्टमयोर्न किंचिदनुपपन्नम् । ऊहे तु यद्यपूर्वार्थं प्रोक्षणं भवति तथा सति नीवारेषु तन्न प्राप्नोति । तस्मात्सन्निपत्योपकारका ये धर्मास्तेऽप्यपूर्वार्था इति नवमे प्रतिपाद्यते ऊहसिद्धये ।

अथ वा ऽन्यामेव वा चिन्तां वर्तयिष्यामः । अपूर्वार्था धर्मा इति स्थिते सप्तमे, नवमे निमित्तं परीक्ष्यते । किमपूर्वं निमित्तमुत याग इति । न चानिमित्ता प्रवृत्तिर्येन विचार एव न स्यात् । तत्र भाव्यमानत्वाद्दर्शपूर्णमासापूर्वं निमित्तं न भवति । अनेनैव कारणेन फलमपि न निमित्तम् । परिशेषाद्यागो निमित्तं निष्पन्नरूपत्वात् ।

ननु यागस्य फले ऽनुपादीयमानत्वान्निमित्तवेलायां चोदिश्यमानत्वाद्विवक्षाभेदः स्यात् ।

उच्यते । दर्शपौर्णमासपदं निमित्तमकिञ्चित्करत्वात् प्रकृतयागाद्दर्शपूर्णमासपदाभावे ऽपि विधीयन्त एव तेन । यद्येतन्निमित्ततां न प्रतिपद्येताऽनर्थकमेव स्यात् ।

ननु सप्तम्यन्तं निमित्तं भवति । भिन्ने जुहोतीति तृतीयान्तं चेदम् ।

उच्यते । निमित्तफलहेतुषु सर्वासां प्रायदर्शनमिति द्रष्टव्यम् । अपि चोद्दिश्यमानत्वात्कारणविभक्तेरविवक्षैव । तस्माद्विकृतावपूर्वमस्ति दर्शपूर्णमासयोगो नास्ति । तदभावे धर्माणामप्यभावः । यथा भेदनाभावे होमाभावः । सौर्ये च साकाङ्क्षत्वादपूर्वस्यातिदेशेन वा ऽनुषङ्गबलात्प्रकृतैरङ्गैरङ्गवान् सौर्य-

यागः सिध्यत्यूहाभावस्तु ।

अत्रोच्यते—अयं दोषो ऽस्मिन्व्याख्याने । आज्यभागादीनामपि फलसंबन्धः स्यात्प्राकृतत्वादविशेषणात् । अपि च दर्शपूर्णमासशब्दो लोके कालवचनः प्रसिद्धो न यागवाचकः । सामानाधिकरण्याद्यागवचनो भवेत् । न चैकस्मिन्नुच्चारणे निमित्तं भविष्यति,सामानाधिकरण्यं च प्रतिपत्स्यते । तस्मान्निमित्तमिच्छतः कालवचनः सम्पद्यत इत्ययं दोषः ।

अथोच्येत याग एव निमित्तं तत्रोद्दिश्यमानत्वाद्यागमात्रस्यैवोद्देशः प्राप्नोति । तत्र प्रकृतौ विकृतौ च निमित्तमेकं यागसामान्यम् । अपूर्वं च सौर्ये विद्यते । तस्मादनेन व्याख्यानेन प्रकृतिविकृत्योः साधारणा धर्माः प्राप्नुवन्ति । तत्रातिदेशाभावः । तस्मादयमपि पक्षो दुःश्लिष्टः ।

अथ वा ऽपूर्वार्था धर्मा इति स्थितं सन्निपत्योपकारका आरादुपकारकाश्च प्रकरणेन प्रमाणेन । तत्र प्रकरणे ऽग्नये जुष्टं निर्वपामीति मन्त्र आम्नायते । आम्नानसामर्थ्याच्च तेनोपकर्त्तव्यं प्रकरणिनः । तत्र कथं खलूपकरिष्यतीति विशेषाकाङ्क्षा जायते । किमुच्चारणमात्रेणोत प्रकाशनद्वारेणेति । अपूर्वदेवताप्रकाशनमाकाङ्क्षितम् । शक्नोति चायं तत्कर्तुम् । तस्मात्प्रकाशनद्वारेणैवोपकरोतीति । तेनाग्निं प्रकाशयन्नुपकरिष्यतीति निमित्तेन चाऽस्य भवितव्यम् । तत्राग्निर्निमित्तस्य । सौर्ये चाग्निर्नास्ति । तत्र निमित्ताभावान्मन्त्रस्य निवृत्तिः । यथा भेदनाभावाद्धोमस्य निवृत्तिर्दर्शपूर्णमासयोः ।

संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥२॥

नन्वधस्तादपूर्वार्था धर्मा इति स्थिते हन्तिपिषिप्रयुक्तं प्रो-

क्षणमिति पक्षस्यानुत्थानमेव । सत्यम् । किं तु श्रुतिलिङ्गवाक्यैर्ये संयुक्तास्ते अपूर्वार्था न सम्भवन्तीति मन्यमानः पूर्वपक्षं करोति त्रिभिरधिकरणैः ।

अत्र चोद्यते । किमुलूखलमुसलप्रयुक्तं प्रोक्षणमुतापूर्वप्रयुक्तमिति संशयो युक्तो न तु हन्तिप्रयुक्तमिति । कथं ? प्रोक्षिताभ्यामिति अपूर्वादुक्षतेर्निष्ठाश्रवणात् । निष्ठा च कर्मण्युत्पद्यते । ईप्सितं च कर्म । तस्माद्यथा व्रीहीन्प्रोक्षतीति व्रीह्यर्थमेवमिहापि निष्ठाश्रवणादुलूखलमुसलार्थमेव प्रोक्षणम् ।

उच्यते । व्रीहीन्प्रोक्षतीत्यत्र व्रीह्यर्थं प्रोक्षणं भवति । प्रोक्षतीति भावना विद्यते । तस्याश्च भाव्येन भवितव्यम् । तत्र कश्चिद्विक्रियमाणतया भाव्यः, कश्चित्संस्कार्यत्वेन, कश्चित्प्राप्यत्वेन । व्रीहीन्प्रोक्षतीति द्वितीयासंयोगाद्व्रीहयो भाव्याः । केन ? प्रोक्षणेन । निष्ठान्ते पुनर्नास्ति भावना । तदभावाद्भाव्यमानस्याऽप्यभावः । सत्यपि कर्मत्वे प्रोक्षणमुलूखलमुसलार्थमिति केनोक्तं ? द्वितीयाचतुर्थ्यौ सत्यां भावनायामात्मार्थां क्रियां कुरुतः । तृतीयाद्याश्च भावनायामेव सत्यामात्मानं क्रियार्थमेव कुर्वन्ति । अथ वा द्वितीयोद्भूतं शक्तिकर्म प्रतिपादयति । निष्ठान्यभूतं कथं ज्ञायते ? आह—उलूखलमुसले अत्र कर्मभूते । ते च कारके कारकान्तरेणाऽत्र संयुज्यमाने दृश्येते—उलूखलमुसलाभ्यामिति । न च द्वितीयान्तं कारकं कारकमन्तरेण संयुज्यते । उद्भूतशक्तित्वात् । तस्माद्यदुद्भूतशक्तिकारकं तत्क्रियां वशीकरोति; न त्वनुद्भूतशक्तिः । अनुद्भूतशक्तित्वात् । अपि च य एवमुलूखलमुसलयोः प्रोक्षणस्य च सम्बन्धार्थं हन्तिरुच्चार्येत तत्रासन्नं वाक्यं स्यात् । तस्माद्धन्त्यर्थम् । अथ वा वाक्यान्तरेण करणतया प्राप्ते उलूखलमुसले,

अर्थप्राप्ते वा ते अनूद्योपमर्जनार्थो विधीयते ।

अत्र पूर्वः पक्षः । वाक्याद्व्रीहिप्रत्यर्थं प्रोक्षणं प्रकरणादपूर्वार्थम् । वाक्यं च प्रकरणाद्बलीयः ।

तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

अत्र केचिद्वर्णयन्ति । वाक्ये परिगृह्यमाणे आनर्थक्यं प्रोक्षणस्यापद्येत । तस्माद्वाक्यार्थो बाध्यते । तत्रासंयुक्तं पदान्तरेण प्रोक्षणमपूर्वेण सम्भन्त्स्यते । अपूर्वं चामूर्तमशक्यं प्रोक्षितुम् । अतो व्रीहिद्वारेणाऽपूर्वं प्रोक्ष्यते इति ।

एतदयुक्तम् । कथं ? प्रोक्षणमपूर्वेण गृह्यते । तच्च प्रयाजवदारादुपकारं प्राप्नोति । तत्र कथं ज्ञायमिदं संस्कारमिति ? अथोच्येत लोके संस्कारकं दृष्टमिति, तन्न । इह शब्दलक्षणः संस्कारो गृह्यते । न कश्चिच्छब्दः संस्कारकं प्रोक्षणमाह । प्रकरणाम्नानादारादुपकारकं गम्यते । अपि च लोके नैकान्ततः संस्कारकमेवेदं कदाचिदसंस्कारकमपि स्यात् । अपूर्वस्य सन्निकर्षाद्वा अवदाने । अथोच्यते व्रीहीणां श्रवणात्तेषां भविष्यति स वाक्यसम्बन्धो भवतैव निराकृतः । एवमवहन्त्यादिष्वप्येते दोषाः प्राप्नुवन्त्यनेन व्याख्यानेन । तस्माद्वाक्यमबाधित्वा यो ऽर्थः स ग्रहीतव्यः । वाक्ये चोच्चारिते द्वैविध्यं भवति । प्रकरणपाठात्तण्डुलनिर्वृत्तिप्रनाड्या शक्यमपूर्वं लक्षयितुम् । शक्यते च व्रीह्यर्थं प्रोक्षणं प्रतिपत्तुम् । तत्र लक्षितलक्षणायां गृह्यमाणायां फलकल्पना न भवति । श्रुतिवृत्ते फलकल्पना स्यात् । तस्मात्फलकल्पनाभयाल्लक्षितलक्षणया ऽपूर्वार्थं प्रोक्षणमिति सिद्धम् ।

एवं वा। संस्कारे दीक्षणीयाख्येयो धर्मो विहितः स परमापूर्वप्रयुक्तः। कुतः? परमापूर्वप्रयुक्तत्वाद्दीक्षणीयायाः। तस्माद्यस्तत्र धर्मो विहितः स प्रोक्षणवत्परमापूर्वप्रयुक्तो; न स्वरूपप्रयुक्तः। दीक्षणीयाद्यर्थेन यो धर्मः संयुक्तः स परमापूर्वार्थः। कुतः? दीक्षणीया ऽऽत्मीयमपूर्वं लक्षयति। तेन धर्माणां सम्बन्धः। अस्मिन्पक्षे लक्षणा। यदा तु दीक्षणीयापूर्वं परमापूर्वं लक्षयति तदा लक्षितलक्षणया धर्माणां सम्बन्धः। तस्माल्लक्षणां श्रुतिर्ब्रवीति लक्षितलक्षणापेक्षया।

अथ वा ऽङ्गं सम्बन्धादाङ्गनं शक्नोति लक्षयितुम्। तेनाङ्गिसम्बन्धे लक्षणा। अङ्गसम्बन्धे तु श्रुतिः। पूर्वपक्षे त्रैधातव्या दीक्षणीया भवतीत्याग्नावैष्णवकार्य्यापत्त्या तद्धर्मैर्युज्यते। यथा नीवाराः प्रोक्षणेन। सिद्धान्ते त्वाग्नावैष्णवापूर्वप्रयुक्ता धर्मास्त्रैधातव्यायां न भवन्ति। अपूर्वान्तरं हि तत्। न चापूर्वान्तरमपूर्वान्तरधर्मान्गृह्णाति। अनुपपन्नमिदं प्रयोजनम्। कथं? त्रैधातव्या दीक्षणीया भवतीति सामानाधिकरण्यम्। तत्र यदि मुख्यवृत्ते द्वे अपि पदे गृह्येयातां सामानाधिकरण्यं नोपपद्यते। तस्मादेकमत्र गौणं पदमन्यन्मुख्यम्। तत्र प्राथम्यादविरोधाच्च त्रैधातव्यं मुख्यम्। दीक्षणायाशब्दस्त्वात्मीयं क्रतूपकारं लक्षयति। तस्मिंल्लक्षिते त्रैधातव्या विधीयते। सा विधीयमाना तत्कार्य्यापन्नत्वात्तद्धर्माँल्लभते। तस्मादुभयोः पक्षयोस्तुल्या धर्मप्राप्तिरिति।

अथोच्येत—त्रैधातव्या दीक्षणीया भवतीत्यनेन त्रैधातव्याया यत्कार्य्यं तन्निवार्य्य दीक्षणीयाकार्य्यं प्रतिविधीयते। तच्च दीक्षणीयाकार्य्यमात्मीयैरेव धर्मैरात्मीयेन चापूर्वेण त्रैधातव्यां भावयिष्यति; न दीक्षणायाधर्मान्ग्राहयिष्यति सिद्धान्तवादिनः।

तन्न । पूर्वपक्षे ऽपि यदि दीक्षणीयाकार्ये त्रैधातव्या वर्तते तथा सत्यात्मीयैरेव धर्मैस्तत्कार्यं साधयिष्यति । अथ न वर्तते, सुतरामात्मीया धर्मास्तस्याः । अपि च परमापूर्वप्रयुक्तायामपि वाङ्नियमस्य प्रकृताग्नावैष्णवो विशिष्टं द्वारमभूत् । तच्चेह द्वारं नास्ति । तस्मान्नास्ति वाङ्नियमः ।

नन्वनेन न्यायेन नीवारेषु प्रोक्षणं न प्राप्नोति । उच्यते । सत्यं विशिष्टं द्वारं प्रोक्षस्य व्रीहय इति । इयांस्तु विशेषः—व्रीहयो दृष्टेनोपकुर्वन्ति, नीवाराश्च तत्कार्य्यं प्रत्यक्षं साधयन्तो दृश्यन्ते । तत्र कार्य्यापत्त्या धर्मप्राप्तिर्युक्ता । इह त्वदृष्टं द्वारं तस्य कार्ये वर्तत इति नास्ति प्रमाणम् । अथ वा दूरादिदं भ्रष्टं प्रयोजनमिति । कथं त्रैधातव्या यादृश्येवोत्पन्ना तादृश्येव चोद्यते ? त्रैधातव्याशब्देन सव विपरिवर्तते आख्याताभावात् । कर्मान्तरमपि न भवति । तस्माद्यादृशी तत्र विज्ञाता तादृश्येवाऽत्र कर्तव्या । यद्यपि च कर्मान्तरं स्यात्तथा ऽपि नाम्ना धर्मान्गृह्णीयान्न चोदकेनेति ।

फलदेवतयोश्च ॥ ४ ॥

दीक्षणीयापूर्वप्रयुक्तो वाङ्नियमो न परमापूर्वप्रयुक्त इति पूर्वाधिकरणापवादो ऽयम् । दक्षिणीयासिद्धान्तेनैव फलदेवतयोश्चेत्यत्र पूर्वपक्षः । अग्निस्वरूपप्रयुक्तो ऽयं मन्त्रः । स्वर्गप्रयुक्तलिङ्गेन ह्यत्र विनियोगः सामर्थ्यं च । लिङ्गस्वरूपे च मन्त्राणां सामर्थ्यं नापूर्वीयस्वरूपे । लक्षणा हि तथा स्यात् । न च प्रकरणवशेन लिङ्गबाधो युक्तः । तेन कामं वाक्यं प्रकरणेन बाध्यतां, लिङ्गं ततो बलवत्तरं न ततो बाधितुं युक्तम् । तेन यथा वाङ्नियमो ज्योतिष्टोमार्थदीक्षणीयार्थस्तथा मन्त्रो ऽपि ।

अथ वा ऽयं मन्त्रः स्वसामर्थ्येनाग्निप्रकाशकः। तत्र यो यो ऽग्निः स सामर्थ्याविशेषात्प्रकाशनीयः। एवं प्रकरणबाधं सामर्थ्येन मन्यमानः पूर्वपक्षमारभते। प्रोक्षणवत्तूत्तरम्।

देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात्॥ ६॥

अत्र यागो देवताराधनार्थ इति मन्यमानः पक्षं परिगृह्णाति। न भाव्यमानार्थो यागः। किं तर्हि? देवताराधनार्थः। कुतः? तद्धितशब्दादग्निर्देवतास्येति। तत्राग्निदेवताशब्दावस्यशब्दस्य विशेषणम्। अस्य शब्दश्च द्रव्याभिधायी, इतरौ तद्विशेषणम्। तद्द्रव्यं यद्यग्न्युद्देशेन दीयते, एवमग्निशब्दो ऽस्य विशेषणं भवति; नान्यथा। यदा च द्रव्यं प्रदीयते तदा ऽग्निः सम्प्रदानं भवति। संप्रदानं च कर्मणो ऽपि प्रधानतरम्। यजतिक्रियया द्रव्यमाप्यते, द्रव्येण च संप्रदानम्। तस्मादग्न्यर्थो यागः। यथोपाध्यायाय गां ददातीति। अपि च देवपूजायां यजिर्वर्तत इति स्मरन्ति। तस्माद्यजेत स्वर्गकाम इति यागेन देवतामाराधयेत्ततः स्वर्गो भविष्यतीति।

अपि वा शब्दपूर्वत्वाद्यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः॥ ९॥

यजेत स्वर्गकाम इति यजेतेत्यस्योत्तरार्धात्तिस्र आकाङ्क्षा जायन्ते। तत्र प्रथमं तावद्भाव्यमानमाकाङ्क्षति, भावयेत्किमिति। तत्फलपदेन निराकाङ्क्षीक्रियते। तद्भाव्यमानं केन भाव्यत इति द्वितीयामाकाङ्क्षां पूर्वार्धो निराकाङ्क्षीकरोति। कथमिति तृतीयामाकाङ्क्षामग्न्यन्वाधानादीनि निराकाङ्क्षीकुर्वन्ति। सन्निधानात्। तदेवमस्माद्वाक्याद्यागात्फलं श्रूयते; न देवतातः।

ननु देवता संप्रदानमित्युक्तम् । उच्यते । यागः फले चोदितो निर्वृत्तिमपेक्षते । सा च द्रव्यदेवतमन्तरेण न सम्भवतीत्यपेक्ष्यमाणं च द्रव्यदेवतं कारकांशेनैवापेक्ष्यते, न साध्यत्वेन । तत्र द्रव्यं तृतीयया कारकं भवति । देवता तद्धितेन चतुर्थ्या वा । तच्च देवताकारकं यागं प्रति प्राधान्यं यदि न प्रतिपद्येत, तथा सति यागो नैव निर्वर्तेत । यागनिर्वृत्त्यभावाच्च कारकमेव न स्यात् । यदि च यागस्तस्य गुणतां न प्रतिपद्येतात्मानमेव न लभेत । तस्माद्यागेन नान्तरीयको गुणभावः प्रतिपत्तव्यः । देवताकारकेणापि नान्तरीयकः प्रधानभावः । न च नान्तरीयको व्यापारो गुणभावे प्रधानभावे वा कारणम् । अचोदितत्वात् । यागेन हि फले चोदितः सन्नहं नान्यथा फलं साधयामीति । एवं नान्तरीयकव्यापारेण देवतां प्रति गुणभूतेन भवितव्यम् । तस्मात्सर्वत्रांशद्वयमस्ति । तत्र किं विवक्षितं किमविवक्षितमिति विज्ञेयम् । तत्र लोकेऽर्थकृता विवक्षा भवति । वेदे तु शब्दकृता । शब्देन च प्रत्यासन्नस्य यागस्य फलसाधनत्वात्प्राधान्यं, देवतायाश्च गुणत्वं विज्ञायते । न चोपकारलक्षणं शेषत्वम् । किं तर्हि ? चोदनालक्षणं तदिति स्थितम् । किं भवति प्रयोजनं चिन्तायाः ? यदि देवताऽऽराधनार्थो यागस्ततः पूज्यमाना देवता । यागश्च पूजा । पूजा च लौकिकः पदार्थः । तत्र येन प्रकारेणाग्निः पूज्यते तेनैव सूर्यः पूज्यत इति क आश्वासः ? विपरीतमपि कदाचित्स्यात् ।

अपि च सूर्य एकाकी सन्नग्निपूजया तृप्यति । देवतान्तरसहितस्त्वग्निरग्नीषोमपूजयेति नैतत्संभाव्यते । न हि देवदत्तोऽत्यन्तमधुरमधुपयःप्रभृतिभिः प्रीयमाणो यज्ञदत्तसाहचर्यात्सौवीरप्रियो भवति । सिद्धान्ते भाव्यमानेन धर्माः

सम्बध्यन्ते। तत्र सौर्ये भाव्यमाने नैव धर्मा आकाङ्क्ष्यन्ते। तत्र सादृश्याद्धर्मप्राप्तिर्भवति। अलौकिकत्वाद्धर्माणाम्। अथ वा यदा देवताराधनार्थो यागस्तदा यदुक्तं, द्रव्यदेवताविरोधे द्रव्यसामान्याद्विध्यन्त इति, तन्नोपपद्यते। देवताराधनार्थत्वाद्यागस्य देवतासामान्यमेव बलीयो विप्रकृष्टत्वाद्द्रव्यसामान्यस्येति।

द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् ॥११॥

प्रोक्षिताभ्यामिति वाक्याद्धन्यर्थं प्रोक्षणम्। स च वाक्यसंयोगः श्रौतांशेन निराकृतः। तथा लिङ्गसंयोगश्च श्रौतांशेन निराकृतः। पूर्वस्मिंश्चाधिकणे लिङ्गवाक्यसंयुक्ता नैवोदाहरणं निराकृतत्वात्। श्रुत्या तु येषां तादर्थ्यं तदिहोदाहरणम्। तान् श्रुत्या तदर्थान्मन्यमानः पूर्वपक्षं करोति। व्रीहीन्प्रोक्षतीति द्वितीयाश्रुत्या व्रीह्यर्थतां प्रोक्षणस्य प्रतिपादयति। अपूर्वसम्बन्धः प्रकरणात्स्यात्। श्रुतिश्च प्रकरणाद्बलीयसी। पौर्णमासीमित्यत्रापि समुदायार्थमभिमर्शनं श्रुत्यैव द्वितीया प्रतिपादयति। त्रीन्परिधीनिति द्वितीयाऽत्रापि श्रुत्यैव मन्त्रस्य सङ्ख्यार्थतामाह। तस्मात्त्रिसङ्ख्याप्रयुक्तो मन्त्रो नापूर्वप्रयुक्तः। शूर्पेण जुहोति, तेन ह्यन्नं क्रियत इत्यत्र शूर्पं तावदनुदाहरणं करणविभक्तिनिर्देशात्। यथा व्रीहिभिर्यजेतेत्यत्र करणेन जुहोतीत्येतदपि करणविभक्तिनिर्देशादेवानुदाहरणम्।

अथोच्येत हिशब्दयोगादन्नकरणमुदाहरणं स्यात्। तन्न। शूर्पस्य विधीयमानस्यान्नकरणत्वस्यार्थवादोऽयमित्युक्तम्। उच्यते। हिशब्दश्रुत्या हेतुत्वेनेहान्नकरणं, यस्मादनेनान्नं क्रियते तस्मादनेन होमः कर्तव्य इति, न स्तुतिर्लक्षणाप्रसङ्गा-

व। ननु प्रसिद्धसम्बन्धो हेतुर्भवति । न च होमान्नकरणयोः सम्बन्धो ऽवगतः प्रमाणान्तरेण, यथा कृतकत्वानित्यत्वयोः।

उच्यते। सत्यमेवं लोके हेतुः। वेदे तु हिशब्दश्रवणाद्वाक्यमनुमीयते। होमान्नकरणयोः सम्बन्धकर्तृ। तेनानुमितेन वाक्येन हेतुश्रवणमुपपत्स्यते । सति च हेतुश्रवणे ऽन्नकरणं संस्कार्य्यं, होमः संस्कारकः । यद्यदन्नकरणं तत्तद्धोमेन व्याप्यते। यथा यद्यत्कृतकं तत्तदनित्यत्वेन व्याप्यते। यथा च यत्र यत्र धूमस्तत्राग्निना व्याप्यते। तस्माद्धिशब्दश्रुत्या ऽन्नकरणार्थो होम इति मन्यमानः पूर्वपक्षं करोति । इहापूर्वार्थे होमे स्थिते प्रथमे ऽध्याये किमन्नकरणं विधीयते उतान्नकरणं स्तुतिरित्ययं विचारः।

अर्थो वा स्यात् प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥

यदि व्रीहिस्वरूपप्रयुक्तं प्रोक्षणं स्यात्तथा सति फलकल्पना स्यात् । न हि स्वरूपार्थत्वे परम्परया ऽपि प्रकृतापूर्वप्रयोजनत्वमग्निद्वारेणेवाऽऽधानस्य क्रतुप्रयोजनता सम्भवति । न च वाक्यस्य द्वात्रर्थौ। यदि वा तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वं लक्ष्यते तस्याऽयं धर्मः । अथ वा व्रीहिजातिलक्षितस्य द्रव्यस्य । अत्र ग्रन्थः व्रीहिजातिलक्षितं यत्साधनं किं तद्यतस्तण्डुला भवन्ति तत्प्रोक्षितव्यमिति। तण्डुलनिर्वृत्तिकरणं हि तत्र साधनत्वं न द्रव्यता। को ऽभिप्रायः? तण्डुलनिर्वृत्तिप्रणाड्या यत्साधनत्वं लक्षयति तदर्थं प्रोक्षणम्। यवेष्वपि तण्डुलनिर्वृत्तिरविशिष्टा । न चान्यद्द्रव्यं तण्डुलनिर्वृत्तिकरणांशेन शक्यते लक्षयितुम्। तस्मादन्येषु द्रव्येषु प्रोक्षणाभावः।

नाश्रुतित्वात् ॥ १७ ॥

न प्रकरणस्य विशेष्टुं सामर्थ्यमस्ति । कर्तव्यतया हि तत्क्रियमाणं चोद्यते न प्रसिद्धसम्बन्धमित्र परविशेणत्वेनेति कोऽभिप्रायः ? भावयेत्स्वर्गं, केन यागेन, कथमिति प्रकाराऽऽकाङ्क्षा भवति । स च प्रकारो निर्ज्ञातरूपत्वात्कर्तव्यः । यश्च निर्ज्ञातस्वरूप उच्चार्य्यते स परविशेषणं,यथा शुक्लः पट इति । इह यत्कथंभावाकाङ्क्षायामग्न्यान्वाधानाद्युपनिपतति तदस्य सम्बन्धित्वे कारणं नान्यस्य भवति, न चान्यस्य भवति ।

देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥

आद्यस्ये ऽधिकरणे समुदायप्रयुक्तमभिमर्शनमित्युक्तम् । समुदायप्रसङ्गेनान्यो यः समुदाय इव लक्ष्यते प्रहयज्यभ्याससमुदाय इति, तत्र विचार्यते । किं तत्प्रयुक्तमुपांशुत्वमुत तत्पदार्थप्रयुक्तमिति । अथ वा संस्कारोहो विचार्य्यते प्रकृतौ निर्णयाय । अग्नीषोमीयात्प्राग्भाविनां पदार्थानामुपांशुत्वं श्रुत्या भवति,न तु वाक्येनैष धर्मो विनियुक्तो, न च तृतीयाद्या विभक्तिरस्ति ।

उच्यते । सत्यं, किन्तु प्राक्शब्दो ऽवश्यं निराकाङ्क्षीकर्तव्यः । तत्र यदि सोमयागेन सम्बन्धः क्रियते प्रकरणाम्नानानुमितेन सम्बन्धः स्यात् । यद्यग्नीषोमीयेण सम्बध्यते, श्रुतेन सम्बध्यमानो ऽग्नीषोमीयाद्ये प्राग्भाविनः पदार्थास्तैस्सर्वैरगृह्यमाणविशेषत्वात्सम्बध्यते । तस्य च तत्र भावादिति सूत्रावयवेनाऽपूर्ववन्तो ये पदार्था इति ब्रवीति । तेषु यो धर्मो विधीयते नासावनेकार्थो यथा दीक्षणीयावाङ्नियमः पदार्थ-

---

१ प्रकृतौ विकृतौ निर्णयायेति पुस्तकान्तर पाठः ।

प्रयुक्त इत्युक्तमेवमिहापि श्रुतिनिर्देशादिति श्रुतेन वाक्येन सम्बन्धमभिप्रेत्य श्रुतिमाह। अथ वा पदार्थापूर्वेण सम्बध्यमानो लक्षणया, परमापूर्वेण तु लक्षितलक्षणया सम्बध्यते। प्रथमं पदार्थास्तैरपूर्वाणि तैः परमापूर्वमिति। एवं च लक्षितलक्षणामभिप्रेत्य लक्षणां श्रुतिमाह। अथ वा ऽग्नीषोमीयः पदार्थः। स चोच्चारितः प्राग्भाविनः पदार्थान्बुद्धावुपस्थापयति, न यज्ञभागम्। तमभिप्रेत्य श्रुतिमाह—यज्ञस्य वा न यज्ञशब्दः त्सराशब्देन सम्बध्यते। अप्रवृत्तिविशेषकरत्वात्। यस्मात्प्राचीनशब्देन सम्बध्यमानः प्रवृत्तिविशेषकरो भवति, तेन यज्ञस्य यः प्राग्भागस्तस्यायं धर्म उपांशुत्वं विधीयते। न च प्राचीनशब्दः पदार्थानां शक्नोति वदितुम्। श्रुत्या यागवचन एष प्रतीयते। अक्षरोच्चारणमात्रेणैव प्राग्भागमाह। इतरत्र लक्षणया पदार्थान्यदि लक्षयेत्। अत्र ग्रन्थः—अथाप्यर्थवादपदशेषो ऽयं यज्ञस्येति स्यात्तथा ऽपि प्राग्देशमात्रं श्रुत्या धर्मेण सम्बध्यत इति को ऽर्थः? प्राचीनशब्दमुद्दिश्योपांशुत्वं विधीयते। तत्र यद्यग्नीषोमीयशब्देन विशेष्येत प्राचीनशब्दः, ततो वाक्यं भिद्येत। तस्मान्न विशेष्यते। कस्य तर्हि प्राग्भागः? विपरिवृत्तेर्ज्योतिष्टोमस्येति।

प्रणीतादि तथेति चेत् ॥ २३ ॥

इति प्रत्यनुभाषणसूत्रम्।

न यज्ञस्याश्रुतित्वात् ॥ २४ ॥

इति परिहारसूत्रम्। अथ वा नासिद्धो दृष्टान्तो भवतीति दृष्टान्तसिद्धये ऽधिकरणं प्रक्रियते। प्रणीतादि तथेति चेदिति यथा यज्ञेन संयोगादित्युपांशुत्वं परमापूर्वप्रयुक्तमेव-

मिहाऽपि न पदार्थप्रयुक्तो वाङ्नियम इति । नन्विदानीमेवो-क्तं स्थितादुक्तमिति च एतस्माद्ग्रन्थादनुमीयते ऽधिकरणान्तरं न यज्ञस्येत्युत्तरपक्षे सूत्रं वर्णनीयम् ।

तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥ २५ ॥

अत्र ग्रन्थः । नैवमभिसम्बन्धः क्रियते यज्ञस्य यत्प्राचीनमिति । कथं तर्हि ? त्सरा वा एषा यज्ञस्येति । को ऽर्थः ? पदार्थप्रयुक्तो ऽपि वाङ्नियमो ऽर्थवान्भवति परमापूर्वप्रयुक्तो ऽपि । तत्र यदि पदार्थापूर्वप्रयुक्तो ऽनर्थको भवति तत्र व्यवहितकल्पना ऽध्याहारो वा ऽश्रुतो ऽपि कल्प्येत । इह तु यथाश्रुत एव वाक्ये घटमाने किमर्थं व्यवहितकल्पना ऽध्याहारो वा कल्प्यते ?

अपि च प्राचीनशब्दे यज्ञशब्देन विशेष्यमाणे ऽपि यद्यग्नीषोमीयपदमविवक्षितं, तथा सति साकाङ्क्षत्वाद्वाक्यमेव न घटते, कतरस्मात्पदार्थात्प्रागिति । तस्मादग्नीषोमीयशब्दो ऽवश्यं विवक्षणीयः । तस्माद् द्वयोरपि शब्दयोरग्नीषोमीयशब्दस्तन्त्रम् । तेन सुदूरमपि गत्वा प्राचीनशब्दस्याग्नीषोमीयसम्बन्धः । तेन सम्बन्धे कृते पदार्थधर्मो भवतीत्युक्तम् । यदि हि देशो ऽभिसम्बध्येत, यत्प्राचीनमग्नीषोमीयादिति भवेन्न यत्किं चिदिति को ऽर्थः ? यस्याऽयं धर्मः परमापूर्वप्रयुक्तस्तस्य प्राग्देशो नामैकं वस्तु । भवता किं स्विच्छब्दो ऽनुवादो वर्णनीयः उत्सृष्टव्यो वा । तत्रानुवादस्तावन्न घटते । वीप्सार्थे किं स्विदिति वर्तते । न चैकस्मिन्वस्तुनि वीप्सा सम्भवति । उपसर्गो ऽपि नैव गम्यमानत्वादस्मिन्नर्थस्य वाक्ये च शक्यते ऽयमर्थो विवक्षितुम् । तस्माद्वीप्सावाची सन्निवक्षितव्यः । पदा-

र्थधर्मे ऽभ्युपगम्यमाने बहुत्वात्पदार्थानां किंस्विच्छब्दस्यार्थो ऽनुगृहीतो भवति । नन्वयं न वीप्सावाची । उच्यते । किं-शब्दो ऽयमज्ञाते ज्ञातुमिष्टे वर्त्तते । देशश्च ज्ञातः । प्राचीनशब्द-श्रवणात् । तत्र किंशब्दो ऽनुपपन्नः । विशेषस्त्वज्ञातस्तेषूप-पद्यते । तस्माद्वीप्साफलो ऽस्मिन्वाक्ये वर्तते । दीक्षणीयाया याजुर्वैदिकत्वात् । साङ्गायामुपांशुत्वं प्राप्नोति तच्चोदकेन बा-ध्यते । प्राक् स्विष्टकृतः प्रथमस्थानेन मध्यमेनेडायाः शेषं तृतीयस्थानेनेत्येतत्स्वरवैचित्र्यं चोदकप्राप्तं तदग्नीषोमीयादि-ष्वुपांशुत्वेन बाध्यते । यावत्या वाचा कामयेतेत्यनेन दीक्षणी-याशब्दवाच्ये वाङ्नियमो विधीयते । स दक्षिणीयाशब्दः प्र-धानमात्रे वर्तते, नाङ्गेषु । तस्मादुपांशुत्वमङ्गेषु यावत्या वाचेति । ननु यत्किञ्चिच्छब्देन विशेषा उच्यन्ते । दीक्षणीयादिभिरपि विशेषा एव । तत्र द्वयोर्विशेषवाचिनोर्नास्ति बाध्यबाधकभावः । तस्माद्दीक्षणीयादिषु प्रधानेषु विकल्पः प्राप्नोति । उच्यते । दीक्षणीयादिभिर्वर्णोपात्तमेव प्रधानम् । यत्किञ्चिच्छब्दे न कश्चिद्वर्णोपात्तः । बाधे च वर्णोपात्तेनावर्णोपात्तो बाध्यते । उच्चैःप्रवर्ग्येणेति करणविभक्तिनिर्देशात् । साङ्गस्योच्चैस्त्वमु-पांशूपसत्स्वित्यौचित्येन नित्यानुवादो ऽयम् । यदेतत्प्रयोजनं व-र्णितं देशप्रयुक्तत्वे ऽस्योपांशुत्वस्य मासाग्निहोत्रादिषु प्रा-प्तिरिति । तन्न । तेषां नाम्ना ऽन्यस्वरः प्राप्नोति, चोदकेनो-पांशुत्वम् । चोदकाच्च नामधेयं बलवत् । तस्मादन्यप्रयोज-नमनामयुक्तं पुरस्तादुपसदा सौम्येन प्रचरन्त्यन्तरा त्वाष्ट्रेणोप-रिष्टाद्वैष्णवेनेति ।

अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत् ॥२६॥

प्रतीष्टकं प्रोक्षणादि कर्तव्यम् । कुतः ? व्यतिरिक्तस्या-

वयविनो ऽभावात् । यत्र व्यतिरिक्तो ऽवयव्यस्ति तत्रैकावयवाकर्षणेन कृत्स्नो ऽवयव्याकृष्यते । पूर्वपक्षवादिनः प्रोक्षणमेवानर्थकम् । अथावयवव्यतिरिक्तेष्टका ऽस्ति, ततो ऽग्निरपीष्यताम् । यदुक्तमेकेष्टकाकर्षणेन कृत्स्नः कृष्यत इति, तदुच्यते । यत्र यत्र द्रव्यान्तरबुद्धिर्भवति तत्र तत्र द्रव्यान्तरम् । न च द्वितीये कृष्यमाणे द्रव्यान्तरं द्रव्यान्तरस्य कारणं, यत्र द्रव्यान्तरबुद्धिर्न विपर्य्येति ।

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥

पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त इत्यविशेषश्रवणात्सर्वेषां पत्नीसंयाजान्तता । न तु गम्यते विशेषः । असंस्थितो हि तर्हि यज्ञ इति यत्रासंस्था तत्र पत्नीसंयाजान्तता, ऽन्ये चाहनि सन्तिष्ठते, तत्र पत्नीसंयाजान्तता न भवति । हेतुसामर्थ्यात् ।

नैतदेवम् । वचनात्सर्वेषां पत्नीसंयाजान्तता प्राप्यमाणा वचनान्तरेण विना कथं शक्या विशेषे ऽवस्थापयितुम् ? यदुक्तं हेतुसामर्थ्याद्यत्रासंस्था तत्र पत्नीसंयाजान्ततेति । उच्यते । हेतुवचनं पत्नीसंयाजस्तुत्यर्थं भविष्यति । चिरेण संस्थामालोच्य स्तुतिः ।

स्याद्वा ऽनारभ्यविधानादन्ते लिङ्गविरोधात् ॥ ३२ ॥

भावयेत्प्रयाजान् । केन ? द्वादशाहसंज्ञकेन । तत्र सङ्ख्यया कर्मभेद इत्यनेन न्यायेन द्वादशाहयागा एते । अहःशब्दो यागसामानाधिकरण्यात्कर्मेह ब्रवीति । प्रकृतौ चानेनाहःशब्देनोपांश्वादिहारियोजनपर्यन्तो यागः परिच्छिन्नः । इहाप्येवं द्रष्टव्यम् । तत्र द्वादश यागाः सह फलेन चोदितत्वात्सह कर्त्तव्याः । तेषा-

मग्नीषोमीया येतिकर्तव्यता सा गृह्यमाणविशेषत्वात्तन्त्रेण कर्तव्या। अवभृथादीन्यपि तन्त्रेणैव। ये सन्निपत्योपकारकास्त आवर्तन्ते। सहप्रयोगात्कस्मिंश्चिदनियमेनावस्थाने प्राप्ते पत्नीसंयाजान्तता नियम्यते। तत्रान्त्य उत्तरस्य यागस्याभावादवस्थानं नास्ति। अनियमेनाऽनियमस्याऽभावान्नियमो ऽपि नास्ति। न चैतद्वाक्यं क्वचिन्नियमपरं क्वचिदपूर्वविधिपरं विवक्षाभेदात्। अपि च यस्य नियमार्थं तस्य दृष्टो ऽर्थः। यस्यात्वलोपस्तस्यानाकाङ्क्षित्वाददृष्टो ऽर्थः। तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता नियम्यते।

इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया ॥ ३४ ॥

अपि वा ऽप्येकदेशे स्यादिति यावज्जीविके प्रयाजादीतिकर्तव्यता भवतीत्युक्तम्। प्रथमपदार्थद्वारेण श्रूयमाणा दर्शपूर्णमासाङ्गमारम्भणीया। सा किं प्रतिप्रयोगं कर्तव्योत सर्वप्रयोगे सकृदिति। किं प्राप्तं? प्रतिप्रयोगं कर्तव्येति। कुतः? इतिकर्तव्यता हि प्रयोगाङ्गम्। प्रयोगस्य च भेदः। तस्मादावर्त्तते।

सकृद्वा ऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

सकृद्वा कर्तव्यता। कुतः? आधानं कृत्वा सर्वः सङ्कल्पयति, मया यावज्जीवं दर्शपूर्णमासौ कर्तव्यावागते काले। स च सङ्कल्पः सर्वेषां प्रयोगाणामगृह्यमाणविशेषत्वात्साधारणः। सङ्कल्पश्च पूर्वावस्थां बाधमानो ऽध्यवसानम्। अध्यवसानं च पदार्थः। स च सर्वेषां साधारण इत्युक्तम्। तस्मात्सकृत्कर्तव्या। अत्र ग्रन्थः। अथापि प्रथमं वर्तमानमारम्भ-

स्तथाप्यारम्भणीयाप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्तीति।

नैतद्युक्तम्। कथं? कालो निमित्तम्। स कर्म प्रयोजयति। प्राक् पौर्णमासकालात् कर्म न प्रयुज्यते। निमित्ताभावात्। तच्च निमित्तमेकमेव प्रयोगं प्रयोजयति। पुरुषश्च पूर्वावस्थामौदासीन्यं चोज्झित्वा ततः सङ्कल्पमध्यवसानं करोति। अध्यवसानं सङ्कल्पो वैकस्यैव प्रयोगस्य; न द्वितीयादेः, निमित्ताभावात्। अपि चेतिकर्तव्यता प्रयोगेण प्रयुज्यते; न कर्मणा। प्रयोगाभेदाच्च भेदस्तस्याः। यदि च कर्मणा प्रयुज्येत तथा सति प्रयाजादीनामपि कर्मैकत्वात्सकृदेव प्रयोगः स्यात्। न चैतदिष्टम्। यदुक्तमाधानं कृत्वा सर्वः सङ्कल्पयति, पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्तव्याविति। स च सङ्कल्पः सर्वप्रयोगाणामगृह्यमाणविशेषत्वादिति।

तत्रोच्यते। सर्वप्रयोगाणां संकल्प एव न प्राप्नोति निमित्ताभावादित्युक्तम्। नन्वाधानानन्तरं सर्वसाधारण एव संकल्पो भवति। विद्वांश्चाधिक्रियते। स जानाति, नित्यानि मया कर्माणि कर्तव्यानि काम्यानि फलार्थेनेति। यो ऽस्याधानादुत्तरकालं स संकल्प इव न प्रयोगाङ्गम्। तस्मादिदमशोभनम्। अतो ऽन्यत्क्रियते। दर्शपूर्णमासावारप्स्यमान इति शानजारम्भकर्तारमभिधत्ते। तत्र सन्देहः। किमारम्भो दर्शपूर्णमासाद्यं पदार्थमभिधत्ते, किं वा ऽप्रवृत्तस्याद्यं प्रवर्तनं पूर्वपक्षवादी मन्यते? यद्ययं कर्तारमभिधत्ते, तथा सति फलकल्पना प्राप्नोति। यद्यपावारम्भणीया न पुरुषार्था। किं तर्हि? क्रत्वर्था। तथा च प्रतिप्रयोगमावर्तेत।

सिद्धान्तस्तु दर्शपूर्णमासारम्भयोग्यं पुरुषं कुर्वती क्रतुना गृह्यते। अपि च यः शानचा पुरुष उपात्तस्तस्य विप-

रिवर्तमानस्य निर्वपेदित्यारम्भणीया तदर्था श्रुत्या प्रतिपाद्यते। इतरथा ज्ञानजनर्थकः स्यात्। निर्वपेदित्यनुच्चारिते ऽप्यन्वारम्भणीया कृत्वर्था भवत्येव। महाप्रयोगवचने यो भावनावचनस्तेन विधानं भविष्यति। सा च बहिः प्रयोगात्क्रियमाणा पुरुषमारम्भयोग्यं करोति। तस्य चैकत्वान्न ज्ञायते ऽस्याऽयं प्रयोगस्य योग्यो ऽस्य नेति। अगृह्यमाणविशेषत्वात्सर्वप्रयोगाणां यदि तन्त्रमध्ये क्रियते तथा सति यस्य तन्त्रं तस्यैव योग्यं करोति नाऽन्यस्येति। ननु लृटः समाने ऽहन्युत्पद्यमानत्वाद्यस्यैव समाने ऽहनि प्रयोगस्यारम्भणीया क्रियते तस्यैव पुरुषं योग्यं करोतीति गृह्यते विशेषः।

उच्यते। द्वितीयादिष्वपि प्रयोगेषु समाने एवाहनि दर्शपूर्णमासावारप्स्यमानो ऽसौ कृतारम्भणीयाको जात इति योग्य एव भविष्यतीति। अनेन निराकरोति, समाने ऽहनि लृडुत्पद्यते इत्येतन्न युज्यते। भविष्यत्कालसामान्ये लृडुत्पद्यते। ननु लुटा ऽनद्यतनकालोत्पन्नेनायं बाध्यते। नैतद्युक्तम्। यदि लुडनद्यतने विधीयमानो लृटमबाधमान आत्मानं न प्रतिलभते ततो बाधेताऽपि। अयमबाधमानो ऽप्यात्मानं लभते। तस्मान्न बाधते। तस्माल्लृडनद्यतने ऽद्यतने च भविष्यति काले भवति। लुट्प्रत्ययस्त्वनद्यतन एव। न च सोमेन यक्ष्यमाण इत्यनेनैतत्तुल्यम्। यत्राधानं कृत्वा सोमेनान्यैश्च यक्ष्यते, तत्र सोमेन यक्ष्यमाणो ऽग्निमादधीतेति यद्येतदानन्तर्यं न कुर्यात्ततो ऽनर्थकमेव स्यात्। तस्मादनेनानन्तर्यं विधीयते। यद्यपि लृट् सामान्येनोत्पन्नस्तथा ऽपि सोमाधानानन्तर्यसामर्थ्यादद्यतने कल्प्यते प्रमाणान्तरवशात्। इह तु नास्ति प्रमाणं, येनाद्यतने कल्प्येत। तस्मात्सामान्येनोत्पद्यते। अथ वा दर्शपूर्णमासौ निमित्तभूतौ

श्रूयेते आरम्भसंयुक्तौ। तत्र समाने ऽहनि दर्शपूर्णमासावारम्भणीयासंयुक्तौ कर्तव्यौ। एवमारम्भद्वारेणारम्भणीयां प्रथमः प्रयोगो ऽपेक्षते। द्वितीयादयश्चैवमेव। तत्र वहिःक्रियमाणायां यो ऽसौ दर्शपूर्णमासारम्भाद्यतनकालः स सर्वेषु विद्यते। किं दर्शपूर्णमासावारभमाणेनाऽन्वारम्भणीया न कृता, येन पुनः क्रियेत? न च प्रयोगो ऽद्यतनेनापेक्षितो दर्शपूर्णमासशब्दश्रवणात्। तस्मात्सकृत्कर्तव्या। एवं च काम्ये क्व चिन्नैव कर्तव्या प्रयोगमात्रभेदात्, कर्मणो भेदाभावात्।

अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं चोदिताभिधानात् ॥ ३६ ॥

उपोद्घातप्रसक्तानुप्रसक्तादि वृत्तम्। इहेदानीमूहश्चिन्त्यते। किं सवित्रादिशब्दा विकृतावूहितव्या उत नेति। ऊहितव्याः। कुतः? सवित्रादिशब्दा अर्थप्रकाशका यदि श्रुतिवृत्तास्ततो दृष्टार्थाः स्युः। प्रकाशनद्वारेण मन्त्रस्यापेक्षितत्वात्। यदि लक्षणया ऽग्निमभिवदन्ति ततो दृष्टार्था भवन्ति। अथ वा सवित्रादिभिर्मुख्य एवार्थः प्रकाश्यते, तथा ऽपि समवेतवचनाः। कथं? भिन्नत्वान्मन्त्राणाम्। मान्त्रवर्णिको देवताविधिर्दर्शपूर्णमासयागेष्वग्न्यादिभिर्वैकल्पिको भविष्यति।

अत्र के चिदाहुः—मान्त्रवर्णिकेन देवताविधानेन शक्यन्ते ऽग्न्यादयो देवता वाधितुं विषमशिष्टत्वात्। तस्मात्सवित्रादिमन्त्रवर्णैर्यागान्तराणि कल्प्यन्ते। तेषु मुख्याश्च समवेतवचनाश्चेति।

नैतद्युक्तम्। एवं सति यागान्तरत्वात्प्रयाजतुल्यास्तत्र चोदकेनातिदिष्टानामप्यविकारः स्यात्। यथा प्रयाजानाम्। तत्र

पूर्वपक्षोत्तरपक्षयोः सह न कश्चिद्विशेषः । तस्मात्स एव पक्षो यत्रोहः सिध्यति । एवं प्राप्ते लोके सवित्रादयो ऽग्न्यादिवचना न प्रसिद्धा, न च गुणेनाग्न्यादीनभिधातुं समर्थाः । यत्र परशब्दसामानाधिकरण्यं तत्र गुणेन परशब्दः परत्र वर्तते । न चेह सामानाधिकरण्यं, विविभक्तिनिर्देशात् । न च मान्त्रवर्णिको देवताविधिः शक्यः कल्पयितुम् । मन्त्रभेदे हि स भवति । एकश्चायं मन्त्र इत्युक्तमर्थैकत्वादिति । कल्पिते भेदे नैवाग्न्याविना सह विकल्पो, विषमशासनात् । तस्मान्निर्वापस्तुत्यर्थमेषामुच्चारणमिति ।

गुणशब्दस्तथेति चेत् ॥ ३८ ॥

अग्नये जुष्टं निर्वपामीति जुषीप्रीतिसेवनयोरित्यग्निना यद्द्रव्यं सेवितं तन्निर्वप्तव्यम् । न चाग्निना सेवितं द्रव्यमस्ति । तस्मादविद्यमानत्वात्तादृशस्य द्रव्यस्यासमवेतवचन इति ।

न समवायात् ॥ ३९ ॥

समवेतवचनो ऽग्निशब्दः । निर्वापेण करणभूतेन जुष्टं भावयेत् । स भाव्यमान एवं भाव्यते, अग्निरिदं जोषिष्यते द्रव्यमिति । एवं सेव्यमानो दृष्टार्थो निर्वापो भविष्यतीति प्रयोजने चोद्यते । प्रकृतशब्देन सम्बन्धशब्देन क्विकारास्तण्डुलाः प्रकाशिताः । लक्षणयेहाऽपि चोदकस्तथैव प्रापयति । तस्मान्मृगशब्देन मांसं प्रकाश्यं लक्षणया ।

नैतदेवम् । विकृतावर्थश्चोदकेनातिदिश्यते; न शब्दो वाचक इत्येतद्वक्ष्यामः । स चार्थो ऽसमवायत्त्वे प्रयोगे किमित्यवाचकेन प्रकाश्यते ? विकृतावाम्नानसामर्थ्यादवाक्येन शब्देन प्रकाशनं कृतम् । तच्चार्थादिष्टत्वं न चोदकः प्रापयति । न व-

चनमस्ति,प्रकृत्या विकारः प्रत्याय्यत इति। तस्मान्मांसशब्द-
स्यैव प्रयोगः।

चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥ ४० ॥

यज्ञपतिं वर्धानिति वृद्धया सह यज्ञपतेरिडापदमनपेक्ष्य
प्रत्यक्षैकवाक्यता इडया सह परोक्षा।

सिद्धान्तस्तु यज्ञपतिशब्दो वृद्धिविशेषणम्। वृद्धिरिडा-
स्तुत्यर्था। इडोपह्वानेनैकवाक्यत्वात्। अथ यदुक्तमिडापदान-
पेक्षं यज्ञपतिवृद्धिवचनं गम्यत इति, उच्यते। स यो हैवं वि-
द्वानिडया चरतीत्यनेन इडया चरितव्यमिति विधीयते। त-
त्रेडाप्रचारस्यायं मन्त्र इडोपहूतेत्यादिः। ब्रह्मदेवकृतमुप-
हूतमित्येवमन्त इडोपह्वानार्थः। दैव्या अध्वर्यव इत्यादि ऋ-
त्विगुपह्वानार्थः। अध्वर्युशब्दवाच्याः सर्वऋत्विजो लक्षणया
उपहूता मनुष्या इति त एवोच्यन्ते। कीदृशास्त इति। उच्य-
ते। ये यज्ञमवन्ति रक्षन्ति ये च यज्ञपतिं वर्धयितुं क्षमा-
स्तादृशा मनुष्या उपहूताः। तस्मान्मनुष्यविशेषणत्वात्परार्थो
यज्ञपतिशब्दस्तेन नोह्यते।

विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

प्रत्युदाहरणमिदम्। अथ वा ऽधिकरणान्तरं कया चि-
दाशङ्कया ऽऽरभ्यते। अयं यजमान आयुराशास्त इत्यायुषः
फलत्वं नावगतं प्रमाणान्तरेण। तस्माद्यजमानाशीस्सम्बन्धो
वाच्यो दृष्टार्थाय। यजमानसम्बन्धा ऽऽशीर्वक्तव्या। सा चै-
केनापि भवत्येव। तस्मादनूहः।

नैतदेवम्। सूक्तवाकेन प्रस्तरं प्रहरतीति करणविभक्ति-

निर्देशात्सूक्तवाकः प्रहरणाङ्गम् । न चासौ प्रहरणं प्रकाशयति न तत्साधनम् । श्रुत्या च तस्याङ्गता निर्ज्ञाता । तस्माच्छ्रुतिसामर्थ्याद्यदनेन प्रकाश्यते तत्प्रहरणसम्बन्धि । तेन चाग्न्यादयो देवताः प्रकाश्यन्ते,आयुरादीनि च फलानि । तत्र देवताः साधनतां प्रतिपद्यन्ते आयुरादीनि च साध्यत्वम् । तस्मादायुरादीनि फलानि । कर्तृगामि च क्रियाफलम् । तस्माद्यजमानः प्रधानभूतः फलं प्रति प्रधानत्वादूह्यः ।

असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥

नैते सन्तीन्द्रे गुणाः प्रमाणाभावात् । ऊहं चेच्छता सन्तीन्द्रगतगुणा इत्यभ्युपगमनीयमिन्द्रगुणसम्बन्धमात्रम् । इन्द्रस्यात्मीयगुणा इति चाभ्युपगमे लक्षणा स्यादनेनांशेन प्रकाश्यमानेषु । अथोच्येतासमवेता एते गुणा इन्द्रेण चात्मीयत्वं लक्षयिष्यन्ति । द्वावपि दोषौ परिहरिष्यामः । इन्द्रो हरिवद् गुणविशिष्ट उच्चार्यमाणो ऽभ्युदयकारी ।

न परार्थत्वात् ॥ ४४ ॥

पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरतीति यदुक्तं, तन्न । कुतः ? यावेतौ पूर्वपक्षापरपक्षौ करणभूतौ ताभ्यामिन्द्रो हरति, नान्य इत्ययमर्थो न लभ्यते । कुतः ? ताभ्यां ह्येष सर्वं हरतीति हेतुरयम् । हेतुश्च प्रसिद्धे सम्बन्धे भवति । न चेन्द्रस्य हर्तृत्वमवगतं प्रमाणान्तरेण । येन हेतुः स्यात् । वाक्यभेदादिदोषश्च स्थित एव । तस्मात्सर्वेषां स्तुतिद्वारेणैकवाक्यता ।

लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्व-

तौ स्त्रीत्वात् ॥ ४५ ॥

चतुर्षु पशुष्वेकवचनान्तो ऽसमर्थ एव प्रास्मैशब्दः ।

उच्यते । प्रातिपदिकार्थस्तावद्विद्यते वचनेन । यथा प्रातिपदिकं नोत्कृष्यते तथा वक्ष्यामः पाशाधिकरणे । तस्मात्समवेतवचनः प्रातिपदिकार्थसम्भवाद् स्त्री पुल्लिङ्गेन न शक्यते वदितुम् । नात्र लिङ्गं वचनमिव विभक्त्यर्थः । किन्तु प्रातिपदिकार्थो लिङ्गमित्युक्तम् । तस्मान्मेष्यामभावो युक्तः असमवेतार्थत्वादिति सिद्धान्तवादी मन्यते । किं लिङ्गविशेषानिर्देशादिति । सिद्धान्तवादी तु मन्यते पशुशब्देनात्र सामानाधिकरण्यं भविष्यति, प्रास्मै पशव इति । तच्च पशुशब्दवाच्यं मेष्यामपि विद्यते । तस्मात्समर्थो निगदो ऽयम् । पश्वभिधानाद्वेत्यनेन प्रतिपादयति । विशेषा वा तदर्थनिर्देशादिति सिद्धान्तसूत्रेण प्रथमसूत्रार्थ एव स्मार्यते । पशुत्वं चैकशः स्यादिति पशुशब्दो ऽयं पुल्लिङ्गः । अस्मैशब्दो ऽपि तयोर्यत्सामानाधिकरण्यं तत्प्रत्युच्चार्यते । यथोक्तं वा सन्निधानादिति पूर्वपक्षवादिना यदुक्तं तदेतेन निराक्रियते ।

सन्निहितवचनत्वं सर्वनामशब्दानां स्वभावः । उच्चरितमात्रः सर्वनामशब्दो यत्पदान्तरेण सन्निधाप्यते, तेन सह शीघ्रं सम्बध्यते । न चेह पशुशब्द उच्चरितो, येन सम्बन्धः स्यात् । तस्मिन् शब्दोपात्ते सम्बन्धप्रकार आश्रीयते प्रकरणाद्यालोचनेन । लिङ्गादिसर्वविशेषणविशिष्टेन रूपेण सन्निहिते प्रयुज्यते इति को ऽर्थः ? जातिलिङ्गसङ्ख्याविशेषणविशिष्टां व्यक्तिमभिदधाति रूपेण स्वसामर्थ्येनेत्यर्थः । सर्वनाम्नामेतदेव सामर्थ्यं यदेतानि विपरिवर्तमानमेवाभिदधाति । व्यक्तिस्तु विपरिवर्तते ।

अथ वा रूपेणेति रूपशब्देन विद्यमानं वस्त्वभिधीयते। तच्च विद्यमानं यदि वर्तते प्रकरणसन्निहितं, सन्निधानेनैकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नुवन्ति । यद्यत्सन्निधानविशिष्टं तत्तदभिदधति। तस्मात्सन्निधानमेषां सामान्यं निमित्तम्। सन्निहितं च पुल्लिङ्गम्। यद्यपि स्त्रीलिङ्गमपि सन्निहितं, तथा ऽप्ययमसमर्थः शब्दस्तत्र वर्तितुम्। पुल्लिङ्गत्वात्तत्रोच्चार्यमाणे पशुशब्दे इति उच्चार्यमाणः पशुशब्दः आस्मै पशव इति पुल्लिङ्गेन पुल्लिङ्गशब्दः शक्यः सम्बन्धयितुम् । अस्मिन्पक्षे व्यक्तितो निष्कृष्य पशुत्वं तेन सह सम्बध्यते । अस्मैशब्दो न व्यक्त्या । एतदपि पशुशब्दे उच्चार्यमाणे न भवतीत्युक्तमेव ।

आम्नातादन्यदधिकारे वचनाद्विकारः स्यात् ॥ ५० ॥

यज्ञायज्ञीयं प्रकृत्या ऽऽमनन्ति न गिरागिरेति ब्रूयात्। यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेदैरं कृत्वोद्गेयमिति ।

अत्र पूर्वः पक्षः । ऐरं कृत्वोद्गेयमिति इरापदस्यानेनोत्पत्तिः केवलं क्रियते। उत्पत्त्युत्तरकालं च प्रयोजनं प्रति साकाङ्क्षस्य प्रयोगवचनेनाङ्गता विधीयते । यज्ञायज्ञीयस्य प्रयोगवचनेनाङ्गता । तस्मादुभयोस्तुल्यप्रमाणत्वाद्विकल्पः । अथ वा यद्यपीरापदमनेन वाक्येन विधीयते स्तोत्राङ्गत्वेन, तथा ऽपि नानुत्पन्नं श्रुतिः शक्नोति निर्वर्तयितुमित्यर्थादुत्पत्तिरपेक्षितव्या। यज्ञायज्ञीयेन स्तुवीतेत्यनेन गिरापदस्य स्तुतिसाधनत्वमुपपद्यते। पाठात्तु गिरापदस्योत्पत्तिः सिद्धा। तस्मादेकत्रोत्पत्तिरपेक्षितव्या, परत्र विनियोगः। तस्मादेकाङ्गविकलत्वाद्द्वयोरपि प्रत्ययविप्रकर्षः। विप्रकर्षाच्च विकल्पः ।

नियमो वा श्रुतिविशेषादितरत्सामदश्यवत् ॥ ५१ ॥

यदुक्तमैरं कृत्वोद्गेयमित्यनेनोत्पत्तिः यज्ञायज्ञीयप्रयोगवचनेन स्तुतिसाधनत्वमिति, तन्न । यदेवं श्रूयते ऐरम्भवतीति तदोत्पत्तिः स्यात् । इह त्वैरं कृत्वा ऐरमभिनिर्वर्त्य उद्गेयमिति श्रुत्यैवास्य साधनता विधीयते । यज्ञायज्ञीयेन त्वन्यथानुपपत्त्या गिरापदस्य स्तुतिसाधनत्वं विधीयते । सा प्रत्यक्षेणैरापदेनार्थादुत्पत्तिर्बाध्यते । यदुक्तमर्थादुत्पत्तिरपेक्षितव्येति ।

उच्यते । श्रुत्यैरापदविशेष एव विहितः । तस्यार्थादुत्पत्तिः । यदुच्यते शब्दस्य नास्ति तत्र व्यापारः, इह तु शब्देन कस्मिन्विशेषो विधातव्यः ? तत्र गिरापदस्य शब्दो न विधीयते । गिरापदसाप्तदश्यवदिति तुल्यो न दृष्टान्तेन दार्ष्टान्तिकः । कथं ? सप्तदश सामिधेनीरनुब्रूयादित्यनारभ्य श्रूयते, पञ्चदश ब्रूयादिति दर्शपूर्णमासयोः । तत्र क्लृप्तसम्बन्धेन पाञ्चदश्येन साप्तदश्यं बाधितम् । तत्र कासु चिद्विकृतिषु साप्तदश्यं पुनः पठ्यते, न चोदकप्राप्तं निवर्त्तते प्रत्याम्नातेन । गिरापदं पुनर्न कस्यां चिद्विकृतौ, येनेरापदं बाध्येत । अपि चेरापदं क्लृप्तोपकारं विकृतौ चोदकेन प्राप्यते । गिरापदमग्नौ श्रूयते, नोपदेशेन प्राप्नोति । तस्माद्विकृतिष्विरापदमेवेति सूत्रं भाष्यं चानुपपन्नमेव ।

उच्यते । यथा प्रकृतौ साप्तदश्यं पाञ्चदश्येन बाध्यते, एवं गिरापदमिरापदेनेति तद्बाधितम् । यासु विकृतिषु प्रमाणं भवति तासु भविष्यति । प्रमाणाभावेन क चिदपि मा भवतु । अथ वा विनापि, स्तुतिसाधनत्वेन प्रमाणान्तरेण भवति कासु चिद्विकृतिषु गिरापदम् । तथाह्यग्नौ श्रूयते, यज्ञायज्ञीयं पुच्छे गायतीति । तत्र यथाम्नातमेव गिरापदं युक्तं प्रयोक्तव्यम् । यत्र त्वग्निष्टोमस्तोत्रसाधनत्वेन यज्ञायज्ञीयं प्रयुज्यते तत्रैव

क्लृप्तोपकारेणेरापदेन गिरापदं बाध्यते । तत्रैव तस्य प्रकृता-
वुपदेशान्नान्यत्र प्राप्तिरिति ।

अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥५४॥

गिरापदगीतिरिरापदेन स्यात् । कुतः ? गीत्या वर्णाः संस्क्रियन्ते । गिरापदवर्णानां वपासंस्कारिका गीतिः । सा तानेव वर्णान्संस्करोति । तैरेव वर्णैः प्रयुज्यते । इरापदवर्णैर्न युज्यते । गिरापदवर्णस्वरूपप्रयुक्तत्वाद्गीतेः । तस्माद्यथाभूत-मिरापदं तथाभूतमेव प्रयोक्तव्यम् । ननु चैरमिति विकारे तद्धित उत्पन्नः । वर्णानां च स्वरूप एव विकारः । तस्मात्तद्धितश-ब्देनैव गीतिरुपदिश्यते । नात्र विकारे तद्धित उत्पन्नः । किं तर्हि ? स्वार्थ एव । यावदेवोक्तमिरं कृत्वोद्गेयन्तावदैरमिति । यदि च प्रगीतात्तद्धित उत्पद्यते तथा सति वृद्धं तालव्यं प्र-थमस्वरं वेति कृत्वा इकारस्याभावः स्यात् । तत्र " वृद्धाच्छः " इति च्छो भवति । तथा चायिरीय इति स्यात् । न चैवं श्रूयते । तस्मात्स्वार्थे तद्धितः ।

यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वात् ॥५५॥

गिरापदे कर्तव्या । कुतः ? स्तोत्रापूर्वप्रयुक्ता हि गीतिः, न वर्णस्वरूपप्रयुक्ता । तस्माद्गिरापदाभावे ऽपि गीतिरवतिष्ठते । सा च साकाङ्क्षा । इरापदमपि विधी-यमानं गीतिं प्रति साकाङ्क्षम् । तस्मात्तयोः सम्ब-न्धः । ननु विकारतद्धितो ऽयं न स्वार्थीयः । आनर्थ-क्यप्रसङ्गात् । तस्माच्छब्देनैव गीतिर्विधीयत इति । सत्यमत्र चतस्रो वचनव्यक्तयः प्रतिभान्ति । यद्वैरापदगीतिविकारे त-द्धितो ऽयमनूद्येरापदं विधीयते । अथ वेरापदमनूद्य गीतिः ।

अथवोभयम्। अथ वा शुद्धमिरापदम्। तत्रेरापदस्य न लोकवेदयोर्गीतिः प्रसिद्धा। अप्रसिद्धाच न शक्यानि वदितुम्। इरा एवमप्रसिद्धत्वादेव न शक्या ऽनुवदितुम्। अपि च यदीरापदमनूद्य गीतिर्विधीयते, गिरापदस्य निवृत्तिः प्राप्नोति। न गीता वर्णा निवर्त्तन्ते। अतुल्यकार्य्यत्वात्। तत्र गिरापदप्रतिषेधयोरनुवादो न प्राप्नोति। तत्र गिरापदस्य भेदेन प्रतिषेधो वक्तव्यः। तस्मिन्नुच्यमाने वाक्यभेदः। अपि च गिरापदे निषिद्धे अनियमेन तत्स्थाने वर्णाः प्राप्नुवन्ति नावश्यमिरापदम्। अथोभयं प्रगीतमिरापदञ्च,तथा वाक्यभेदः। तस्मादिरा एव प्रातिपदिकं विधीयते। तच्च विधीयमानं गिरापदस्य प्रगीतिस्तां कार्य्यापत्त्या लभते। यदि पूर्वपक्षः—प्रमपदं प्रभिपदं वा प्रयोक्तव्यम्। यदि सिद्धान्तः—प्रभिपदमेव प्रयोक्तव्यम्। नैतदनन्तराधिकरणस्य प्रयोजनं पदप्रयोगविकल्पमाह न प्रगाणे। तस्मात्पूर्वाधिकरणस्य प्रयोजनमिदमाम्नायते। यद्यविदस्य प्रमपदं प्रभिपदं वा पूर्वपक्षे, सिद्धान्ते प्रभिपदमेवेति प्रमादाल्लिखितमप्रगाणादित्यस्य प्रयोजनमप्रगीतमिरापदं पूर्वपक्षे। सिद्धान्ते तु प्रगीतं प्रयोक्तव्यम्।

यत्पुनरिदं,नात्र कश्चिद्विशेषः अन्यस्मिन्पक्षे तत्सदृशे प्रयोजनमस्तीति। इदं वचनमिति चेदित्यस्य सूत्रद्वयस्य प्रयोजनं इरापदे वचनात्प्रमाणम्। यदि स्थानापत्त्या सर्वथेरापदं प्रगीतं प्रयोक्तव्यं प्रभिपदे तु न वाचनिकं प्रमाणमस्ति। किं तर्हि? न्यायात्। तत्र यदि वचनेन गानं प्राप्यते,प्रभिपदादीनां तु वचनाभावादप्रगीतता स्यात्।

तस्मात्प्रभिपदादीनां नैव स्यादप्रगीतता।
पदार्थत्वप्रधानत्वाद्वाक्यस्य स्यात्प्रगीतता॥

इति नवमाध्यायस्य प्रथमः पादः।

# अथ द्वितीयः पादः ।

सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥

यदुक्तं दोषमिति, ह्येतदयुक्तम् । कथं? कवतीषु रथन्तरं गायतीति कवत्यस्तावन्न कृतकाः । रथन्तरमपि नैव कृतकम् । यदप्यतिदेशवाक्यं कवतीषु रथन्तरं गायतीति, तदपि नैव कृतकम् । तस्मादूहेन कवतीषु किं विकृतकम् ?

अत्रोच्यते । रथन्तरगीतौ कवतीषु क्रियमाणायां पुरुषस्य गीतिक्रियां प्रति यः प्रथमः प्रयत्नः समाम्नायते नाभीप्सा रथन्तरगीतिदृष्टातिदेशसामर्थ्याच्च, सा ऽन्यत्र नियता । यथा प्रजानां नित्यानामपि यदनुष्ठानं तत्कृतकमेवमिहापि ।

कर्म वा विधिलक्षणम् ॥ ३ ॥

ननु सप्तमे निर्णीतं संस्कारकर्म सामेति । उच्यते यदि प्रधानकर्ममन्त्रेऽप्यप्यतिदेशस्य सिद्धिः इह गुणप्रधानता ऽवश्यं विचारणीया । यदि प्रधानं ततो गीत्यनुरोधेन वर्णाः । अथ गुणभूतास्ततो विपरीतम् ।

तृचे स्याच्छ्रुतिनिर्देशात् ॥ १४ ॥

ननु तृचे वा लिङ्गदर्शनादिति दशमे तिसृषु ऋक्षु साम गेयमित्येतत्स्थापितम् । आधस्त्ये चाधिकरणे संस्कारकर्म सामेति स्थितम् । प्रतिसंस्कारं च संस्कारावृत्तिरित्यतो व्यासज्यमानः पक्षो नैवोत्तिष्ठति ।

बध्यते । दशमे ह्येवं चिन्ता, तृचे साम गेयं न द्वयोरेकस्यां चेति । इह तृचगाने स्थिते किं प्रत्यृचमुत व्यासज्येति यदु-त्कृष्य ऽयृचं गानं सिद्धमिति श्रुत्या न्यायबाधं मन्यमानः पू-र्वपक्षमारभते । एवं साम तृचे क्रियत इत्ययं धातुः सामान्य-विधिवचनो विशेषधातुना न निराकाङ्क्षीक्रियते । तस्मादयं निराकाङ्क्षीकर्तव्यः । साम चात्र द्वितीयासंयोगादीप्सितम् । तस्मात्तेन निराकाङ्क्षीक्रियते । सामान्यं धातुविशेषस्थानीयं सामजातं तस्य धातुविशेषस्थानीयस्य निवर्तकत्वेन ऽयृचो विधीयन्ते । एवं करोतिरभूतप्रभाववचनो निगृहीतो भविष्य-ति । इतरथा यत्साम संस्कुर्यात्तत्तृच इत्यभ्यासलक्षणं प्राप्नोति करोतेः । अथ वा ऽन्यः श्रुतिप्रकारः । यदि ऋग-नुवादेन ऽयृचो विधीयन्ते तथा सत्येको गुणभूतो विधीयमा-नत्वात् शब्दवृत्तेन वा प्रधानभूतः । अपर उद्दिश्यमानत्वात्प्र-धानभूतः शब्दः, शब्दवृत्ते वा गुणभूतः । तयोः सापेक्षत्वाद-समासः स्यात् । तृच इति च समासः । तस्मादपि च धा-त्वर्थे किञ्चिद्विधेयम् । अपि च सप्तम्या ऽऽधारत्वं तृचस्य प्र-तिपाद्यते । तत्र यद्येकस्यां सामाभिधीयते, तथा सप्तमी बाध्ये-त तिसृषु श्रुता ।

वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्सं-स्कारस्य तदर्थत्वात् ॥ १७ ॥

प्रत्यृचं वा गेयम् । कुतः ? साम्नो ऽत्र साधनतया विहिताः । सोमस्थवर्णानां संस्कारमयमेवाकाङ्क्षति । तत्र साम नियम्यते संस्कारकत्वेन । तस्मात्सोमसंस्कारद्वारेण स्तोत्रेण सम्बध्यते । यथा ऋग्गुणः एकं साम तृचे क्रियत इति निर्ज्ञाते सामसं-

स्कारके गुणवाक्याभेदं तत्र यो प्राप्तो गुणः स विधीयते। य-त्साम्ना ऋचं संस्कुर्यादित्यनूद्यते तास्विति विधीयते। ध्यासज्य गाने साम्ना न ऋक् संस्क्रियेत। ऋगेकदेशः संस्क्रियेत। न च ऋगेकदेशः स्तुतिं करोति। न च ऋगेकदेशस्य स्तोत्रीये-णा संस्कार्येणापेक्षिताः ऋचः स्तुतिसाधनत्वात्। तस्मादध्यास-ज्यमाने कृत्स्नं वाक्यमनर्थकं स्यात्। पादप्रगीतेषु पाद एव गानं कर्तव्यम्। पाद एव हि तद्वाक्यम्। यथा गोष्ठे वसिष्ठ इत्येतदयुक्तं भाष्यम्। कथम्?

उच्यते। सामनी उत्पन्ने न पादे समाना गीतिरिति लाघवान्नेषु पादेषु न गीयते। यथा तेभ्यो देशे प्राचीरिति मन्त्रे। अपि च पादोत्पन्नायाः पादान्न प्रयोगश्छन्दोग्नैव दृश्यत इति।

नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयते ॥ २३ ॥

रथन्तरमुत्तरयोर्गायतीति। अत्र पूर्वपक्षवादी उत्तराशब्दं सङ्ख्याशब्दं मन्यते। यद्योन्यां तदुत्तरा यो गायतीति वाक्याद्यो-न्युत्तरे गम्येते। प्रकरणादुत्तराग्रन्थः समाम्नायते। प्रकरणाच्च वाक्यं बलीयः। अथ वा यथा योन्यां तदुत्तरयोरिह योन्युत्तरे वाक्यात् उत्तराग्रन्थपठिते अपि वाक्यादेव स्यादनियमः।

सिद्धान्तस्तु उत्तराशब्दो रूपाग्रन्थो ऽप्रसिद्धः। उत्तरा वर्तते, उत्तरा ऽध्यापयाम इति। तस्मिन्गृह्यमाणे न पदान्तरसं-निधानमिति क्षन्तव्यम्। यो ह्युत्तरासु गृह्यमाणासु प्रकृतित्वम-पेक्षितव्यं तत्र विलम्बितः प्रत्ययः। इतरत्र त्वविलम्बितः।

ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥

एकविंशतिकृत्वः षोडशिन्यभ्यस्यमानः कस्याभ्यास इति । एतदयुक्तम्। न हि द्वादशाहे षोडशिन एकविंशतिकृत्वः प्रयोगः । किं तर्हि ? सकृदेव प्रयोगः । तस्मादन्यो वाक्यार्थः । एकविंशः षोडशीति सर्वस्तोत्राणि षोडशिनि एकविंशानि भवन्ति । तत्रैकविंशतिकृत्वः संपत्तये त्रैशोकस्य सप्तकृत्वो ऽभ्यासः । तस्मिन्नभ्यस्यमाने सप्ताऽतिजगत्यो भवन्ति । एवं सति जगतीबहुत्वं भविष्यति ।

प्रगाथादिकं तु ॥ २५ ॥

एवं हि स्मरन्ति । काकुभः प्रगाथ इति । एतदयुक्तम् । बार्हत एवायं प्रगाथश्छन्दोगैः स्मर्य्यते । अतो भ्रान्त्या चोदनापरिहारौ ।

लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

अत्र ग्रन्थः । षष्टिस्त्रिष्टुभो माध्यदिनं सवनमिति नात्र कर्मणि सवनशब्द इति । यदि कर्मणि सवनशब्दो वर्तते तथा सति ज्योतिष्टोममात्रेण वृत्तेन माध्यदिनं विशिष्यते । तत्रायं प्रयोग एव न स्यात् । षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति । सवनशब्दो वर्त्तेत, तथा सत्याध्वर्य्यवे हौत्रे च बह्व्यस्त्रिष्टुभो भवेयुः । तथा सति षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति सवनशब्दश्छन्दोगे श्रूयमाणास्तत्राम्नातासु वर्तते । यदि चोत्पत्तिबृहत्यावानीयेयातां तदा प्रकृतानां षष्टित्वाभावाद्दाशतयीभ्य आगमः स्यात्, तत्र तयोः प्रकरणसम्बन्धः कर्तव्यः । न च प्रकरणमस्ति । प्रगन्थनेनापि स्तुत्युत्पत्तेः । प्रगाथसामर्थ्याद्वावदस्य प्रगथनं कार्य्यान्तरार्थम् । उत्पत्तिबृहत्योरानीयमानयोः

यच्छिन्निष्ठुम इत्यसंबद्धप्रगाथवचनं वा ।

अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥३०॥

ऋचा स्तोतव्यं साम्ना वा । कुतः ? उभयत्र वर्तमानापदेशात् । यदि साम्नि विधायकः श्रूयेत, तथा सति काञ्चिन्निन्दां प्रकल्प्य साम्नां स्तुत्येकवाक्यता स्यात् । न तु विधायकः श्रूयते । तस्मात्स्तुत्यैवोभयत्र विधायकं कल्पनीयम् । ननु च निन्दा श्रूयते । उच्यते । विपरीतमिदं कस्मान्न भवति ? इत्थमृक्शोभना यदसुरा अप्यनागतपूर्वास्तत्रागच्छन्तीति ।

वचनाद्विनियोगः स्यात् ॥ ३१ ॥

साम्ना स्तुवत इति साम्नः स्तुतौ विधानमसुराणामनागमनार्थवादेन, असुरागमननिन्दाद्वारेण, साम्ना सहैकवाक्यताऽपीति यदृचा स्तुवत इत्येतत् । इतरथा निन्दया निन्दितायाः प्रशंसां कल्पयित्वा वाक्यद्वयं प्रकल्प्यम् । वाक्यद्वयाद्वा ऽदृष्टं प्रकल्प्यम् । न च विपरीतो वाक्यार्थः । साम्नामुपसंहारे श्रवणात् । य एवं विद्वान्साम्ना स्तुवत इति । अयं सहस्रमानव इत्येतया ऽऽहवनीयमुपतिष्ठत इति प्रगीतायामपि संप्रत्ययो, ऽप्रगीतायामप्युपस्थानं, स्तुतिः प्रगीता ऽपि । तस्माद्विकल्पः ।

एवं प्राप्ते ब्रूमः । सन्निहितवचनः प्रगीता च सन्निहिता । यद्यप्यप्रगीता ऽपि सन्निहिता तथा च प्रगीतैव ग्राह्या । कुतः प्रगीतायाः परार्थपाठः ? न ह्यपठितायाः सामर्थ्यं निवर्तयितुम् । यत्तप्रगीता ऽपि शाखासु पठ्यते, सा वाक्येन प्रहीष्यते ।

उच्यते । तस्याः प्रकरणेन सम्बन्धः कल्प्यः इतरस्य तु

क्लृप्तः । एतदपि नैव सन्निहितवचनो बाध्यते साममदेशे आम्नातावन्यदित्यारभ्यौपोद्‌घातिकं वृत्तम् । प्रासङ्गिकं च प्रकृतमिदानीमभिधीयते । सामोहः प्रतिज्ञातः । सो ऽभिधीयते ।

अत्र पूर्वपक्षः । नोहः साम्नाम् । कुतः ? वचनादेतदति-दिश्यते यथोन्यां तदुत्तरयोरिति । यद्यपि साम ऋगक्षराणामु-पकारकमिति सम्बन्धस्तथा ऽप्युपकारस्यानतिदिष्टत्वाद्यादृशं योनौ तादृशमेवोत्तरयोरपि । यदि नाम यथातथाभावः पाठा-न्यथाभावः । यथैष्टिकानां विकृतिषु वचनादिदं साधारणी-कृतम् । तस्माद्यथा सप्तमे पूर्वपक्षे साधारणा धर्मा इति तथेहापि । वचनसामर्थ्याच्च यत्र भावयोनावपि भावः कृतः उत्तरयोरपि तथैव कर्तव्यम् ।

एवं प्राप्ते ब्रूमः । नैतद्वचनमुपकारकस्य निषे-धकं; किन्तर्ह्युत्तरयोः कर्तव्यमित्येतावत्कृत्वा कृतार्थम् । तच्चोत्त-रयोः क्रियमाणं यथोपकरोति ऋगक्षराणां, तथा कर्तव्यम् । नेदमदृष्टेनोपकरोति । तस्माद्यस्य यर्णस्य येन प्रकारेणोप-कारकमवगम्यते तस्मिंस्तथैव प्रयोक्तव्यमत आह—सर्वतन्त्रेण प्रमाणं प्रत्यक्षमिति विरामं कृत्वा ऋगक्षरं गायिष्यत इति । एत-दयुक्तम् । ऋगक्षराणां साम संस्कारकं समधिगतं योनौ । तत्र यद्यनक्षरं गीयते ऽयथाप्रकृतिका स्यात् । अदृष्टार्थं च स्यात् । सर्वं चैतदन्याय्यम् । तस्माद्यान्यल्पान्यक्षराणि यत्नी गीतिस्तत्रापि तया ऽक्षराण्येव संस्कर्तव्यानि । तथा यत्रा-ऽल्पा गीतिर्बहून्यक्षराणि, तत्रापि सैव तेषां संस्कारिका ऽत्र-गन्तव्या । न तत्रैकश्रुत्यन्तं श्रेत्रमुपकर्तव्यम् । एतदेव साम्ना-मृचं प्रति गुणभावस्य प्रयोजनम् ।

सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥२५॥

स्तोभस्वरकालन्यासविशिष्टाया गीतेः सामशब्दो वाचक इत्येतदयुक्तम् । गीतिषु सामाख्येत्युक्तत्वात् । तस्मादन्यथा वर्ण्यते । यद्यपि स्तोभा न सामशब्दवाच्यास्तथा ऽप्यतिदिश्यन्ते । कथं ? सामोपकारकमृगक्षराणां तस्योपकुर्वतो दृष्टेन साहाय्यं कुर्वतः स्तोभा नोपकुर्वन्ति । तदतिदेशेन यदि स्तोभमागच्छेयुस्तत्कृत उपकारो ऽपि हीयेत । तस्मादतिदिश्यन्ते ।

धर्मस्यार्थकृतत्वाद् द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

यद्यप्यपूर्वप्रयुक्तो धर्म इति स्थितं तथा ऽपि कार्य्यापत्त्या विनोहसिद्धिर्नास्तीत्यनेनाधिकरणेन कार्य्यापत्तिः प्रतिपाद्यते । सा च पञ्चधा भवति । वास्तवी सा द्विविधा । प्रत्यक्षानुमानाभ्यां शब्दात्त्रेधा । स्वस्वशब्दात्प्रतिषेधेन स्वशब्दानुमानेन सङ्ख्यया प्रतिषेधे ऽनुमानं प्रतिषेधश्च शब्दः स्वतन्त्रः । प्रत्यक्षं तावन्नैवारो बार्हस्पत्यश्चरुः । ननु स्वशब्देनैव नीवारा व्रीहिकार्य्ये विनियुज्यन्ते ।

उच्यते । नीवारशब्दो नीवारान्वदति, तद्धितो विकारं, देवतां बार्हस्पत्यशब्दः, चरुशब्दो द्रव्यम् । कतरः कार्य्यापत्तिपरः ? तस्मात्प्रत्यक्षेणात्र कार्यापत्तिः । व्रीहयः पुरोडाशाख्या हविर्निर्वृत्त्या यागार्थाः । नीवारा अपि तन्निवृत्त्या यागसाधनार्था एव प्रत्यक्षमुपलभ्यन्ते । तस्माद्व्रीहयो यथा ऽपूर्वार्था इति धर्मान्प्रयुञ्जते तथा नीवारा अपि नखावपूतानां चरुरित्यवहननस्य तुषकणविप्रमोकं फलं दृष्ट्वा ऽनुमानं भवति, नूनमुलूखलमुसलकार्य्ये नखा वर्तन्त इति । परिधौ पशुं नियुञ्जन्तीति स्वशब्देनैव यूपकार्य्ये विपरिवर्त्तन्ते, न गिरागिरेति ब्रूयादिति ।

जयापदं प्रतिषेधेन तत्कार्य्यं लक्षयति । तत्र लक्षित इरापदविधिः । तच्च शब्दादृते न शक्यं विधातुं प्रतिषेधात्स्वशब्दाम्नानम् । लक्षणया ऽत्र स्वशब्दः । उद्गीया एतर्हि श्रुतेति यदि पृष्ठ्या षडहः सन्तिष्ठन इति सङ्ख्यायाः प्रतिषेधः । तेन तत्कार्य्यं, तस्मिन्मध्वशनघृताशने । एवमत्र लक्षितलक्षणया स्वशब्दः ।

तदेतदयुक्तम् । कथं ? यदि मध्वशनघृताशने कार्ये षडहकार्य्ये वर्त्तेयातां तथा फलसाधके स्यातां, तत्र द्वादशाहेन प्रजाकामं याजयेदिति वचनं विरुद्ध्येत । यागा ह्येतेन फले विधीयन्ते । ते च द्वादशसङ्ख्याविशिष्टेन मध्वशनघृताशनयागौ । ताभ्यां फलवद्भ्यां चतुर्दशसङ्ख्योपजायते । राजसूयवदिति चेत् ? तन्न । "षड्विंशदहो वा एष द्वादशाहः" इत्येवमादीनि लिङ्गानि विरुध्येरन् । यदि चानयोस्तत्कार्य्यापत्तिः स्यात्तथा सति षडहं निर्वर्तयाताम् । तत्रास्योत्पत्तिरनर्थिका स्यात् । लिङ्गविप्रतिषेधस्तु स्थित एव । कर्तृसंस्कार एवावगम्यमाने कथं फलसाधिके इत्यभ्युपगम्येते । सर्वं चैतदन्याय्यम् । तत्र वर्णयन्ति । द्वयमिहास्ति फलं साधनत्वं च । तत्र न फलसाधनत्वाद्धर्मलाभः । किन्तु साधनत्वात् ।

तदप्ययुक्तम् । यद्येते षडहकार्य्यं कुरुतः,ततस्तद्धर्मैः सम्बध्येयातां यथा नीवाराः । न चैते षडहकार्य्ये वर्तन्त इत्युक्तमेव । तदङ्गत्वाद्धर्मलाभो न भवति । किं तत्र कार्य्यापत्त्या ? तस्मादन्यदुदाहरणमुदाह्रियते । सत्प्रासने तत्स्थानादिति द्रव्यविनाशात्कर्मविनाशः । कर्मविनाशेन प्रतिषेधो लक्ष्यते । प्रतिषेधाच्च स्वशब्दः । अयमप्यस्मिन्नधिकरणे नैव सिद्धान्तः । तस्मादेतत्सदृशमन्यदुदाहरणं मृग्यम् ।

एकार्थत्वादविभागः स्यात् ॥ ४६ ॥

पृष्ठशब्दः श्रुतेरभिधाता, सा चादृष्टार्थेत्युक्तम् । तस्माद्व-चनाद्विकल्पः । बृहद्वा पृष्ठं रथन्तरं वेति । तत्र स्तुतिरदृष्टा या-सामृगक्षराभिव्यक्ता दृष्टोपकारि । तस्माद्ये साम्न्युपनिबद्धा धर्मा उच्चैर्गेयत्वादयस्तेषामुभयत्र सम्बन्धो न व्यवस्था । यथा व्रीहिसम्बद्धं प्रोक्षणं न व्रीहिष्वेवावतिष्ठते,एवमिहापि ।

निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

अन्यथा बृहता साध्यते पृष्ठमन्यथा रथन्तरेणेति । न-न्वेवं ब्रुवता व्रीहियवयोरपि धर्मव्यवस्थेत्युक्तं भवति । अन्यथा व्रीहयः साधयन्त्यन्यथा वा यवा इति ।

उच्यते । व्रीहयस्तण्डुलनिर्वृत्तिं कुर्वन्ति । ततः पिष्टानि, तेभ्यः पुरोडाशस्ततो यागो, यागादपूर्वं, यवेष्वेतत्तुल्यं सर्वम् । किमतः? एतदतो भवति, व्रीहियवयोरसन्तदृष्टार्थत्वान्नापूर्वभेदः । तस्माद-पूर्वं यागसाधनद्वारेण धर्माभिलाषि । उभौ च व्रीहियवौ या-गसाधनम् । अत उभयत्र धर्मे नास्ति व्यवस्था । व्रीहिस्था-नीयं साम प्रोक्षणस्थानीया उच्चैर्गेयत्वादयः । तत्र यद्यपि साम दृष्टोपकारि तथाऽपि यस्योपकारि तत्पृष्ठनिवर्तकम् । ते च स्तुत-भेदेन चोदिते । अदृष्टार्थत्वाच्च तयोरपूर्वभेदः । अपूर्वप्रयुक्ताश्च धर्माः । नन्वेकस्मिन्नेवापूर्वे द्वे अपि स्तुती चोद्येते । एकार्थ-त्वाच्च तयोर्विकल्पो व्रीहियवयोरिव । तस्मान्न व्यवस्था ।

उच्यते । न निष्पन्नमपूर्वमास्ते,यत्रैते चोद्येते । किन्त्वा-भ्यामेवापूर्वं जन्यते । स्तुतौ यदेव सुरादिकया जन्यते तदेव चित्रादिकयेति क तयोः ? तस्माच्चित्रादिका यथा साधयति येन साधनेनोपगृहीता सुरादिका ऽपि तैः साधयिष्यतीति नास्त्येतत् । अत एव वचनाद्विकल्पः अनैकार्थ्यात् । तस्मा-

यथा श्रवणानामपूर्वभेदाद्व्यवस्था, एवमिहापि व्रीहियवौ न साक्षादपूर्वस्य साधकौ । यागादपूर्वम् । तस्मात्तत्रापूर्वस्य भिन्नत्वाद्युक्ता व्यवस्था ।

अन्ये त्वाहुः । यदि साम दृष्टोपकारि स्तोभास्त्वदृष्टोपकारिणः । तस्मात् स्तोभप्रयुक्ता उच्चैर्गेयत्वादयः । अतो व्यवस्था । तथा च वक्ष्यति । साम्ना ऽपि दृष्टमदृष्टं च क्रियत इति ।

तदयुक्तम् । रथन्तरशब्दस्तोभो लक्षणार्थः स्यात् । अपि च स्तोभाश्चोच्चैर्गेयत्वादयश्च साम्नि गुणभूता गुणानां च परार्थत्वादसम्बन्ध इत्युक्तम् । अरुणान्यायो ऽपि नास्ति, स्तोभानामुच्चैस्त्वादीनां च परस्परनिराकाङ्क्षत्वात् । यत्तु साम्ना ऽपि दृष्टमदृष्टं वेति ऋगक्षराभिव्यक्तादृष्टं येन पुनरदृष्टार्था स्तुतिमुत्पादयति तेनादृष्टम् ।

अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥

द्वेधा धर्माणां प्राप्तिः । चोदके कार्यापत्त्या कण्वरथन्तरयोरुभयोः कार्यापन्नम् । अत उभयधर्मग्राहकमन्यकार्यापत्त्या धर्मा भवन्ति न चोदकेनेति कार्यापत्तिमाह ।

तदेतदयुक्तम् । कथं ? बृहद्रथन्तरयोरग्निष्टोमसमुच्चयः । किमतः ? एतद्‌तो भवति, यद्यप्यग्निष्टोमस्य बृहद्रथन्तरे पृष्ठसाधनत्वेनावगते तथा ऽपि तयोर्वैकल्पिकत्वादेकस्यैवेयं कण्वरथन्तरमापद्यते । एवं चोदकस्यैव धर्मान्ग्रहीष्यतीति ।

उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४९ ॥

दृष्टानुवादेन कण्वरथन्तरविधिः । यत्पृष्ठं तत्करणं रथन्तरमिति । बृहद्रथन्तरे च न पृष्ठानुवादेन विधीयेते । चोदकेन विकल्पेन प्राप्नुवन्ती वचनेन समुच्चीयते । तस्माद्यथाप्राप्तं प्रयोक्तव्ये । यद्यपि च पृष्ठशब्दो नोच्चारितस्तथा च दृष्टसाधने प्रकृतौ दृष्टे इति विकृतावपि पृष्ठसाधने एव भवतः । नान्यस्मिन्देशे प्रयोक्तव्ये इति उभयोरविशेषात् । किमुभौ होमौ पौर्णमास्याममावास्यायां वेत्येतदयुक्तम् । यदा समुदायस्य संस्कारकौ होमाववगतौ तदा यः पौर्णमासीलिङ्गः स पौर्णमास्यामेव प्राप्नोति । इतरो ऽपि तत्रैवेति नास्त्यनियमः । तस्मादन्यथा वर्ण्यते । प्रयोजनमूत्रे एते । यदि पूर्वशब्दः कालवचनस्तथा सति कालस्यासंस्कार्यत्वादारादुपकारकौ स्याताम् । कथं ? यद्यपि कालस्य कर्माङ्गता ऽवगम्यते, तथा ऽपि सकृदेव वेदिते कर्म प्रस्तूयते । न तस्य भूयो भूयः स्मृत्या प्रयोजनम् । यथा ऽन्यानि पदाङ्गानि भूयो भूयः स्मारकमपेक्षन्ते, नैवं कालः । तस्माद्यदि कालवचनः पूर्वशब्दस्तथा सत्यारादुपकारकैकत्वाच्च लिङ्गव्यवस्थां करोति । अत आह—उभयोरविशेषादिति । समुदायवाचकत्वेन तस्य संस्कार्यत्वाद्भवति व्यवस्थाकरणे लिङ्गम् । अत आह—उभयत आकाङ्क्षा तद्विषया वेति प्रयाजे ।

अत्र सिद्धान्ते ग्रन्थः । विष्णुं यजति, वरुणं यजतीति परिचोदना । अत्रोच्यते वाक्यान्तरेण वैष्णवयागो विहितस्तस्यायमनुवादः । यदि वा याग एवात्र विधीयते । तस्य प्रकरणसन्निधिभ्यां मान्त्रवर्णिको विष्णुः प्राप्तः । तस्यायमनुवादो यागस्तुत्यर्थः । न चात्र नामधेयं विष्णुद्वितीयान्तस्य यजतिसामानाधिकरण्याभावात् । प्रयाजेष्वपि च मान्त्रवर्णिको

देवताविधिः । अग्निसमिदादिश्चैवमेवानूद्यते, संज्ञारूपा वा । यद्यपि सामानाधिकरण्यमस्ति, न च सा भेदिका; किन्त्वभ्यास एव भेदकः । तदुक्तं द्वितीये ।

इति नवमाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः ।

प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥

मन्त्रविषय इदानीमूहश्चिन्त्यते । स च षडङ्गः । यद्यस्य परार्था मुख्यार्थाभिधायिनश्चापूर्वप्रयुक्ताश्च धर्माः प्रकृतौ समवेतार्थाभिधायिनो ऽपरार्था अपि । यदि वा उच्यते देवता विकृतिरिति, तथोहो ऽप्यष्टविधः । क चित्प्रकृतिरूह्यते; यथा सूर्यायेति । क चिल्लिङ्गमूह्यते; यथा वसुरसि रुद्रो ऽसीति । साङ्गे क चिद्वचनमूह्यते; यथा प्राजापत्ये च्छागानामिति । क चित्प्रकृतिश्च लिङ्गं चादित्यै जुष्टमिति। क चित्प्रकृतिवचने; विश्वेभ्यो देवेभ्य इति । क चिल्लिङ्गवचने; प्राभ्यो ऽग्निमिति । क चित्त्रयाणामपि; यथा घृतप्रोक्षणे घृत देव शुद्धमसि । क चिदभ्यासः; एकैकयेति यथा । प्रकृत्यूहस्तत्र प्रथमे पादे प्रायेण चिन्तितः । इदानीं वचनोहश्चिन्त्यते । ननु च फलदेवतयोश्चेत्येवमादिना गतार्थमेतत् ।

उच्यते । यत्तत्र नाशङ्कितं तदाशङ्क्यते । चोदको द्विविधः। शब्दचोदको ऽर्थचोदकश्च । तत्र सौर्यं चरुं निर्वपेदिति विध्यादिवाक्यं विध्यन्तवाक्यैर्निराकाङ्क्षीक्रियते । वाक्यसामान्याच्च प्रयाजादिवाक्यानामतिदेशः । एवं मन्त्रवाक्यानामपीति पूर्वः पक्षः । उपकारापेक्षया तु सिद्धान्तः अर्थचोदकत्वेन स

बलवान् । अर्थाभिधानाय हि शब्दचोदकः प्रवर्तते; न पृथगदृष्ट-कल्पनाभयात् । तस्मान्नास्त्यक्षरातिदेशः देवतार्थातिदेशस्त्विति ।

लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ ९ ॥

ये ऽपि सूत्रावयवे व्याख्या ऽपवृक्ते हि चोद्यते इति यूपो वै यज्ञस्य दुरिष्टमद्ये कमुपस्पृशेदिति ब्राह्मयोरेकवाक्यतया, सा न युक्ता । अर्थैकत्वादेकवाक्यत्वमिति ह्येवं भिन्ने एते वाक्ये । स्तुतिस्तुत्यभेदाच्च यूपो वै यज्ञस्येत्येतया निन्दया प्रतिषेधः स बाध्यते । तस्मान्नोपस्पृश्य इति यद्येकं न ह्यस्या ऽपरा स्तुतिः । न च दुरिष्टशब्दः समाप्तिवाचकः । इष्टशब्देन सोच्येत वा न वा । सोपपदस्तु समुदायप्रसिद्ध्या पापवचनः । दुरिष्टं पापमित्यर्थः । यथा दुष्कृतम् । न चोपस्पर्शननिमित्तत्वेनानूद्यमानं दुरिष्टेनोपपदेन विशेषयितुं न्याय्यमार्तिवत् । तस्मादन्यथा वर्ण्यते । अत्र वृत्ते हि प्रतिषेधे सति वोच्यते । मन्त्र उपस्पर्शनेन निमित्तेन । प्रतिषेधो ह्युपशमनेतिकर्तव्यतारूपेण प्रयोगाङ्गम् । यच्चेतिकर्तव्यतारूपं तत्प्रकरणेन गृह्यते । प्रतिषेधस्तु पुरुषार्थः । स हि स्वभावाद्विचरत्कदाचिदुपस्पृशेदपि । कर्ममध्यगतो वा प्रतिषिध्यते नोपस्पृशेदिति । तत्र हि यागमाबद्धमिति यस्य च प्रतिषेधस्तस्य निमित्ते प्रायश्चित्ते ब्राह्मणस्यैव । तत्रैवं वचनव्यक्तिर्भवति । यद्येकमुपस्पृशेदेवं ब्रूयादिति प्रकरणाद्युपमानान्तवादः । न च सङ्ख्या सङ्ख्योपसृष्टमित्यर्थाच्च यूपानुवादः । यूपस्तु निमित्तभूतो ह्यसङ्ख्यया विशेषयित्वा ग्रहवत् । इदमेवास्यास्पर्शे मूलं यूपमित्याद्युपस्पर्शने स्नायादिति । ननु प्रतिषेधो ऽपि प्रकरणात् कर्मागतानृतवदिति चेत् ?

उच्यते । द्विसाधनके कर्मणि व्रीहिं यत्सङ्कल्प्य यवमयो न देय इत्युक्तम् । इह तु न द्वौ प्रयोगौ । सोपस्पर्शनको ऽनुपस्पर्शनकश्च । यत्रानुपस्पर्शनके स्पर्शप्रतिषेधो ऽङ्गं स्यात् । यत्तु तक्षणाद्युपस्पर्शनं तद्वाचनिकं तक्षणादिकर्तरि च । इत्वमधिकरणमुदाहरणप्रसङ्गेन । पूर्वश्चोहः प्रातिपदिकविषयः । इतः प्रभृति वचनविषय एव । पाशौ, पाशं, पाशानितिवत् । अन्यायस्तु तयोः समुच्चयं वक्ष्यति । प्रकृतावुभयोर्निवेश इत्यर्थः । नन्वयं पाशमन्त्रः करणत्वान्न पापेनार्थद्रुहेनेति जपो ऽयं पाशो ऽन्मोचनकालेक्रियमाणावाच्ये चाथार्च्चोत्तराधिकरणं विकृतौ विचारितायां प्रकृतेर्विषयः ।

अपूर्वे त्वविकारो ऽप्रदेशात्प्रतीयेत ॥ २० ॥

यदि पत्नी प्रातिपदिकार्थः प्रधानं बलवत्तत एकद्विपत्नीकेषु प्रयोगेषु प्रातिपदिकार्थे इत्येतयोः साधिकरणे वर्णितं तथा ऽपि कथं चिदेकवचनं विवक्षितमित्यदृष्टार्थमेकवचनमुच्चारितं न समवेतसङ्ख्याविधानार्थं, द्विबहुत्वस्यानभिधानात् । यत्र चान्यत्राभिधानविप्रतिपत्तिस्तत्र पाशन्यायः । यत्र त्वेक एव मन्त्रः तत्र पत्नीन्यायः, पवित्रे स्थ इति यथा । ननु पवित्रयोरुपादीयमानत्वाद्विवक्षितं द्वित्वम् । उपादीयमानतया पाठ्यतां तयोरिति न वयं द्वित्वविवक्षां वारयामः । किं तर्हि ? तव समवेतवचनेत्याह— विवक्षितः प्रयोजनमिति ।

उक्तं च तत्त्वमस्य ॥ २६ ॥

व्रीह्याकृतिव्यक्तिसादृश्यानां च व्याख्यानं तत्रैवोक्तम् । व्रीहीणां मेध इत्यस्य प्रियङ्ग्वादिषु कथं प्रयोग इति चेद्यदि

व्रीहीणां विकारस्तत ऊह्यो, यदि यवानां; ततो ऽनभिधानमेव ।

इति प्राप्ते ब्रूमः । कण्वरथन्तरवदुभयविकारो ऽयं उभयधर्माणां ग्राहक इति ।

मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्यायनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥

मेधमित्यत्र चत्वारः पक्षाः अविकारेणोभयोः प्रयोगो व्यवस्थया च द्विवन्निगदो देवतायामेकवन्निगदो देवतायां यजमाने उभौ वा स्वामिपरौ । द्विवन्निगदः । यद्यपेक्षया उभौ वा देवतापरौ सङ्घातापेक्षयैकवचननिगद इति । तत्र तृतीये पक्षे दोषमाह——उत्कर्षो देवतायां स्यादिति । देवतावचनस्योत्कर्षः प्राप्नोति । एकवन्निगदो ऽसौ एकदेवतेषु पशुष्विति तयोः समवायमनालोच्य यत्रास्ति प्रधानभूतः प्रातिपदिकार्थस्तत्र गुणभूतं वचनं नियम्यत इति सयातस्य देवतात्वमदृष्टैव ।

सिद्धान्तस्तु देवतादिविवक्षा । स्वामिपक्षे चाऽऽग्रर्थ एव तावद् घटते । आशानपदानर्थक्यात् । अपि च वर्धमानाय मेधपतये वो यो मेधस्तं मेध्यादुरोपसर्गद्वारमनुपनयत किमर्थमिति प्रयोजनार्थत्वादसमर्थो वाक्यार्थः । न च मेधमनूद्य किं चिद्विधीयत इति । इतरथा मेध्याया उपनयत मेधपतये मेधं कर्तुमित्येवमास्रामुपपन्नो वाक्यार्थः । ते च परकीया देवतायै कर्तुं शक्यन्त इत्यर्थाद्यो ऽयं यजमानस्येति ।

नियमो बहुदेवते विकारः स्यात् ॥ ४१ ॥

सिद्धे ऽपि पूर्वाधिकरणस्य पूर्वपक्षे सा क्रियते पदासङ्गतेः। ननु प्रवृत्तौ द्वित्वस्याविवक्षितत्वादिति अयमपि चार्थः प्रायेण गतः। एकत्वे ऽपि गुणानपायादिति किन्तु तत्रैकत्वस्याविवक्षोक्ता स एव हेतुर्विवक्षायामपीति। तस्मात्पूर्वस्यैव तत्प्रयोजनाधिकरणान्तरस्यौपोद्घातिकमिति।

इति नवमाध्यायस्य तृतीयः पादः।



# अथ चतुर्थः पादः ।

षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद् गुणस्य प्रविभक्तत्वादविकारे हि तासामकात्स्न्र्येनाभिसम्बन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥

अस्मिन्नधिकरणे पञ्च पक्षाः । पक्षस्य वचनव्यक्तिर्निरूप्यते । षड्विंशतिरिति त्रिपदं वाक्यम् । तत्राद्यः पक्षसम्बन्धप्रधानः । षड्विंशतिरस्येत्यनयोर्यत्सम्बन्धाद्यच्छब्दो नास्ति वाचकः,येनासावुच्येत तत्प्रधानं,स प्रकाश्यः । तत्रार्थात्सम्बन्धिनावभ्यस्येते । एवमल्पमप्राकृतं भविष्यतीति । वङ्क्रीशब्दश्च षड्विंशत्यर्थो द्रष्टव्यः ।

द्वितीयः पक्षः । प्रकरणे ऽयं मन्त्रः प्रमाणान्तरेण प्रकाशितमर्थं प्रकाशयति; न प्रकाशितस्य प्रकाशान्तरेण प्रयोजनमस्ति । एवं च यत्प्रकृतौ कृतं तद्विकृतौ भवति न किञ्चिद्बाधितम् ।

तृतीयः पक्षः । षड्विंशतिशब्द उभाभ्यां विशेष्यते । सो ऽत्र प्रधानभूतः । तयोश्चैवेष द्वितीयः प्रकाश्येत न चाविकृतेन षड्विंशतिशब्देन पक्षः प्रकाशयितुम् । तस्माद्वचनोहः । एवमल्पं विकृतं भविष्यति । ननु षड्विंशतिशब्दप्राधान्ये वङ्क्रीणां प्राप्यमाणानां प्राप्नोतीति को ऽभिप्रायः ? द्वेधा हि सङ्कल्पाश-

ब्दाः। प्राग्विंशतेः सङ्ख्याप्रधाना, ऊर्ध्वं विंशतेरुभयप्रधानाः। तत्र यदा सङ्ख्या ऽऽत्मानमुपसर्जनीकृत्य सङ्ख्येये वर्तते, तदा विना षष्ठ्या सामानाधिकरण्यं नास्ति। विंशतिर्गवामिति यथा। इह च सङ्ख्या प्रधानभूता बह्व्यश्च प्रथमान्ताः। कथं विना षष्ठ्या सामानाधिकरण्यमित्यभिप्रायः। परिचोदयतः—अत्र लक्षणया सामानाधिकरण्यं वाक्येनेत्यर्थः। दृश्यते च प्रयोगः यथेन्द्राग्नी देवतेति। यदा देवतात्वेन गुणो विवक्षितो भवति, न च प्रधानभूतस्तदा ऽपि विनैव षष्ठ्या सामानाधिकरण्यं दृश्यते। तथा हि। देवदत्तविष्णुमित्रयज्ञदत्ताः पर्षदत्र। पर्षच्छब्दश्च प्रधानभूतः। इतरे देवदत्तादयः शब्दास्तद्विशेषणत्वेन, तथा ऽपि विना षष्ठ्या सामानाधिकरण्यम्। ननु सम्वत्सरविशेषणार्था। तथा सति पञ्चशब्दो ऽकिञ्चित्करो भवति। पञ्चाशच्छब्दस्तु विशेषयन्नप्यर्थवान्। तस्मात्सङ्ख्या प्रधानभूता।

चतुर्थपक्षः। वङ्क्रीशब्दो ऽस्य विशेषणम्। सङ्ख्या ऽपि। अस्यशब्दः षष्ठ्या परार्थः कथं प्राधान्यं प्रतिपद्यते? आह—यथेन्द्रस्य तु वीर्याणि प्रोवास्ति न च परार्थः। लोके च यथा चित्रगुरानीयतामित्युक्ते षष्ठीनिर्दिष्टो ऽपि प्रधानम्। एवमिहापि यत्र द्वौ पशू विद्येते तत्र द्वयोः प्रकाशनं कर्तव्यम्। तथा ऽस्यशब्देन च क्रियते पशुचोदितः। स च प्रकाशयितव्यः।

सिद्धान्तस्तु उभाभ्यां वङ्क्री यत्र परिच्छिद्यते एतावन्तो ऽस्य वङ्क्रय इति। नन्वसमासमन्तरेणैवन्ता शक्या वदितुम्। यत्रावयवेषु प्राधान्यं तद्यज्ञपतिशब्देन प्रत्युक्तम्। यज्ञपतिशब्दविशेषणतया स एव दोषः। अदृष्टार्थता वा। न च सर्वं प्राकृतमदृष्टार्थम्। अदृष्टार्थतैव दोषः। सत्यम्। दृष्टार्थत्वाय न

च सम्बध्यः। वचनेन चोदितो यः स प्रकाश्यते। अदृष्टार्थता ऽवस्थितैव। प्राकृतशब्दबाधश्च। ता अनुष्टुभो स्यावयतादिति च सर्वनामशब्दो वङ्क्रीयप्रत्यवमर्शकः। यद्यस्यपदाभ्यासस्तानिवीत प्राप्नोति यदि सङ्ख्यायास्ता इति।

अपि त्वसंनिपातित्वात्पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥

प्रकरणे ऽध्रिगुप्रकरणे समाम्नाता। प्रकरणेनोपकर्तव्यम्। तत्कथं यदा शक्नुयार्त्विक तु शक्नोत्ययमिति क्रियाप्रधानेन यथा समाम्नातैः पदैरभिधानं तत्र वङ्क्रिषड्विंशत्यभिधानाददृष्टम्। यथा प्रकृतौ तथा विकृतावपीति।

विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥

उच्यते। यदि वङ्क्रीषड्विंशत्याः समवेतार्थता नाभविष्यत्ततो दृष्टार्थतामवकल्पयेम। अस्ति तु समवेतो ऽवदानसम्बद्धो वङ्क्र्यर्थः। स च स्वभावात्षड्विंशत्यैव परिचितः। तस्यादातुः संस्कारे दृष्टार्थमेव। प्रकरणमिव तासामपि गुणत्वात्प्रकाशनम्। प्रकृतौ तद्वदपीति।

आम्नातस्त्वविकारात्सङ्ख्यासु सर्वगामित्वात् ॥ १२ ॥

ननु षड्विंशत्यभिधाने वङ्क्री प्रथमा न प्राप्नोति। को ऽर्थः? गुणवचनो हि कश्चित्संसृष्टगुणवचनो भवति द्रव्येण। यथा शुक्लः पट इति। कश्चिन्निष्कृष्टगुणवचनो; यथा शौक्ल्यं पटस्येति। तत्र प्राग्विंशतेः संसृष्टगुणवचनः। पञ्च गावो, दश गाव इति। विंशत्यादयस्तूभयवचनाः। यदीह द्रव्यं प्रधानं, वङ्क्रय इति प्रथमाबहुवचननिर्देशात् षड्विंशतिशब्देनापि प्रथमा-

बहुवचनान्तेन भवितव्यम् । आश्रयतो लिङ्गवचनानि भवन्ति । इति दुष्परिहरश्चायम् । अतो ऽन्यः पक्ष आश्रीयते । निकृष्टो गुणः प्रधानभूतः षड्विंशतिरित्यभिधीयते । नन्वेवं वङ्क्रय इति प्रथमा न प्राप्नोति । षष्ठ्या भवितव्यम् । उच्यते । शक्यपरिहारमिदं चोद्यते । परिहृतं भाष्यकारेण ।

सङ्ख्या त्वेवं प्रधानं स्यात् वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥

इत्युक्तम् । नन्वेवं सति षड्विंशतौ बहुवचनं प्राप्नोति । उच्यते । उभयं प्रातिपदिकेनोपात्तं बहुत्वं विशेषश्च तत्र वङ्क्रय इति यदुक्तं बहुत्वं यच्च विंशतिप्रातिपदिकगतं विशेषरूपं तयोरेकं वङ्क्रिद्रव्यमधिकरणम् । अतस्तयोर्विशेषणविशेष्यभावो युक्तः । यत्तु षड्विंशतावेकवचनं तदुक्तं विशेषणस्यैकत्वात् । स्वभावाद्विंशत्यादीनां स्वाभिधेयसङ्ख्याग्राहित्वमेव । न तु द्रव्यसङ्ख्याग्राहित्वम् । यद्यपि विंशतिर्गावो गच्छन्तीति द्रव्यमेव प्रधानं बहुवचननिर्देशात् । सङ्ख्याप्राधान्ये हि तस्यैकत्वाद्गच्छतीति प्राप्नोति तत्पक्षे ऽपि तुल्यम् । सङ्ख्याप्राधान्ये हि वङ्क्रिषु बहुवचनं न स्यात् । सङ्ख्याविशेषणत्वात् । अथ बहुवचनान्विताभिर्वङ्क्रिभिः यश्च तत्र षड्विंशतिसङ्ख्या लक्ष्यते । ममाप्येकवचनान्विता षड्विंशतिः वङ्क्रीविशेषणम् । अथ वा षड्विंशतिप्रातिपदिकेनोक्तत्वाद्बहुवचनम् । निर्देशार्थमेकवचनमेव युक्तमिति । ननु द्वौ बहव इत्यादौ प्रातिपदिकेनोक्तत्वाद्द्विवचनबहुवचने न प्राप्नुतः । उच्यते । तद्वक्ष्यामो; नेहातिप्रसङ्ग इष्यते ।

अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥

अयं तावत्सिद्धान्त एव । चतुस्त्रिंशद्वाजिन इत्यनया ऽवश्यं वङ्क्रीयत्ता प्रकाशयितव्या ऽऽनर्थक्यभयात् । प्रकरणानुमितेन वाक्येन प्रापितत्वात् । ननु प्रतिषिद्धयं न चतुस्त्रिंशदिति । उच्यते । विधिपूर्विकेयं प्राप्तिरिति विधिप्रतिषेधयोर्विकल्पः षोडशिवदिति पक्षे तावदनया प्रकाशनम् । यच्चवर्थोऽप्राप्ति तत्प्रतिषेधेन बाध्यते । यथा व्रते ऽहनि मांसाशनः । नन्विहानुमानिको विधिः प्रत्यक्षेण प्रतिषेधेन बाध्यते । उच्यते । न विधिर्यदि बाध्येत । अपि वा ऽन्यदेतदानुमानिकम् । इदं तु प्रत्यक्षविधिना विधिवत् न बाधितुं शक्यते । एवमुभयप्राप्तौ स्थितायामुत्तरा चिन्ता । न चैत्पूर्वपक्षसूत्रं समाम्नायस्य बलवत्त्वात्तथा पक्षव्यावर्तकस्य तुशब्दस्य चोत्तरत्राभावात् । तत्प्रतिषिध्यैवं श्रूयते । न चतुस्त्रिंशदिति ब्रूयात्षड्विंशतिरित्येव ब्रूयादिति । तत्र संशयः । किं समस्तङ्क्रं प्रतिषिध्यते । अस्यापि समस्य वचनं चतुस्त्रिंशत्पदप्रतिषेधः । अश्वस्य वैशेषिकवचनं षड्विंशतिरिति तत्र सिद्धान्तेनोपक्रमः । तत्प्रतिषिध्येति । ननु षड्विंशतिरिति ब्रुवन् निगदे षड्विंशतिरिति चोदयति पूर्वपक्षवादी । तस्य कर्मानुष्ठानं तूपरगोमृगयोः सामासिकवचनमन्यद्वा यवासादनयोर्बर्हिष इत्यश्वस्य तु विशेषितं वचनमन्यत् । षड्विंशतिरस्य वङ्क्रय इति । तदितरः प्रत्याह । मा ऽयं विधीयत इति । शक्यश्चात्रान्यतरानुवादः । यदि तावत्प्रतिषेधो विधीयते क्वचि प्राकरणिकायां प्रतिषिद्धायां यदन्यचोदकप्राप्तमियत्तावचनं तत्स्वयमेव भवति । षड्विंशतिवचनमनुवादः सद्धैव कारिण्या षड्विंशतिरियत्ता विधीयते । न चाशिक्षाचोदकप्राप्तत्वात् एवकारो पूर्वत्वार्थः । एवकारस्त्वर्थप्राप्तः स विधीयते । तस्य परिसङ्ख्यारूपो ऽर्थः । यद-

स्यप्राकरणिकं प्रतियोगि तत्र भवतीत्येवमन्यतरस्यातित्रावत्वे ऽवश्यम्भाविनि ऋचा प्रतिषेधविधानं मुख्यत्वादितरस्य चानुवादो जघन्यत्वात्प्रतिषेधः स्तुत्यर्थ इति ।

ऋग्वा स्यादाम्नातत्वाद्विकल्पश्च न्याय्यः ॥ १९ ॥

वाशब्दात्पक्षान्तरम् । आम्नाता हि अवागप्रतिषिद्धा वाक्येन । उच्यते । यदि विकारं वक्ष्यामः । तस्यानुवचनादेवतः । ननु श्रुत्या षड्विंशतिविधानेन कार्य्याद्विधानाविदोषः स्यात् । उच्यते । एवंत्वप्रतिषेधकार्य्यापत्तिप्रदर्शनाय भविष्यति । अथ षड्विंशति वाजिनो देवबन्धोर्वङ्क्रीः सर्वासंबद्धत्वेनाद्यत्वादेवायं सहस्रमानव इतिवत् । यत्र त्वनाद्यं गृह्यते न स शक्नोति पराणि लक्षयितुमर्थो नामसम्बन्धात् । नियमावृत्तिभयात्स्वयमेव ततः परं कार्येण प्रयुज्यते । अतश्चाश्वस्य चतुस्त्रिंशदिति पक्षसूत्रं नियमेन । अङ्गे च वक्तव्येति तत्प्रतिषिद्धेति सिद्धान्तो नियममेव वारयति प्रासङ्गिकादर्थादर्थो नाम्ना बुध्यते । अनुगते इष्टिः कार्या न वेति । कुतः संशयः ? वाक्यात्पदाद्वा ? किमुद्वानमग्निविशिष्टं निमित्तं, अथ वा ऽग्निरुद्वानविशिष्ट इति तत्रोद्वाने निमित्त आश्रीयमाणे सत्तया क्रिया निमित्तं स्यात् । अग्न्येकदेशे वर्तमानपटदाहवत् । न च काष्ठावयवेष्वग्नियुक्तेषु कदा चिदुद्वानं नास्तीत्यविशेषणमेव । अग्निस्तु निमित्तं विशेषः क्रियया व्याप्यमान एव पटो रक्त इतिवत् निमित्ततां बिभर्ति नाव्याप्यमानः । स कदाचिद्व्याप्यमानः स कदाचिद् व्याप्यते इति युक्ताग्निनिमित्ताद्वाक्येनाप्यफलं वेदं कर्मप्रकरणादग्निहोत्रस्योपकुर्वदुद्वाननिमित्तकमाराद्दुपकारकं प्रयाजादिवत्स्यात् । न विशेषणस्याग्नेस्तद्भवितुमर्हति । सामवायिकं च स्विष्टकृद्वाक्येनाग्न्यर्थम् ।

निश्चस्य प्रधानं तदा ऽग्निः शक्यः सम्बन्धयितुमुद्धानेष्टया वा एवं सन्देहः । उच्यते । निमित्तमारादृत्तिदशार्थेन कर्मत्वविति पूर्वः पक्षः । आरादुपकारकेभ्यः सामवायिकानि गरीयांसीति उद्धानव्याप्तस्याग्निहोत्रार्थस्याहवनीयस्योत्पत्त्यर्थमिति ।

धारणे च परार्थत्वात् ॥ २९ ॥

पूर्वपक्षिकालक्षकस्योपकारलक्षणं तदर्थमिति कृत्वा प्रत्येकसमुदायसम्बन्धाभिप्रायः देवदत्तयज्ञदत्तभोजनवत् । यद्धि तैः सम्बद्धं तदन्यतमेनापि । ये तु समुदायार्थं पर्षद्भोजनमिव तदन्यतरार्थमिति न शक्यते वदितुम् । न चाऽसौ विधीयते । तस्मात्प्रत्येकं समुदायाग्निहोत्रार्थं तदुद्धरणमिति ।

सिद्धान्तस्तु श्रुत्यादिलक्षणं तादर्थ्यं गतश्च नोद्धरणं प्रयोजयति । धारणं हि तस्य नैमित्तिकं तत्प्रतीक्षते । यावत्कर्मणा उद्देशेनोद्धरणं कृतं तदर्थमेव भवतु, प्रसङ्गादन्यस्योपकरोति । तस्मात्तदर्थं उद्धृते अग्निहोत्रार्थं प्रायश्चित्तमिति ।

यदि पुनः सायमग्निहोत्रार्थमुद्धृतेन तच्छ्रियो धारणं भवति प्रातरग्निहोत्रकाले चोद्धरणं, ततः किं, प्रायश्चित्तं भवति न वा ? भवतीति ब्रूमः । सकलनिमित्ताभावात् । न वा न त्वसावग्निहोत्रमात्रायोद्धृतः । किं तर्हि ? अग्निव्यपेक्षायां व्यक्तिमाश्रित्योद्धृतो ऽसौ । सा समाप्तैव । प्रातः प्रयोगः प्रसङ्गात्त्वेति । तच्चैतत्कर्मार्थं धारणं पुरुषधर्मो ऽयम् । गतश्रीयोगात् ।

अभ्युदये दोहापनयः स्वधर्मा स्यात्प्रवृत्तत्वात् ॥ ४१ ॥

एते द्वे सूत्रे तुशब्दवाशब्दरहिते पूर्वपक्षधर्मवती दधिपयसी प्रतिपादयतः । उत्तरे द्वे सूत्रे वाशब्देनैतं पक्षं व्यावर्तनप्रदानधर्मैर्युज्येते । दधिपयसी इति स्थापयतः ।

एवं सूत्रकारप्रस्थानमपास्य वृत्तिकारः षष्ठाविरोधिनीं व्याख्यां चकार । तत्रायुक्तं तदेवैवमामावास्यं कर्म केवलं तद्द्रव्यं देवतातो ऽपनीतं देवतान्तरेण युज्यते ऽनपनीतया-गार्थत्वमेव सत् तस्य कथं यागधर्मा न स्युरिति । अतः पूर्वाधिकरणसिद्धान्तेन पूर्वपक्षस्य कृतस्यैते सिद्धान्तसूत्रे । उत्तरे अप्येवमेव । पूर्वं पूर्वस्य पूर्वस्य न्यायस्यापवादतया चोत्तरोत्तरमधिकरणमिति युक्ततर आरम्भः । इतरथा ऽभ्युदयोदाहरणं ह्ययमत्र स्यात् । आयस्तु स एवेति । पर्ण्याभि, शेषं संस्थापयतीति लिङ्गदर्शनमेतदुपरितनाधिकरणव्याख्यानेन शुध्यति । तत्कथमिति । आरण्योत्सर्गासमानश्रुतिकं त्वन्यत्पात्नीवतं कर्म । तत्रैतमाज्येन शेषं स्थापयतीति तत्र परिसमाप्तत्वात्त्वाष्ट्रकर्मणः शेषशब्दो ऽनुपपन्नः । तदभावाच्च संस्थापयतिरप्यनुपपन्नार्थ एव धातुः । प्रत्ययस्तु शुद्धो ऽवशिष्यते । शेषमङ्गयतेरभावात्करणार्थो ऽप्यनुपपन्नार्थ एवाज्येनेति परिशिष्टमाज्येनेति । एतयोः सम्बन्धे कर्तव्यतावचनेन स्पृश्यमानमाज्यमीप्सिततमं भवत्याज्यं कुर्यादिति । न चैतत्केवलाज्योत्पत्तिविधायकम् । आनर्थक्यात् । अतः प्रयोगवचन उपपदाभिलाषासन्निहितेन पात्नीवतपदेन न सम्बध्यते । द्रव्यदेवतासंयोगाच्च यागः । स चारम्भवान्समाप्तिमांश्चेत्यर्थात्तदङ्गभावो नाव्यभिचारसंस्थाधातुरुपादीयते । निर्वपतिवत्सौर्ये । स पशुयागादकल्प्येतिकर्तव्यतावांस्तदनन्तरं च क्रियमाणस्तच्छेष इवेति शेषशब्दो ऽर्थवान् । तत्सम्बन्धात्तृतीया युक्तैव । शेषसंस्थेयमयुक्ता । यदि पूर्वापि याग एव; अथ द्रव्योत्सर्गस्ततो न युज्यते । तदुच्चारण्येऽप्यपीति सिद्धम् ।

इति नवमाध्यायस्य चतुर्थः पादः ।
समाप्तश्च नवमो ऽध्यायः ।

# अथ दशमो ऽध्यायः ।

विधेः प्रकरणान्तरे ऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥

सप्तमेनातिदेशस्तत्र व्याख्याताः । दशमेनेदानीं किमतिदिश्यत इति व्याख्यायते । यत्प्रकृतौ विद्यते तदतिदिश्यते । तस्यां च शास्त्रपदार्थोपकारा विद्यते ते ऽतिदिश्यन्ते । तस्माल्लुप्तार्थमप्यं प्रवर्तते ।

अपि वा ऽभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात् ॥ २ ॥

अर्थलुप्तं न प्रवर्तते । कथम्भावो ऽयं लौकिको वैदिकश्चोपकारमेवापेक्षते । उपकारद्वारेणोपकारकप्रवृत्तिः । तस्माल्लुप्तार्थस्य निवृत्तिः ।

ननूक्तं प्रकृतौ शास्त्रपदार्थोपकारा विद्यन्त इति । उच्यते । सौर्ये उच्यमाने नाग्नेयविध्यन्तं गृह्णाति । आग्नेये चोपकारा अनन्तराः । व्यवहिताः पदार्थाः, व्यवहिततराणि शास्त्राणि । अतः कथम्भावो ऽनन्तरानुपकारान् पश्यति, तांश्च गृह्णाति । पदार्था उपकारैर्व्यवहिताः । न चापेक्षिताः । ननु प्रकृतौ पदार्था एवानन्तराः ते प्रथमं गृह्यन्ते पश्चादुपकाराः कल्पिताः । विकृतावपि तथैव युक्तमिति । सत्यम् । प्रकृतौ पदार्था गृह्यन्ते, न तु पदार्थापेक्षया; किन्तूपकारापेक्षया । स एष कथम्भावः श्रुतोपकारान् गृह्णाति, लक्षणया पदार्थान् । श्रुतिश्च लक्षणाया गरीयसी ।

इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेताऽऽरम्भस्य प्रधानसंयोगात् ॥ ४ ॥

सङ्कल्पो ज्योतिष्टोमस्य न दक्षिणाया दानम् । अथौदासीन्यप्रच्युतिः सापि तस्यैव । अथ न प्रथमः पदार्थः सोऽपि तस्यैव । प्रसङ्गेन दक्षिणाया दानम् । न चाधानं प्रथमः पदार्थः ।

उच्यते । तदपि तस्यैव । प्रसङ्गेन दक्षिणाया दानम् । यथा प्रासङ्गिकेषु न ज्योतिष्मता एवमारम्भणीया ऽपि । न च प्रकृतावग्न्यन्वाधानं प्रथमं, पाठेनैव तत्प्रथमम् । पूर्वं क्रियमाणं कर्मान्तरमस्याः पदार्थः प्रथमः । प्रणयनं तस्य प्रकृतौ । नेवमङ्गभावेन दृष्टा । अलुप्तोपकाराश्च पदार्थाः प्राप्यन्ते । यथा यूपायाञ्जन आज्ये संस्काराः क्रियन्ते एवं दीक्षणीयादिष्वारम्भणीया ।

अपि च दीक्षणीयावज्ज्योतिष्टोम आरम्भार्थः सिध्यतीत्ययुक्तो ऽयं ग्रन्थः । पुरुषसंस्कारद्वारेणोपकरोति दीक्षणीया । न चास्या वचनमस्त्यारम्भकार्ये वर्तते दीक्षणीयेति । दीक्षासम्बननमस्या उत्पत्तिवाक्येनैवावगम्यते । तस्मादाग्नावैष्णववस्तुत्यर्थो ऽयमर्थवादः ।

प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥५॥

सर्वारम्भार्थो न ज्योतिष्टोमः समाम्नायत इत्ययुक्तो ज्योतिष्टोमः । श्रुत्या फलेन संबध्यते । न चोभयार्थता युक्ता विना वचनेन । अनुमानाद्यपि कार्यापत्तिप्रमाणं न विद्यते । तस्मादयुक्तप्रत्याम्नानाभिधानम् । अर्थलोप एव वक्तव्यः । ननु

ऋत्विग्वरणं सर्वप्रधानार्थम्। तत्र प्रधानत्वादिष्टीनामारम्भणीया भविष्यति।

उच्यते। तथापि त्वप्राकृतकार्यत्वान्निवृत्तिः। यथा यूपावटबर्हिषी प्रोक्षणस्य।

तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥

समानं हन्त सामर्थ्यम्।

न वाङ्गभूतत्वात् ॥ ७ ॥

अङ्गभूता हि सा दर्शपूर्णमासयोः। अङ्गभूतस्य प्रधानारम्भेणैव सिद्धिः। यद्येवं दीक्षणीयादिवन्मन्यसे, तन्न। कस्मात्? दर्शपूर्णमासप्रयोगाद्बहिरारम्भणीया क्रियते। न तथा दीक्षणीयादि। तस्मादयुक्तमेतत्। अङ्गे चायम्। कथम्भावपरिपूर्णा ऽऽरम्भणीया विधीयते। सा च दर्शपूर्णमासधर्मानाकाङ्क्षति। तौ च प्राग् विधानादारम्भणीयाशून्यौ।

समाख्यानं च तद्वत् ॥ १२ ॥

स्थाणवाहुतिरिति षष्ठीसमासो ऽयं सप्तमीसमासानुपपत्तेः। कथं? सप्तम्या तस्य शौण्डादिभिः सह समासः। ननु संज्ञायामिति समासो भविष्यति। उच्यते। तत्राऽलुक् प्राप्नोति। यथा ऽरण्ये तिलका इति। नैतदेवम्। हलदन्तात्स उच्यते। उकारान्तं चेदम्। तस्मात् लुगेव। एवं तर्ह्यन्यथा नियमः। अर्थप्रयुक्तो हि समासः। सप्तमीसमासो ऽधिकरणप्रधानो निर्देशः। तत्राहुतिरारादुपकारिका। षष्ठीसमासे सम्बन्धः प्रधानम्। तत्राहुतिः संस्कारिका। आरादुपकारकाच्च सामवायिकं गरीयः। ननूभयथा ऽप्यदृष्टार्था। किमत्र गरीयस्त्वम्? उच्यते।

सत्यमदृष्टार्था । किन्तु समवायः सम्बन्धः क्लृप्तः, आरादुपकारकत्वे कल्प्यः । तत्र प्रकरणेनैकवाक्यता ।

प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥

ननु पूर्वपक्षे ऽपि संस्कारकर्मैव । अन्यत्र स्वाहाकारो विहितः । तस्य स्मारको भविष्यति । नारिष्ठहोमादिषु, नशब्दपदार्थनिर्देशात् । शब्दो ह्यर्थस्य स्मारको; न शब्दस्य । स च स्वाहाकारमन्त्रेणैव चोद्यते । वाचनिको ऽयं देवताविधिः । करणेन मन्त्रेण देवता ऽवगम्यते । यथा सूक्तवाकेन प्रस्तरमिति । न चायं करणनिर्दिष्टः । ननु चाविशब्दः स्वाहाकारं न शक्नोति वक्तुम् । उच्यते । शक्ष्यति, अर्थत्वात् मातृवदिति । सद्वितीयान्तेन शब्देन देवतोद्दिश्यते प्रमाणाभावात् । अपि च स्वाहाकारः शब्दपदार्थको न शक्नोति देवतां वक्तुम् । तस्मान्मान्त्रवर्णिको देवताविधिः । प्रकरणात् क्रमसंहितात्करणभावो गम्यते । स्मरणं च प्रधानदेवतापेक्षितं तनैवांशेन सम्बध्यते । आज्यभागौ देवतामपेक्षते, प्रधानयागो देवतास्मारकम् । तत्र यागो देवताया विना न भवति । ननु प्रधानदेवताज्यभागमेव स्मारकम् । तस्माददृष्टार्थ आज्यभागयागः । अस्मिन्व्याख्याने स्वाहाकारो ऽप्येवमेवापद्यते यदि कश्चिद् ब्रूयात् । तस्मिन् मन्त्रे वक्ष्यमाणा देवता विद्यन्ते । तस्मात्संस्कारको ऽयं न स्वाज्यभागे । सत्यम् । विद्यते निर्वर्त्यांशेनैव यागो गुणभूतां देवतामाकाङ्क्षति । तस्मादाज्यभागस्वाहकारयोस्तुल्यत्वात्कथं स्वाहाकाराधिकरणम् ?

उच्यते । यागो हि निर्वृत्तः सन्निपरिहृत्य देवताप्रकाशनद्वारेणैवोपकरोति । तस्याः प्रकाशनमपूर्वेणैवापेक्ष्यते । वदस्य

दृष्टमेव प्रयोजनं; न त्वाज्यभागे ऽपीदृशमेव प्राप्नोति । सत्यं वि-षमात्तादृशमेव । अपूर्वेण नापेक्ष्यते । आज्याभागाविति द्वि-संख्याश्रूयते । सा च केन चित् समानयोगेन प्रवर्तते । तत्र सोमस्तावद्वारादुपकारकः । यद्यप्यग्निरपि, एवं द्विसङ्ख्या यु-ज्यते; नान्यथा ।

पशावपीति चेत् ॥ ११ ॥

अपि च यस्य प्रधानभूता देवता तस्य धर्मा एव न प्रा-प्नुवन्ति । तत्रानिरुक्तः स्विष्टकृदिति दर्शनं नोपपद्यते । कथं धर्मा न प्राप्नुवन्ति ? उच्यते । विकृतौ सादृश्येन धर्मप्राप्तिः । विसदृशयोस्त्वग्नीषोमयोः प्रकृतौ गुणभूतयोरग्नीषोमयोर्धर्मा विहिता विकृतौ प्रधानभूतयोरित्येतद्विसदृशम् ।

अयमभिप्रायःपरिचोदयतः ।

अभ्यासो वा प्रयाजवदेकदेशो ऽन्यदेवत्यः ॥ ३३ ॥

अस्यां चोदकेन पशुदेवता प्राप्नोति पशुपुरोडाशश्च । तत्र पशुदेवतायां द्रव्यान्तरं विधीयते । पशुपुरोडाशस्य देव-तान्तरम् । यागस्त्वविकृत एव वितिष्ठते । यथा ऽभ्युदिते-ष्ट्यां सो ऽभ्यस्यते । यथा सोमयागः ।

इमे सूत्रभाष्ये अयुक्ते । अस्यां सौत्रामण्यां पशुयागा आम्नायन्ते । देवतासंस्कारेण च पुरोडाशाः प्राप्नुवन्ति । तत्र वाचनिको ऽयं देवताविधिः । तस्मादप्राकृतकार्याःपुरो-डाशयागाः । वचनसामर्थ्यात् । यो ग्रहो देवतासम्बद्धः स पशुपुरोडाशयागेन न सम्बध्यते । कथम् ? अविपरिवर्तमान-त्वात् । कथं न विपरिवर्तते ? अविधानात् । कथमविधानम् ? अत्रोपकारा अतिदिश्यन्ते । यत्र प्रकरणं तत्र विपरिवृत्तिः । एतच्च

प्रकृतौ। अभ्युपेत्य ब्रूमः । अस्ति प्रकरणं विपरिवृत्तिश्च। तथाऽपि न सम्बध्यते । नैतत्सोमयाजिना तुल्यम् । तत्र सोमेन यजेतेति सोमविशिष्टो यागो विधीयते । ऐन्द्रवायवादीनि ग्रहणानि सोमयागद्रव्यस्यैव संस्कारकाणि । तानि च ग्रहणानि प्रकरणेन गृह्यन्ते । अर्थात्तत्र यागाभ्यासः । इह पशुपुरोडाशयागद्रव्यस्य ग्रहदेवतया न कश्चित्संस्कारः क्रियते । तस्माद्यागान्तरानर्थाभ्युदितेष्टिवद्भविष्यति । नैतदभ्युदितेष्ट्या तुल्यम् । तत्र निमित्ते सति विभागो विधीयते। यागस्तु विद्यत एव। न त्विह तथा विभागवचनं,येनाभ्युदयेष्ट्या तुल्यं स्यात् । ननु प्रत्यक्षः पशुपुरोडाशयागः। आनुमानिकस्तु देवतासम्बन्धेन यागः,तस्मान्न यागान्तरेणानदेवम् । यद्यस्मिन्यागे येन केन चित्प्रकरणे निवेशः स्यात् । तद्यदि यागान्तरं न लभ्येत, यदि च प्रत्यक्षे यागे सत्यानुमानिको न लभ्येत,तदा दीक्षणीयादीन्यधर्मकाणि भवेयुः । यदि चैको यागस्तदैक एव विध्यन्तः प्राप्नोति । द्वितीयस्य द्रव्यस्य चोदकवत् प्राप्नोति। एकेन प्रधानं भवतु,द्वितीयस्य तु प्रोक्षणादिविशिष्टार्थत्वेन प्राप्नोति। देवतयोस्तु यदि निवेशः स्यात् प्रयाजानुवादेन तु सङ्ख्या विधीयते, तत्र यागान्तराशङ्कैव नास्ति ।

चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥

चरुशब्दस्योभयत्र प्रयोगः । स्थाल्यामोदने च प्रयोगमात्रेणैव शब्दार्थो भवति। अशब्दार्थे हि प्रयोगो दृश्यते । कथं खलु नियमः ? ओदने च संस्मरणं न स्थाल्याम् ।

इति दशमाध्यायस्य प्रथमः पादः ।

# अथ द्वितीयः पादः ।

भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥

भक्षाणां त्रित्वादिकेयं चतुःसूत्री कर्तृसंस्कारार्था भक्षा इत्येतमर्थं प्रतिपादयति । तेन कृष्णलचरौ न प्राप्नुवन्ति । असंस्कारकत्वात् । तस्मादप्राप्तो भक्षो वचनाद्विधीयते हिरण्यस्य ।

एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहितत्वात् ॥ १७ ॥

ननु वाचनिक इह भक्षो, न प्राकृता विहिताः प्राप्नुवन्तीति को ऽभिप्रायो ग्रन्थस्य ? नैते कर्तृसंस्कारकाः । भक्षणकर्ता तु गुणभूतः । प्रधानभूता भक्षाः । कथं ? प्राशित्रमिडामिति द्वितीयान्तो भक्षः क्रियां प्रति प्रधानभूतो ग्रहवत् । कर्ता क्रियायां गुणभूत उपादीयते । न कर्तुः कृत्स्नस्य संस्कारः । दृष्टार्था च कृतप्रयोजनस्य द्रव्यस्य प्रतिपत्तिः ।

ननु कर्तृवत्संस्कारे ऽपि दृष्टं प्रयोजनम् । सत्यमुक्तं तु द्रव्यस्य कृत्स्नस्य संस्कारो न कर्त्तव्यः । अपि च सोमे उपकारो नास्त्यपकारस्तु कदा चित्स्यात् । अपि च कृतप्रयोजनं द्रव्यं प्रतिपत्तिमपेक्षते । तच्च कर्तृषु प्रतिपाद्यते । तस्य यदि कर्तृसंस्कारो ऽपि प्रयोजनमनुनिष्पादीभवेत्तथा सत्यविरोध एव । न तु स विवक्षितः । या चासौ चतुस्सूत्री साऽनेन न्यायेन विरुद्धा । प्रत्याख्यातव्ये च पुरुषापनयो वा ।

यदि ब्रह्मशब्दो ऽनुवादः सर्वमिति विधीयते, तथा मति न ज्ञायते, किं सर्वमिति। अथ यदि ब्रह्मपरिहारशब्दावनूद्यते तथा ऽपि सर्वमिति न विधीयते । यदा कस्य विहारस्य परिहारः प्राप्तः कस्य चित्तदा विधानमुपपद्यते । सर्वेषां तु ब्रह्मवादानां परिहारः प्राप्त एव । अथ ब्रह्मणो सर्वमित्यनूद्य परिहारो विधीयते, तथा ऽपि प्रथमपक्षे यो दोषः स तृतीये । तस्मात्सिद्धान्ते प्रथमपक्षं विधीयते ।

उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥

न च सत्रस्योदवसानीयाङ्गत्वम् । लक्षणा हि तथा स्यादिति को ऽभिप्रायः ? न सत्रर्मास्मन्वाक्ये विधीयते । न च सत्रं क चिन्न सत्रे किं चिदिति सत्रं परार्थमुच्चार्य्येत । तत्रैषा लक्षणा स्यादित्ययमभिप्रायः । वाजपेयेनेष्ट्वा सत्रादुदवसायेति च तुल्यम् । यच्च पूर्वपक्षं करोति उत्तरःपक्षः नैतयोस्तुल्यता वाक्ययोः । वाजपेयेनेष्ट्वेति निर्वर्त्य पूर्वक्रियामन्यत् क्रियान्तरं विधीयते । तदङ्गतया लक्षणया तु पूर्वक्रियापरित्यागो ऽवगम्यते, न तु क्त्वाशब्देनोच्यते । क्रियाविशेषायैतेषामारम्भानुष्ठानपरिसमाप्तयः । तस्मान्न त्यागः शब्देनोच्यते । तत्पूर्वो ऽवस्यतिः श्रुत्यैव परित्यागं ब्रवीति । कर्मण्यन्यत्र यदन्यद्विधीयते तस्याङ्गता नास्ति । पूर्वकर्मणो निःसमाप्तत्वात् । यद्युदवसायशब्दो ऽनुगृह्यते, कथमङ्गत्वम् ? अथाङ्गत्वमुदवसायेति बाध्यते।

तेषां तु वचनाद्द्वियज्ञवत्सह प्रयोगः स्यात् ॥४१॥

यजेरभित्युपायत्वे श्रुतत्वाद्वचनस्य विवक्षा । मन्त्रितरेत-

रनिरपेक्षास्तथा ऽपि यागे सापेक्षा द्वियज्ञवत् । यथा राजपुरोहितौ फले प्रति प्रधानभूतौ यागं प्रति गुणभूतौ। कथं ? यागो विधीयमानः कर्त्तारमाक्षिपति । तत्र सङ्कल्पे श्रूयते स्वराज्यकामौ यजेयातामिति सैव विधीयते । कर्तृगामिनि क्रियाफले क्रियामकुर्वन्क्रियाफलेन सम्बध्यते इत्यर्थात्कारिष्यति । अस्यामवस्थायां द्विवचनं विवक्ष्यते । यदि च राजपुरोहितौ द्विवचनविशेषणार्थमुच्चार्येयातां, तथा सति यागं प्रधानभूतं न कश्चित्कुर्यात् । तयोर्यागो विधीयते। सापेक्षाश्च कर्तारः । एकशस्तु इतरेतरापेक्षा उदवसाने कर्तारः । कुतः ? अर्थप्राप्तत्वात् । उदवमानस्य भाव्यमानत्वाद्यादृशाश्चोदवसाने तादृशा एव पृष्ठसवनीये । तस्माद् विवक्षितं बहुवचनम् ।

ननु राजपुरोहितवदित्युक्तं यजेरन्निति श्रुत्यैव बहुत्वं गम्यते। सत्यं गम्यते; न तु विधीयते। कथं ? प्राप्तत्वात्। कुतः प्राप्तिः ? क्त्वाप्रत्ययश्रवणात् द्वौ प्रयोगौ गम्येते । ये च पूर्वस्मिन्प्रयोगे कर्तारस्त एवोत्तरस्मिन् । पूर्वस्मिंश्चेतरेतरनिरपेक्षास्तादृशा एवोत्तरस्मिन्प्रयोगतः क्रियाविशेषाद्वा प्राप्तः स विधीयते। तत्रास्मादृत्विजो य एवोदवसाने कर्त्तारस्त एव पृष्ठसवने विधीयन्ते। कुतः ? सामानाधिकरण्यात् । उदवसाय चरन्तीति । यद्वा ऽन्यकर्तारः पृष्ठसवने भवेयुः । सामानाधिकरण्यमुपपद्यते च ।

कामेष्टौ च दानशब्दात् ॥ ४४ ॥

ननु नैवात्र दानं परिक्रयार्थं, दक्षिणाशब्दाश्रवणात् । पृष्ठसवनीये तु विद्यते दक्षिणाशब्दः । कथमेतत् ? उच्यते । भक्षाश्रवणाद्दानशब्दः परिक्रये इत्यत्र दानं परिक्रयार्थं, दक्षि-

णाऽश्रवणात् । पृष्ठशमनीये तु विद्यते दक्षिणाशब्दः । तस्मात्कथमेतत् ? उच्यते । परिक्रयार्थन्यायेन स्थापितं पूर्वपक्षे । तथा च भाष्यं—शब्दश्च कर्मकरेषु सत्सु परिक्रयार्थ इत्युक्तमिति ।

अत्र ग्रन्थः । न चैतत्सत्रमिति को ऽभिप्रायः ? अस्मिन् सारस्वते सत्रे श्रावश्च ते गो श्रयुषी यजमाना पयोरन्होः शिष्टिः स्वाहा सवर्णपूर्णामार्मा एतत्सारस्वतं सत्रं नात्र कामोस्याश्वोवकेन तस्मादङ्गं तदेतत्सत्रमिति ।

इतरो ब्रवीति सत्रस्याङ्गं भवति । साङ्गं च सत्रं कर्तव्यम् । तत्र द्वादशाहप्रकरणाच्च सत्रस्य साङ्गस्य नाङ्गानामिति को ऽभिप्रायः । द्वादशाहे ऋत्विजेषु यजमानाः कर्तारो विधीयन्ते । तेष्वेतत्स्वयंकर्तृकताप्रकरणात्सत्रस्य साङ्गस्य प्रकृतौ येषु कर्तृतोक्ता, इह चोदकेन तेष्वेवाङ्गेषु स्वयंकर्तृकर्तृता प्राप्नोति । कामेष्टिरपूर्वमङ्गम् । न च प्राकृतस्य कार्य्ये वर्तते । योयूपावटस्तरणन्यायः स इहापि । न त्वनेन न्यायेन यूपावटस्तरणे ऽध्वर्युः कर्ता न प्राप्नोति ।

उच्यते । सोमे साङ्गे प्रत्यक्षेण कर्तारो विधीयन्ते । यत्र चोदकेन, तत्र नियतेष्वेव पदार्थेषु नाधिकेषु ।

वचनं वा सत्रत्वात् ॥ ४५ ॥

प्रकृता एव यजमानाः कामेष्टिं करिष्यन्ति लाघवात् । कामेष्टौ प्रत्यक्षेण वचनेन कर्तारो न प्राप्नुवन्ति । चोदकेनापि न प्रसङ्गेनाव प्राप्नुवन्ति ।

द्रव्ये चाचोदनाद्दक्षिणापनयः स्यात् ॥ ४६ ॥

अपि च परिक्रयार्थे सति दक्षिणापनयः स्यात् । चोदकप्राप्ते ऽन्वाहार्य्यो ऽपनीयते । तत्र चोदको बाध्यते । प्र-

त्युक्तो ऽयं ग्रन्थः। कथं? पत्नीसंयाजवेलायामन्वाहार्यो दत्तः। यद्यपि निमित्ते इयमिष्टिर्विधीयते तथा ऽपि तेनैव निर्वृत्तत्वात्सत्त्वैवान्वाहार्य्यः प्राप्नोति।

अस्थियज्ञो ऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ॥ ४७ ॥

यदि स्पर्शो ऽभिधीयेताऽदृष्टं कल्पितं, यजन्तं याजयितुं किमपि भवतीति न च कश्चिद्यष्टुमिच्छेत्। अतो ऽप्यर्थे ऽनुवादः।

क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

काम्यानि तु विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥ ५१ ॥

ननु काम्यानामतिदेश एव नास्ति। सत्यम्। अस्थीनि यजेरन्निति श्रूयते। तत्र कः पुनर्याग इति स्तोत्र इति लिङ्गात्सोमयागः नैष्ठिकः। स च सोमयाग उपदेशेनैतस्य चिन्ता घटते अथ वा द्विकृता चिन्ता।

गुणलोपे च मुख्यस्य ॥ ६३ ॥

ननु समाख्या त्रिकालविषया। सत्यम्। तत्र वर्तमानस्तावत्कालो न सम्भवति। भूतो न विद्यते। भविष्यत्कालत्वन्तु गृह्णीमो निर्वापस्य सगुणत्वाय। उच्यते। भविष्यत्कालतायास्तु भूतकालता न्याय्या। कथमनिशः सम्बन्धः? भविष्यति काले कदा चिदस्याभावात्। पुरोडाशकपाले ऽनुभूतस्य कालस्याभावात्। एवमग्निहोत्रहवण्यपि न भूतकाला पवमाने-

ष्टिनः प्रकृतौ वाऽग्निहोत्रहवणीवचनाद्भवति । सा च भूतकालसम्बन्ध इह चोदकेन तथाभूता प्राप्नोति । न च प्राकृतमानहविष्यग्निहोत्रं सम्भवति । तस्मान्नास्त्यग्निहोत्रहवणी । यच्च पूर्णाहुत्यन्ते ऽग्निहोत्रं सो ऽपूर्व एव होमः ।

औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात् ॥ ६८ ॥

धेन्वादयः शब्दा उभयोरसाधारणवचन एव शोणादय इवानपेक्ष्य च पदान्तरमेते पदावस्थायामेवासाधारणमर्थं प्रतिपादयन्ति । केचित्पदान्तरमपेक्ष्य साधारणं प्रतिपादयन्ति । यथा शुक्लः पट इति । कथं तर्हि पूर्वः पक्षः ? श्रुत्या धेनुरिति शब्दो धेनावेव वर्तते । गोद्रव्यं तस्य न शब्देन नापि चोदकेन । अजाद्रव्यं तस्य चोदकेन प्राप्नोति । तत्र चानुमानिकः शब्दो विद्यते । एवं पूर्वः पक्षः ।

सिद्धान्ते त्वसाधारणगुणवचनो ऽयमधिष्ठानमन्तरेणैव गुणः संपादितो भवति । यस्माच्चोदकबाधः । उत्तरमधिकरणस्यैव प्रत्युदाहरणं । यत्र साधारणगुणवचनस्तत्र चोदको न बाध्यते । प्रतिषेधके न यूपस्य खलेवालीत्वम् । तथाशुपैविहितेन भवतिना सम्बन्धात् । वाक्यप्रत्यक्षमितरथा ऽऽनुविहितेन भवति । नापरोक्षादित्थमुक्तमिदं पूर्वपक्षनिराकरणम् । कथं ? शब्दस्य धर्मो ऽयं क्रमः । अथ प्रतिशब्दो गुणभूतस्तस्माद्वाक्य एव शब्दस्य यो ऽर्थः स ग्रहीतव्यः । क्रमस्तु शब्दधर्मस्त्वादुपेक्ष्यः । तस्मात्पूर्वपक्षनिराकरणमिदमकल्प्यमिदमन्यथा वर्ण्यते । यूपानुवादेन खलेवालीत्वे विधीयमाने ऽदृष्टार्थता प्राप्नोति । खलेवाल्या यूपकार्ये विधीयमानाया दृष्टमेव पशुनियमनं प्रयोजनम् । तस्माद्यथाश्रुतमेव वाक्यं;

न तु विहितकल्पनाप्रसङ्गः । कथं तर्हि प्रसङ्गः ? उपचयत्वेन । अयं चापरो गुणः । अयं विहितेन भवतिना संबध्यत इत्यर्थेन बाधनादित्येतदनुदाहरणम् । द्वेधा ऽप्यनुपपद्यमानत्वात् । कथमनुपपत्तिः ? चोदकेनापि विपर्यास एव प्राप्यते । पूर्वमवघातः, ततः श्रपणम्, अथ श्रपणादुत्तरकालमवघातः प्राप्यते, तथा ऽपि तथैवानुष्ठेयस्तत्रार्थेन विपर्यास इत्ययुक्तम् । अथोभयत्रावघातः प्राप्नोति, तथाप्यत्वेन विद्यते । विपर्यासो न युक्तः । अथैवमुच्यते निष्पन्नायां यागचोदनायां चोदक इति धानासु निष्पन्नासु ततश्चोदको ऽवघातं श्रपणं च प्रापयति । एवमनुष्ठाने ऽप्राप्ते ऽर्थो न विपर्यास इत्युक्तं, तदप्यनुपपन्नम् । यदि निष्पन्नरूपं द्रव्यं गृह्यते खलेवालीवत्, तदा च पातादीनामक्रियात्वाच्छेदनादीनामिव तदा विपर्यासशङ्कैव नास्ति । अथ नैव निष्पन्नानां ग्रहणं, तत्रापि यथाप्राप्तमेवानुष्ठानं न विपर्यासः । किं तर्ह्युदाहरणं ? तत्रैव भक्षः । तस्य श्रवणादुत्तरं पेषणं प्राप्नोति ।

अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात् ॥७४॥

तत्र धर्मा भवन्ति न भवन्तीति पूर्वपक्षे पेषणान्तरं व्युत्क्रमादित्यतो धर्ममेव पेषणम् । सिद्धान्ते च तदेव पेषणं प्राकृतकार्यत्वात्क्रममात्रमन्तनो ऽर्थकृते विपर्यये धर्मा भवन्त्येव कृष्णलेषु पाकधर्मा भवन्तीति यद्यपूर्वोऽयं पाकस्ततः पाकधर्मा न भवन्ति । अथ प्राकृतस्य प्रतिप्रसवस्ततो धर्माः सन्ति । प्रतिप्रसवो ऽयम् । कथं ? चोदकेन प्राप्ताः पाकधर्मा अर्थलोपान्निवृत्ताः श्रपणविधानात् प्रतिप्रसूयन्ते । ननु प्रतिप्रसवे श्रपणमात्रमेव विधातव्यम् । घृते विधीयमाने वाक्यं भिद्यते । यद्यपूर्वविधानं तथा सति विशिष्टविधानान्न दोषः ।

अप्राप्तत्वात् । उच्यते । अस्मिन्वाक्ये घृतं न विधीयते । कुतः प्राप्तिर्घृतस्य ? उत्पत्तिवाक्ये घृतमेवाधारत्वेन श्रूयते । प्राजापत्यं घृते चरुमिति सप्तमीविभक्तिसंयोगात्, चरुशब्दसामर्थ्याच्च । यथा ऽऽदित्यपयोधिकरणे तथेहाप्युत्पत्तिवाक्ये । तस्माद् गुणवाक्ये घृतमनुवादः ।

इति दशमाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः ।

विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् ॥ १ ॥

अवभृथस्तावदनुदाहरणम् । अपूर्वत्वात् । शिष्टानां च विध्यन्तेन धर्माः प्राप्नुवन्ति । कथं संशयः ? उच्यते । यत्प्राकृतमङ्गं विकृतौ श्रूयते तदेव विकृतिनिराकाङ्क्षत्वात्स्वीकरोति। यथा गृहमेधीये आज्यभागश्रवणम् । श्रूयते चात्र प्राकृमङ्गं, नव प्रयाजा इति । तस्मात्तनैवास्य निराकाङ्क्षत्वं गृहमेधीयवत् । अधिकानामुत्पत्तिरिति प्राकृतानां निवृत्तिरित्यभिप्रायः पक्षयोस्तुल्यः । वाक्यं च लिङ्गवचनप्रमाणेन न्यायेन तुल्यमेव । ततः किं ? प्रकृतौ पदार्थस्य करणे सर्वत्रोपायचतुष्टयं प्रसक्तम् । ब्राह्मणपदमन्त्रसूत्रे उपयष्टारस्तत उत्तरस्मिन्नाधाने मन्त्राम्नानसामर्थ्यादितरेषां निवृत्तिः । पूर्वस्मिंस्त्वाघारे मन्त्रो नास्ति । अतस्तत एवाभ्युपायाः प्राप्नुवन्ति । विकृतावपि तथैव प्राप्तिपूर्वो मन्त्रक इत्येवं विशेषमात्रं विधायिष्यते । इतरथा पूर्वस्मिन्नाघारे मन्त्रसामान्यं मन्त्रविशेषश्च विधातव्यः । तत्र वाक्यं भिद्येत । तस्मादुत्तरस्य गुणविधिरिति ।

अत्र ग्रन्थः । इदं हि वाक्यं मन्त्रकार्ये विशेषविधायकं मन्त्रस्य स्मरणम् । तत्र विशिष्टस्मरणोत्पत्त्यर्थमेवेदं; न मन्त्रकार्यस्य सामान्यस्य नियामकं, नोपायान्तराणां निवर्तकम् । अथोच्येत,

विशिष्टमेवेदं स्मरणं विधीयते; न सामान्यं, सामान्यं च मन्त्रकार्यं पाक्षिकम् । तत्र नियमो युक्तो; न विधिः । अस्मिन्पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत् ? यदा मन्त्रप्राप्तिस्तदा विशेष इत्यानर्थक्यं, कदा चिद्भावो मन्त्रस्य कदा चिन्न, अस्मत्पक्षपरिग्रहश्चेति मया ऽपि सामान्ये प्राप्ते विशेषो विधीयते। तत्र नियमेन मन्त्रस्य प्रयोगो भविष्यति । इतरथा पाक्षिकः स्यात् । उपदेशस्यार्थवत्त्वमिति यदि नित्यसमाम्नातं न स्यात्ततो ऽन्यथानुपपत्त्या पाक्षिको ऽपि कल्प्येत । अस्ति चोत्तरस्मिन्नित्यसमाम्नानम् । तस्मादुत्तरे मन्त्रः । उत्तरसूत्रे कार्योपपत्तिं प्रतिपादयति । विधिस्तु तदा सति सामान्ये प्राप्ते विनमन्त्रस्य प्रयोगो विशेषो विधीयते । तत्र नियमेन मन्त्रप्रयोगः ।

संस्कारे तु क्रियान्तरं तस्य विधायकत्वात् ॥ १८ ॥

ननु वाजिने विशिष्टानुवादो वाक्यभेदो वा ? उच्यते । वाजिनं निविध्याभिघार्यान प्रकृत्यन्ततः श्रूयते—वाजिनमुत्करेणासादयतीति । तत्रोत्कर एव विधीयते । वाजिनं तु प्रकरणाल्लभ्यते । यभियुजन्निततयथा इति पशुः सामर्थ्याल्लभ्यते ।

विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥

प्रकरणे हि पुनरुत्सृष्टो न द्वावित्येतस्माद्वाक्यात्समुच्चयो न गम्यते । समुच्चयशब्दाभावात् । ननु ता उभयीर्ददातीति समुच्चयः श्रूयते । उच्यते । अर्थवादो ऽयम् । अप्रकरणे हि कामानीतस्य सूत्रावयवस्यायं ग्रन्थः । तदसति प्राकृते प्रकरणे पुनरुत्सृष्टाम्नानं यदि भवेत्ततो न बाधेताधानदक्षिणाम् । प्रकरणान्तराभावाद्दक्षिणान्तराभावाद्दक्षि-

णान्तरत्वात् । अपति त्वाधानप्रकरणाम्नाने यन्नैमित्तिकं पुनरुत्सृष्टादि विधीयते तत्प्राकृतं बाधमानमेव निविशते काम्याम्नानम् ।

द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥

दक्षिणाप्रसङ्गेनेदमधिकरणमाम्नातम् । प्रकृतौ निर्णीतायां विकृतौ दक्षिणाविचारः सुखं वर्तिष्यते । तस्य नवतिशतं स्तोत्रा इति । अस्य वाक्यस्यार्थवादत्वेन शेषभूता गवादयः । कथं ? तस्य नवतिशतं स्तोत्रीया इत्यभिधायाह्वतायामशीतिशतं षड्विंशत्यो विराजः प्रतितिष्ठन्तीति विराजां स्तुतिस्तासां स्तोत्रीयाणाम् । तत्राह— अथ पादशो मा आत्मना विराडिति । पादशः स्तोत्रीयास्ता गवादिभिः स्तूयन्ते । तस्मादर्थवादत्वादनुदाहरणम् । माध्यन्दिने ऽपीदृशं वाक्यं द्रष्टव्यं कृत्वा चिन्ता वा । अथ वोदाहरणमेवेवं, तस्य द्वादशशतमिति । यदि तस्येति क्रतुविशेषणं स्यादमन्त्रविशेषकरणमनर्थकमेव स्यात् । गवादयस्तु यद्यप्यर्थवादत्वेनोपयुक्तास्तथा ऽपि विपरिवर्तमानास्त एव तस्यशब्देन सम्बध्यन्ते;नैकैकस्य गवादिद्रव्यसङ्ख्यया सम्बन्धः । कुतः ? तच्छब्देन गवादयः परामृश्यन्ते । प्राप्त्या तेषामेव गुणभूता सङ्ख्या विधीयते । ननु गवादिभिः सम्बन्धे तेषामिति बहुवचनं प्राप्नोति । उच्यते । गवादयो ऽत्र सङ्ख्यां प्रति प्रधानभूताः । उद्दिश्यमानस्य च सङ्ख्या न विवक्ष्यते ग्रहस्येव ।

अथ वा तन्त्रसम्बन्धो ऽयं तस्येति । तस्य द्वादशशतमित्येवमपि सङ्ख्या गुणभूता द्रव्याणि प्रति तस्य शब्दसामर्थ्यात्समस्त्वाद् गुणानां सङ्ख्या द्रव्याणि प्रति । कुतः ? वाक्यभेद-

प्रसङ्गात् । सकृदुच्चरितस्तस्येति शब्दो यदि दक्षिणायां विधीयते, तं प्रति सङ्ख्या विधीयते, ततो वाक्यभेदः । अथाऽपि वाक्यभेदमङ्गीकृत्य तच्छब्दस्य सङ्ख्या विधीयते,तथाऽपि दक्षिणायाः सङ्ख्यानगतां प्रति विधीयमानत्वात् । तत्रैकत्वमयज्ञाङ्गभूतमिति चेत् ? तत्र सम्बन्धो ऽपि । गवादयः सङ्ख्यानुरक्ता न सङ्ख्यया दक्षिणा विधीयते । अथापि दक्षिणया ऽनुरक्ता गवादयः सङ्ख्यया संबध्यन्ते, तत्र वाक्यभेदादयो ये दोषास्त इहापि । तस्माद्गवादयः सङ्ख्या तच्छब्दा वेति त्रयमपि दक्षिणां प्रति विधीयते । तच्छब्दसामर्थ्याच्चैकजातीयस्य द्रव्यस्य परिच्छेदिका सङ्ख्या । यस्य कस्य चिदप्यनूद्यमाने ऽपि तच्छब्दे तेषामिति वचनं प्राप्नोति । तच्छब्दस्य द्रव्यपरत्वाज्जात्याख्यमिति,तदपि न लभ्यते । यस्य वा सन्निधाने यस्य कस्य चिदिति । तत्कुतः ? माषा दक्षिणाया अनन्तरं विपरिवर्तन्ते त एव ग्राह्याः । गवादयस्तु न विपरिवर्तन्ते । व्यवहितत्वात् । असंयुक्ता सर्वसम्पादिनी सङ्ख्या । कुतः ? चशब्दश्रवणात् । चशब्दो माषाणां परः श्रूयमाणो द्रव्यान्तरसंहिताम्माषान् गमयति । यथा प्रकृतिप्रत्ययार्थयोर्भिन्नार्थयोरपि सतोः पूर्वप्रत्ययोच्चारणम् । प्रकृते यस्मान्न किञ्चित्प्रत्यायितं भवेद्विशिष्टक्रमके तु प्रत्याय्येत । एवमिह चशब्दो ऽपि परस्ताच्छ्रूयमाणः श्रुत्यैव स्वार्थमर्थान्तरसम्बन्धित्वेन प्रतिपादयति । वाक्यसम्बन्धो हि पुरस्तादुच्चार्यमाण एवमर्थं कुर्यात् । अपि च प्रथमाविभक्तिप्रयुक्तानि गवादीनि स्वार्थ एवोच्चार्यमाणानि सामानाधिकरण्यं प्रतिपद्यन्ते । विभक्तानि तु तस्य शब्दनिर्दिष्टानि व्यधिकरणलक्षणया सम्बध्येरन् । तस्माच्चशब्दश्रुतेः सामानाधिकरण्याच्च मिथः संयुक्तानां

सङ्ख्यायोग इति सर्वसम्पादिनी।

असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्या-
कोपात्क्रतोः ॥ ४३ ॥

एकेन द्रव्येण सङ्ख्या संपद्यते। कुतः? सङ्ख्या दक्षिणां प्रति विधीयते। तेन द्वादशशतविशिष्टं दक्षिणां प्रति विधीयते। न द्वादशशतविशिष्टमेकजातिविशिष्टमेकसङ्ख्याविशिष्टं च नियमेन ग्रहीतव्यम्। न च गवादीनां वस्त्वन्तरभूतं विद्यते। तत्सर्वनाम्ना प्रतिनिर्दिश्यते। तस्मात्प्रकृतानां गवादीनां परामर्शः।

ननु विद्यत एव समुदायः। भवत्वसौ वस्तु। तथाऽपि गवादीनां समुदायशब्देनोच्यते। गवादिव्यतिरेके नास्ति शब्दः, यः सर्वनाम्ना प्रतिनिर्दिश्यते। तत्र दानं विभागार्थेन। इदमप्युत्तरविवक्षार्थम्। स्थित एतस्मिन्विभागेऽनियमादयो विचारा भविष्यन्ति। ऋत्विग्भ्यो दक्षिणां ददातीति सर्वविशेषणविशिष्टो ददातिर्विधीयते। ऋत्विग्भ्य इति चतुर्थ्यन्तः शब्दः। चतुर्थ्यत्र संप्रदाने। संप्रदानं च कारकं कारकं च क्रियां प्रति गुणभूतम्। तत्र विभज्य दानं प्राप्नोति। विभागस्य चोदितत्वात्।

उच्यते। ददातिरयं ददातिश्च स्वस्वत्वनिवृत्तिपरस्वत्वापादनरूपम्। तच्चैकैकं प्रति कर्तव्यम्। यदि समुदायमङ्गीकृत्य परित्यजेत्तथा सति त्याग एव कृतो भवेन्न ददातिः। तस्मात्प्रविभज्य दानम्। समं स्यादश्रुतत्वादिति प्रसक्तानुप्रसक्तेन विभागोद्गलकं च तस्य धेनुरिति विकृतिसिद्ध्यर्थम्। प्रकृतिं तावन्निरूपयामः। यदि गवादयः प्रधानभूतास्तत एकद्रव्यनिवर्तिका धेनुः। अथ दक्षिणा, कृत्स्नस्य दाक्षिण्यस्य निवर्तिका धेनुः। गवादयोऽत्र प्रधानभूतास्तेऽत्र निर्दिश्यन्ते। दक्षिणा

तान्प्रति विधीयते । न च शब्दः समुच्चयार्थो भवति । ननु समुच्चयनिर्देशक इति को ऽभिप्रायः ।

शब्दास्तावद्द्विप्रकाराः । के चिद्वाच्यस्वप्रधानमाहुः; नोपसर्जनत्वेन । यथा वृक्षाविति वृक्षशब्दः स्वार्थप्रधान उच्चार्यते । के चिद्वाच्यमर्थमन्यत्रोपसर्जनीभूतं ब्रुवते; न स्वप्रधानभूतम् । यथा ऽत्रैव वृक्षाविति द्विवचनं प्रातिपदिकोपसर्जनमात्मत्वं ब्रवीति । न द्विवचनार्थमेव जहति । एवं चशब्दः समुच्चयं ब्रुवन्नुपसर्जनत्वेन ब्रवीति स्वप्राधान्येन । तस्माद्यस्योपसर्जनं चशब्दः सो ऽत्र क्रियागुणाभ्यां सम्बध्यते । प्रधाने कार्यसंप्रत्ययात्सिद्धमिति । ते च गवादयः । न च चशब्दः समुच्चयस्य पर्यायवचनः । समुच्चयशब्दः प्राधान्येन निर्दिशति नान्यत्र गुणभावेन गवादयः स्वार्थस्य वक्तारो, न द्योतकाः । कथं ? शब्दस्तावददृष्टया शक्त्या ऽर्थमभिधत्ते स एव । नाद्यः । एवं चशब्दः । कथम् ? एकशक्तिकल्पनात् । अन्यथा शब्दान्तरस्य तदभिधायिता चशब्दस्य च द्योतकत्वमिति शक्तिद्वयं स्यात् ।

अपि च वृक्षशब्द उच्चरिते वृक्षार्थ एव मनसि विपरिवर्तते; नान्यसहितः । प्रकाशशब्दोच्चारणात् । उच्चरिते तु चशब्दे इतरेतरयोगः प्रतीयते । तस्यार्थः—गवादीनामुद्दिश्यमानानां विशेषणमविवक्षितम् । तस्मादेकैकस्य दक्षिणासम्बन्धः । उद्दिश्यमानप्राधान्यात् । प्राधान्यं च द्रव्यत्वात् ।

सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्मात्समवायाद्धि कर्मभिः ॥ ५७ ॥

इतरेतरयुक्ता दक्षिणा प्रतिविधीयते । कुतः ? सङ्ख्या-

सामर्थ्यात् । यदि गवादीनुद्दिश्य दक्षिणा विधीयते, न सङ्ख्या दक्षिणां प्रति विधीयते । वाक्यभेदप्रसङ्गात् । यदि च गवादयः प्रधानभूतास्तथा सति तेषामिति प्राप्नोति । गवादीनां प्राधान्ये ऽदृष्टकल्पना प्राप्नोति । अन्यत्र शेषभावाद्गवादीनाम् । दक्षिणाप्राधान्ये तु नादृष्टं, ऋत्विग्भ्यो दक्षिणां ददातीति । अपि च गुणवचनो ऽयं दक्षिणाशब्दो यदा द्रव्ये उपसर्जनीभूतः तदा द्रव्यस्यैव, यदि लिङ्गसङ्ख्यं तदेव चेल्लभते। इह च बहूनि द्रव्याणि । तस्माद्बहुवचनेन भवितव्यम । अनुषङ्गस्य सतां गतावन्याय्यत्वात् । यदा तु स्वप्राधान्येन विवक्ष्यते, गुणाद्रव्यस्य यल्लिङ्गसङ्ख्यं तल्लभते । भवितव्यं च गुणस्यापि वचनेन । तस्मादेकवचनान्तं युक्तम् ।

## प्राकाशौ तथेति चेत् ॥ ६३ ॥

ददातिमनूद्य प्राकाशो विधीयते । हिरण्मयाविति न विधीयते । कुतः ? प्राकाशाविति हिरण्मयावेवोच्येते; नान्यद्रव्यमयौ, धेनुशब्दवत् । यदि प्राकाशाध्वर्युसम्बन्धो भवेत्तथा सत्यन्तं वाक्यमेव भवेत्। न धात्वर्थो विधीयते। न धात्वर्थो ऽन्यत्किञ्चिदिति।कारकविभक्तिश्च श्रुत्यैव प्राकाशयोर्ददातिना सम्बन्धं ब्रवीति । अध्वर्युसम्बन्धे षष्ठ्यभविष्यत् ।

अत्र ग्रन्थः । अपि च स्वविशेषणे सत्यपि अवि ददातिरविशिष्टः पदान्तरेण शक्यते, अविशिष्ट एव कार्यं प्राप्नोतीति को ऽभिप्रायः ? अस्मिन्वाक्ये ददातिमनूद्य प्राकाशो विधीयते । एतस्यां ददातेर्विशेषणमविवक्षितं, वाक्यभेदप्रसङ्गात् । प्रयुज्यमानमपि विशेषणमशक्तं विशिष्टं न विशिनष्टि । कथं ? प्रधानभूतो ऽत्र ददातिः । प्रधानभूतस्य च लिङ्गसङ्ख्यमविव-

क्षितम् । कथं ? प्रत्ययः क्रियां विधत्ते । क्रिया विधीयमाना कारकैर्विना न भवति । कारकाणि च स्वविशेषणैर्विना न भवन्ति । तस्मात्क्रियाकारकाणि कारकविशेषणानि प्रत्ययेन परामृश्यन्ते । तत्र यः क्रियां प्रत्युद्दिश्यते स प्रधानभूतः क्रियां प्रति; न तु स क्रियाङ्गम् । क्रियैव तदर्था । तस्य प्रधानभूतस्य यल्लिङ्गमङ्गं तदनङ्गत्वात्क्रियायाः प्रत्ययेन परामृश्यन्ते । तस्माद्यत्क्रियार्थं प्रातिपदिकमुपादीयते तस्य यल्लिङ्गमङ्गं तद्विवक्षितमक्रियाङ्गत्वात् । प्रधानस्य तु विशेषणमध्वर्युणा विवक्षितम् । तस्मात्कृत्स्नविकाशौ । अध्वर्युशब्दस्त्ववयुत्यानुवाद इति ।

अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्गुणेदन्ताविकारः स्यात् ॥ ६४ ॥

न कृत्स्नस्य दाक्षिण्यस्य निवर्तकौ प्राकाशौ । कुतः ? यदि दाक्षिण्यमनूद्य प्राकाशौ विधीयेयातां,प्राकाशौ दक्षिणा, तौ चाध्वर्यव इति । यच्चौदुम्बरो सोमचमसो दक्षिणा स ब्रह्मणे देय इति । एवं चेदं वाक्यं, प्राकाशावध्वर्यवे ददातीति । प्राकाशाविति न चेयं प्रथमा । यथा सोमचमस इति । किं तर्हि ? द्वितीया सा । अध्वर्यवे ददातिना सम्बध्यते । एकवाक्यत्वात् । अध्वर्युप्राकाशयोर्ददातिना सम्बन्धो विधीयते । न ददातिमध्वर्युविशिष्टमुद्दिश्य,नापि ददातिमुद्दिश्याध्वर्युशब्दस्यावयुत्यानुवादो, दोषाव्यवहितसम्बन्धाच्च । किं त्वध्वर्युमेवोद्दिश्येति तत्र चतुर्थ्यन्तोऽध्वर्युः सम्प्रदानभूतः । प्राकाशप्रातिपदिकं च द्वितीयान्तम् । अध्वर्युं प्रति गुणभावेन तयोः प्रातिपदिकयोः सम्बन्धाच्चतुर्थी लभ्यत इति ।

ननु ददातिमनूद्य प्राकाशौ विधीयेते इत्युक्तम् । उच्यते ।

अध्वर्युपदसामर्थ्यात् । तद्यातु येन यो ऽर्थः स ग्रहीतव्यो न प्रकाशददातोःसम्बन्धो ग्रहीतव्यः । ननु श्रुत्यैव क्रियया कारकाणि सम्बध्यन्ते । तेन ददातिना प्राकाशयोः सम्बन्धो भविष्यति । उच्यते । अविधीयमानत्वाद्ददातेर्वाक्यसम्बन्ध एव बलवान् भवति । विधीयमानायां कारकाण्युद्भूतशक्तीनि भवन्ति । तानि क्रियया सम्बध्यन्ते कारकत्वात् । अविधीयमानायां तु क्रियायां कारकाण्यनुद्भूतशक्तीनि भवन्ति । तथा चानन्तर्येण यः सम्बन्धो वाक्यलक्षणः स ग्रहीतव्यः; न व्यवहितेन ददातिना, ऽध्वर्य्युपदेन व्यवधानात् । प्राकाशयोर्नामौ वाक्येन प्रोक्षणीश्रुतिरित्यादिग्रन्थः । अनेन न्यायेन यः प्रसिद्धिदर्शनेन बाध्यत इत्ययमपि विधीयमानत्वेन नेयः । तस्मादध्वर्य्युणा सम्बध्यान्तर्भागस्यैव निवृत्तिरेकां गामिति । एकशब्दस्य गोशब्देन सम्बन्धः; न ददातिना । अनूद्यमानत्वादेव क्रियाया इत्ययमेव नेयः । द्वितीयमधिकरणं कृत्स्नस्य । तृतीयमपि कृत्स्नस्यैव लिङ्गाशङ्कानिवृत्त्यर्थमारभ्यते । चतुर्थमपि तत्कृत्स्ने विकारः । तदन्तविकारो ऽध्वर्य्युभागे नियमार्थः ।

इति दशमाध्यायस्य तृतीयः पादः ।



# अथ चतुर्थः पादः ।

प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

निवीतानृत्विज इत्येतदनुदाहरणम् । कथं ? ज्योतिष्टोमे उपवीताभावान्न प्रत्यक्षेण,न चोदकेन ज्योतिष्टोमे उपवीतम् । तत्प्रकृतिश्च श्येनो न दर्शपूर्णमासप्रकृतिकः । आनर्थक्यात्तदङ्गेष्विति न्यायो ऽत्र नास्ति। प्रधाने ह्यसम्भवन्नङ्गेष्वर्थात् क्रियते । सम्भवति चात्र प्रधान एव निवीतम् । तस्माद्भिन्नविषयत्वान्निवीतोपवीतयोर्व्यवस्था । एवमुदाहरणमुपहोमाद्येव तदुदाहरणम् । ननूपहोमानां प्रत्यक्षविधानाच्चोदक एव नास्ति नक्षत्रेष्टौ । यथा गृहमेधीयस्याऽऽज्यभागस्य प्रत्यक्षाम्नानात् । यथा सोमस्य प्रत्यक्षविधानात् । उच्यते । सर्वास्वेव विकृतिषु उपमानेन धर्मप्राप्तिः । न च सोमस्य केन चित्साहृश्यमस्ति । दर्शपूर्णमासकैर्विहितधर्मकैस्तौ व्यक्तचोदनौ । सोमश्च व्यक्तचोदनः । तस्मात्सोमे य एव धर्मा विधीयन्ते त एव भवन्ति;नान्ये । नक्षत्रेष्टयामपि प्रथमं तावदुपकारापेक्षा भवति,ततः साहृश्येन धर्मप्राप्तिः । न चापूर्वमङ्गमुपकारवद् दृष्टम् । साहृश्यञ्चास्याग्नेयेन । तस्य च प्रकारा अनन्तरिता आग्नेये विधीयन्ते । ते नोपकारमन्तरेण सम्भवन्तीति तत्सद्भावः । तस्माद्यत्प्रकारान्तरमुपकारा विद्यन्ते तद् गृह्णाति विकृतिः । इमे चोपहोमा नोपकारपूर्वका दृष्टाः । तस्मात्प्राकृत-

मङ्गजातं प्रवर्तते । गृहमेधीये तु दृष्टोपकारावाज्यभागौ पुनः श्रुतौ शक्नुवतो गुणत्वेकैकस्याम् तस्यां गिरापदस्य प्रतिषिध्यमानस्य यत्कार्य्यं लक्ष्यते तत्रेरापदं विधीयते । तस्मात्कार्य्यलक्षणार्थं गिरापदमुच्चार्य्यते;न प्रतिषेधार्थम् । वाक्यभेदादिदोषप्रसङ्गात् । न चापि लक्षणया कार्य्यापत्तिः । यथा पृष्ठः षडहः सन्तिष्ठत इति । अयं भावः । सङ्ख्याभावेन प्रतिषेधो लक्ष्यते । प्रतिषेधेन लक्षणया कार्यं गम्यम् । देवग्रहणं यत्र यत्रापि सन्दंशाभावः तत्रापि क्रमावेत्राङ्गत्वमिति । तस्मात्समुच्चयः । जुहोतिशब्दसामान्यान्न सामान्यपूर्वबाधः ।

उच्यते । नात्र बाधः । कुतः ? कार्य्यापत्त्यभावात् । प्रत्यक्षेण तावत्कार्य्यापत्तिर्यथा नैवारश्चरुर्भवतीति व्रीहीणां कार्य्ये नीवारा वर्तन्ते। ननु शब्देनेयं कार्य्यापत्तिः । न हि नीवारप्रातिपदिकं नीवारान्ब्रवीति । तद्धितो विकारम् । चरुशब्दश्चरुम् । बृहस्पतिशब्दस्तस्य विकारस्य देवतासम्बन्धम् । न हि शब्देन कार्य्यापत्तिर्गम्यते । प्रत्यक्षेण त्ववगम्यते । व्रीहयः पुरोडाशं निर्वर्तयन्ति । पुरोडाशो यागम् । एवं नीवाराश्चरुं, चरुर्यागमित्युभयेषामपि हविर्निर्वर्तकत्वं प्रत्यक्षम् । नचैवमुपहोमानामदृष्टार्थत्वात् । न चानुमानेन कार्य्यापत्तिः । यथा नखावपूतानां चरुरिति तत्र तुषकणविप्रमोकं दृष्ट्वा फलमवघातकार्य्ये वर्तते, नखावपनमिति । न च प्रतिषेधेन कार्य्यापत्तिरनुमीयते । यथा न गिरागिरेति ब्रूयादिति । ननु परस्परनिराकाङ्क्षमेवं वाक्यम् । विधायकद्वयसद्भावाद् ब्रूयाद्वैयमिति चेत् ?

उच्यते । एवं सति वाक्यभेदः प्राप्नोति । विधायकशक्तिकल्पना चैकैकस्य स्यात् । तस्माद्गिरापदस्य प्रति-

विद्यमानस्य यत्कार्यं लक्ष्यते तत्रेरापदं विधीयते । तस्मात्कार्यपदलक्षणार्थं गिरापदमुच्चार्यते;न प्रतिषेधार्थम् । वाक्यभेदादिदोषात् । न चापि लक्षितलक्षणया कार्यापत्तिः । यथा परिधौ पशुं नियुञ्जन्ति । तस्मात्पञ्चमकारा ऽपि कार्यापत्तिर्नास्त्युपहोमानां,येन बाधेरन् । प्राकृतं वा येन केन चिदन्येनावगम्यते । कार्यापत्तिरिति निरूपयन्तीति को ऽयं ग्रन्थः ? न होमानुवादेन मन्त्रविधानम् । शुद्ध एव होमो विधीयते । तेन वाक्येन सो ऽत्र जुहोतीति द्वितीयेन मन्त्रः । अग्नये कृत्तिकाभ्य इत्येवमादिना तयोर्होममन्त्रयोः सम्बन्धः प्रकरणेन वाक्येन । तस्मान्नारिष्टोपहोमयोः समुच्चयः । अथ घोषेणेति रथो दर्भयोर्निवर्तको, घोषो मन्त्रस्य । कुतः ? एवं स्वार्थे रथशब्दो भविष्यति । इतरथा परविशेषणमिति लक्षणां प्रवीति । श्रुतं स्वार्थ इतरथा रथशब्दो रथमेव ब्रवीति । घोषशब्दो घोषमेव । तत्पुरुषे तु रथः परार्थमुच्चार्यते । तस्माद्द्वन्द्वो ऽयम् । ननु द्वन्द्वे सति द्विवचनं प्राप्नोति ।

उच्यते । सर्वो ऽपि द्वन्द्वो विभाषयैकवद्भवतीत्येकवचनं भवत्येव । एवं तर्हि तत्पुरुषादयं पापीयान्प्राप्नोति । कथं ? अत्र धवखदिरयोर्यः समाहारः स प्रधानभूतस्तं प्रति धवखदिरावत्यन्तभूतावुच्चार्येते । स च समुदायः केन चिच्छब्देन नोच्यते । तत्र द्वावपि रथघोषौ परार्थौ भवेताम् । तस्मात्तत्पुरुष एव शेषात्प्रयोजनं, यदि रथे घोषविशेषणमेव नियमो भवति । ननु यवपक्षे ऽपि नियम एव ।

अत उच्यते । साधारणगुणवचनो ऽयं शब्द एवोपपद्यते । अरुणगुणस्तु साधारणो ऽपि भवति । तत्र वाक्येन द्रव्यनियमो भवति ।

सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ ३ ॥

प्रकृतिं तावन्निरूपयामः। ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णातीत्येवमादीनि वाक्यानि प्रकृतौ श्रूयन्ते; नैव मैत्रावरुणेन वायवेन यजेतेति । यद्येवं श्रूयेत तथा सतीरात्रद्विकल्पः स्यात्। किं तर्हि ? इन्द्रवायू देवता ऽस्येति तद्धितो देवतां द्रव्योपसर्जनभूतां ब्रवीति । तच्च द्रव्यं द्वितीयया गृहीतं प्रति गुणभूतं गृह्णातिश्च द्रव्यस्य पृथक्प्रकल्पनम् । तच्च दृष्टार्थम् । यो ऽत्र देवतानिर्देशो दृष्टार्थः । अन्यत्र देवताया अचोदितत्वात्। तस्या द्वितीयादिष्वपि ग्रहणेष्वयमेव न्यायः।न चैन्द्रवायवो ऽयं मैत्रावरुणस्य कार्ये वर्तत इति प्रमाणमस्ति। तस्माद्भिन्नान्येतानि ग्रहणानि यागे ऽत्र देवतामपेक्षन्ते। देवताश्च यागमन्तरेण न सम्भवतीति यागमपेक्षन्ते। ततः सन्निधानेन प्रमाणेन सम्बन्धो भवति। तच्च सन्निधानं सर्वेषां ग्रहणार्थमपि विशिष्टमीदृशी तावती प्रकृतिः। यागः प्रधानभूतः। फलं चोदितत्वात्। प्रधानभूतदेवतावाक्यानि तदर्थानि। तस्मात्प्रधानभूत एव यागो ऽर्थादभ्यस्यते। विकृतौ तु ऐन्द्रवायवं गृह्णातीति चोदकप्राप्तानि सन्निहितानीतराणि । आम्नानसामर्थ्यात् । सन्निहितान्येव तानि सर्वाणि युगपद् गृह्णाति प्रयोगवचनः। सन्निधानाविशेषात् । ननु बृहस्पतिदेवता चोदकप्राप्तेषु ग्रहेषु विधीयते।

उच्यते। न सम्भवति देवताविधानम्। कथं ? यद्देवताविधानं तस्योपसर्जनार्थो विधीयते । यथा दण्डीति पुरुषोपसर्जनीभूतो दण्ड एव विधीयते पुरुषस्य प्राप्तत्वात्; एवमिहापि। कथं द्रव्यदेवतासम्बन्धे चोदकप्राप्तमनूद्य बृहस्पतिर्देवता विधीयते ?

उच्यते । उपसर्जनार्थो न चोदकमाप्तो ग्रहेषु वाक्यतो विधातुमसामर्थ्यात् । कथमसामर्थ्यम् ? यदास्य देवतासम्बन्धः, यदा ऽस्यशब्दो देवताविशेषणत्वेनोच्चार्येत, तदा परार्थमुच्चारणं न स्वार्थम् । यदा बृहस्पतिरस्येति तस्याः स्वार्थमुच्चारणं न परार्थं सकृदुच्चारणेन स्वार्थवत्परार्थवच्चोच्चारणं विरुध्यते । यदा तु न देवताविशेषणत्वेनोच्चार्यते तदा ऽस्यशब्दः प्रधानभूतो, देवताप्रातिपदिकं तदर्थम् । तस्माद्द्वाभ्यां विशेषणाभ्यां विशिष्टस्तद्धितार्थो विधीयते; नोपसर्जनम् । तस्माद्बार्हस्पत्यं गृह्णातीति श्रुत्यैव विधानमित्यनेनैवाभिप्रायेणोच्यते । न चैतद्व्रीहीन्प्रोक्षतीत्यनेन तुल्यम् । तत्र वाक्यान्तरेण व्रीहयो यागसाधनत्वेनावगताः । तेषां स्वरूपमपि विद्यते । लक्षणया ऽपूर्वसाधनत्वमपि । तत्र द्वितीया प्रोक्षणस्य गुणभावं ब्रवीति व्रीहिलक्षितापूर्वं प्रति । न त्विहैन्द्रवायवद्रव्यं प्रमाणान्तरेण यागसाधने निर्ज्ञाते तां न गृह्णाति । क्रियापूर्वांशेन सम्बध्येत । प्रोक्षणं क्रियेत । तस्मादैन्द्रवायवं गृह्णातिक्रियां प्रति प्रधानभूतम् । द्वितीयाविभक्तिसामर्थ्यात् । न च प्रयाजादिवाक्यतुल्यम् । तत्र द्रव्यदेवतेन क्रिया निर्वर्त्यते । सा तदुपकारिका । इह तु विपरीतम् । न चाग्नेयतुल्यं, तत्राग्नेयो ऽष्टाकपालो भवतीति साकाङ्क्षमेतद्वाक्यम् । तच्च यागमन्तरेण निराकाङ्क्षं न भवति । परिपूर्णं वाक्यान्तरेण सम्बध्यते । प्राक् च यागात्परिपूर्णमेव भवति । न च यागमन्तरेणान्येन प्रकारेण पूर्यते । तत्राग्नेयो ऽष्टाकपालो भवतीति यागात्तुल्यम् । दर्शपूर्णमासाभ्यामित्यन्तेन प्राकृता एव फले विधीयन्ते आग्नेयादयः । न चेह तथा । ऐन्द्रवायवादीनां यागविधानाभावात् । अन्यथानुपपत्त्या यागकल्पना ।

परिपूर्णवाक्यमैन्द्रवायवं गृह्णातीत्यनेन । न त्वाग्नेयादि वाक्यं परिपूर्णम् । तत्र साकाङ्क्षत्वाद्यागकल्पना । इह तु परिपूर्णस्यार्थानुपपत्तिवेलायां सोमेन यजेतेति विद्यते यागः । स च यागो देवतामात्मसिद्ध्यर्थमपेक्षते । ऐन्द्रवायवादीन्यपि यागानपेक्षन्ते । तयोर्द्वयोः साकाङ्क्षयोरेकाङ्क्षविकलयोः सम्बन्धो भवति । तस्मान्न प्रकरणेनैन्द्रवायवादीनां सम्बन्धः । न चैतद्देवतावाक्यैः पूर्वमसंबध्यमानः फलेन संबध्यते । अपि चैन्द्रवायवं गृह्णातीत्येतदपरिपूर्णं वाक्यं सोमयाजिना सह शीघ्रं सम्बध्यते प्रकरणेन ।

विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥२३॥

अस्याधिकरणस्य बाधसम्बन्धे पूर्वपक्षे न किंचिद्बाध्यते । सिद्धान्ते पर्यायशब्दो बाध्यते । इन्द्रादीनां यद्यर्थो विद्यते लोकव्यवहारे यथा गवादीनां, ततः पर्यायशब्दानामवकाशो भवेत् । न त्वर्थो विद्यते । इन्द्रादीनामप्रत्यक्षत्वात् ।

उच्यते । इन्द्रशब्द उच्चरिते किमपि प्रतीयते सामान्येन । तत्रोपपदाद्व्यवहारात्स्मरणाच्चेन्द्रादीनामर्थो विद्यते । यथा प्राची दिगिति न प्रत्यक्षेण प्रतीयते, नानुमानेन, शब्दादेव प्रतीयते । इन्द्रशब्देन च यदुच्यते शक्रशब्देन च तदेवोच्यत इति लोकस्मरणम् । अनादि च स्मरणं न शक्यं पर्यनुयोक्तुम् । यथा प्रत्यक्षेण रूपमवबुध्यमानं न शक्यते पर्यनुयोक्तुं, किमर्थमवबुध्यत इति । एवमिहापीत्युभयोरर्थ एव देवता । तस्य च वाचकः शब्दः । स हविषा सम्बध्यमानोऽर्थस्य देवतात्वं प्रतिपादयति; नान्यथा ।

पूर्वपक्षस्तु—शब्दोऽर्थ प्रत्यत्यन्तगुणभूतः । अर्थ एव का-

र्य्ययोगी प्रधानत्वात् । अग्निशब्दो न स्वयं कार्येण द्रव्येण सह सम्बध्यते। किं तर्हि ? अर्थेन सम्बध्यते। अर्थपरत्वाच्च निर्देशस्य पर्य्यायशब्दानामनिवृत्तिः । न चाग्निशब्दः शब्दपदार्थक एव द्रव्येण सम्बध्यते । तथा सति तद्धितानुत्पत्तिः । अपि च वाक्यार्थे पदनिर्वचनम् । वाक्यार्थश्च पदार्थपूर्वको भवति । यदि शब्द एव देवता भवेत्तथा सति देवतापदमर्थशून्यं स्यात् । अर्थशून्ये च तस्मिन्नस्य शब्देन यो ऽर्थ उच्यते, स एव केवलः स्यात् । तत्र साकाङ्क्षत्वादनिराकाङ्क्षीकृतत्वाच्च वाक्यमेव न स्यात् ।

नन्वेवमपि पर्य्यायशब्दानामप्रसङ्ग एव । कथम् ? अग्निशब्दः स्वमर्थं पुरोडाशं प्रति देवतात्वेन प्रतिपादयति । तत्तु देवतात्वं यदि वाचिकां श्रुतिमुद्दिश्य परिसृजति द्रव्यं,ततः सम्पादितं भवति;नान्येन प्रकारेण । अस्यां चा ऽवस्थायामग्निशब्द एव मनसि विपरिवर्तते;नान्यः । तस्माद्विपरिवर्तमानः स एव ग्रहीतव्यो;नान्यः । स च शाब्दः । तस्मात्स एवोच्चारयितव्यो वाचकश्रुतिवेलायाम् ।

अत्रोच्यते । अग्निशब्दः स्वमर्थं पुरोडाशस्य देवतात्वेन प्रतिपाद्य कृतार्थः । उच्चारणवेलायां शब्देन प्रयोजनम् । नान्यथा यागो भवतीति । एतस्यामवस्थायामग्निशब्दो न विद्यते । येन केन चिच्छब्देनोच्चारणं कर्त्तव्यम् । अग्निशब्दस्य व्यवहितत्वात् । तस्मादग्निशब्दो न शक्यो नियन्तुमिति ।

सिद्धान्तस्त्वग्निशब्द एवाष्टाकपालेन सम्बध्यमानो ऽर्थास्य देवतात्वं प्रतिपादयति । यथा वैष्णवीमनुब्रूयादिति ऋगुच्यमाना ऋगर्थं प्रतिपादयति । न च विवक्षितऋगर्थः कार्य्ययोगेन,एवमिहाप्यग्न्यर्थो न कार्ययोगेन विवक्षितः । अपि च

यो ऽष्टाकपालेन सम्बन्धयितुमिच्छति तस्यापि वाचिका श्रुतिरुच्चारयितव्या । तद्द्वारेण देवता क्रियया सम्बध्यते । तत्र प्रथममर्थस्य देवतात्वम् । पश्चाच्च शब्दोच्चारणं विधीयत इति श्रुत्यर्थाभ्यामर्थद्वयं बोध्यते । यस्य पुनरग्निश्रुतिरेवाष्टाकपालेन सम्बध्यते तदुच्चारणमेव विधीयते । अग्नय इत्युच्यार्याष्टाकपालं सजेदिति तस्यायमर्थो देवतेत्यनुवाद एव । यथा पूतिकामभिषुणुयादिति यागो ऽर्थाल्लभ्यते ।

तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥

ननु नैवेदमधिकरणमारभ्यम् । य एव शब्दश्चोदितः स एवान्यत्राप्युच्चार्य्यः । उच्यते । यत्र शब्दो विद्यते तत्रैव पर्यायशब्दनामप्रसङ्गः । यत्र शब्दो नाम्नायते तत्रार्थः प्रत्याययितव्यः । स च येन केन चित्प्रत्याय्यत इति पूर्वः पक्षः ।

सिद्धान्तस्तु सूर्यशब्दो यागानुमितप्रयोगभावनया सम्बध्यते । अन्यः शब्दो यद्युच्चार्य्येत तथा सति शब्दः प्रयोगे ऽश्रुत एवोच्चार्य्येत । एवं प्रकृतावपि ।

विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृतावपि भेदः स्यात् ॥ ३२ ॥

ननु उस्रायै वपायै मेदस इति मन्त्राम्नानादनियमेनैव प्राप्नोति विधिशब्दे वा । उच्यते । सत्यम् । समीपे मन्त्रः श्रूयते; न त्वनेन कर्तव्यमिति विधीयते । चोदकस्तु विधिशब्दादन्येन प्रकाशनं प्रापयति । तस्मादनियमः । नन्वनुबन्ध्यायां भवेदपि । वनस्पतौ तु विधिशब्द एव प्राप्नोत्युक्तेन न्यायेन । उच्यते । स्विष्टकृद्विकारो वनस्पतिः । स्विष्टकृति च विधिश-

त्वावन्येन प्रकाशं विकृतौ चोदकेन तथैव प्राप्नोति । न चेह गुणलोपो निर्गुणत्वादाम्नानस्य । अन्यत्वं कर्तव्यं विधिशब्दात् । अतः पर्यायशब्दप्रसङ्गः ।

सिद्धान्तस्तु समान इति कृत्वा वनस्पतिरुदाहृतः ।

मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥

• यद्यप्यन्यदेवत्यः पशुरित्येतद्वचनं चिन्त्यते,किं प्रकृतावुपपद्यते उत विकृताविति पूर्वपक्षः । प्रकृताविति । अग्निलिङ्गा मनोता प्रकृतौ नाग्नीषोमावभिधातुं शक्नोतीत्याशङ्का भवति । सा चोत्कर्षे प्राप्ते विकृतावनाम्नानात् तस्यामपि न भवति श्रुतिलिङ्गाद्यभावात् । ननु लिङ्गेन प्राप्नोति । उच्यते । सामान्यसम्बन्धे सति लिङ्गमवकाशं लभते । न च सामान्यसम्बन्धो ऽस्ति । तस्मात्प्रकृतौ निवेशो मनोतायाः । न चादृष्टार्था मनोता प्रकृतौ । अग्निं तावच्छ्रुत्यैवाभिधत्ते । तत्सम्बन्धं सोमं लक्षणया शक्नोति वक्तुमुभयोर्यागसाधनत्वात् । इतरेतरयुक्तौ हि तौ देवतात्वं प्रतिपद्येते । यथा पुष्करं खनन्तं दृष्ट्वा ग्रहेश्वरो ऽपि खनन्निव लक्ष्यते एककार्यत्वादेवमिहापि । इदं वचनमर्थवादत्वेन स्तुवन्मन्त्रं प्रयुक्ततायामेव निवेशयति ।

अथ वा उत्कर्षाशङ्कायामिदं वचनमनुत्कर्षं करोति । लक्षणया च सोमं प्रत्याययतीत्युक्तमेव पुष्करवद्ग्रहेश्वरम् ।

सिद्धान्तस्तु एवकारकरणमनर्थकं प्रकृतौ भवति । अवधारणाभावात् । विकृतौ चावधारणं विद्यते । तत्र चोदकेन यद्देवत्यः पशुस्तद्देवत्यैव मनोता प्राप्नोत्यूहेन । एवं प्राप्ते ऽवधारणं क्रियते । आग्नेय्येवेति । न चार्थवादत्वेनोपपद्यते । अन्यत्रैव मनोता श्रूयते । मनोतामन्वाहेति । अन्यत्र यद्यप्यन्यदेवत्यः

पशुरिति । अपि चार्थवादत्वेनेवकारस्य पर्युदसितव्याभावो भवत्येव । यथा विधौ दशमसम्बन्धो बाधसामान्येन ऊहबाध इति ।

स्वयोनौ वा सर्वाख्यातत्वात् ॥ ४४ ॥

भाष्यकारेण यदिदं व्याख्यानं कृतं प्रस्तोतोद्गीथादौ कथं रथन्तरशब्द इति, तदयुक्तम् । गीतिषु सामाख्येति कण्वरथन्तशब्देन सामोच्यते; नर्क् । प्रकृतौ चर्गक्षराणि संस्कुर्वती रथन्तरगीतिः पृष्ठस्य साधनभावेनावगता । एवं बृहद्गीतिरपि । इह तु बृहद्रथन्तरानुवादेनान्यद्गीत्यन्तरं विधीयते पृष्ठसाधनत्वेन । तस्माद्गीतिर्गीतिरेव कार्ये वर्त्तते । सा ऋक् चोदकेन प्राकृती प्राप्नोति । सा न वाक्याङ्गभूता वाक्यस्य तावदपदार्थः । न चापदार्थसामर्थ्याच्चोदकप्राप्ताया ऋचो बाधः । यथा धेनुशब्देन च्छागबाधः । धेनुशब्दो गोद्रव्यमन्तरेण नैव दृष्टः प्रयुज्यमानः । कण्वरथन्तरगीतिस्तु ऋगन्तरेऽपि दृष्टैव प्रयुज्यमाना । न च गौणी सा गीतिरन्येन क्रियमाणा । तस्माच्चोदकेन ऋक्प्राप्नोतीति ।

इति दशमाध्यायस्य चतुर्थः पादः ।



# अथ पञ्चमः पादः ।

आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥

ननु प्रकृतौ क्रम आनुमानिकस्त्रिच्छन्द आवापो माध्यन्दिनः पवमान इति वचने प्रतीयते । चोदकेन प्राप्नोति । तस्मादानुमानिकत्वात् क्रमबाधश्छन्दसामनुग्रह इति । उच्यते । युक्तं प्रकृतौ बलाबलम् । तत्र प्रत्यक्षाणि शास्त्राणि । इह पुनरुपकारा अतिदिश्यन्ते; न शास्त्राणि । तेन विकृतौ श्रुतिप्राप्तस्य समाख्याप्राप्तस्य च बलाबलशङ्का नास्त्यनाम्नानात् । असत्यां बलाबलशङ्कायामुभयं कर्तव्यम् । यदि विरोधो नास्ति । इह तु विरोधः । तत्र च्छन्दसामनुग्रहः, किमुत क्रमस्येति । क्रमस्येति ब्रूमः ।

अत्र ग्रन्थः । अप्रवृत्ते कस्मिंश्चित्पदार्थे सर्ववैकल्यकं प्राप्नोति; न प्रवृत्तौ । वैकल्पिकानां हि सर्वेषां युगपत्प्राप्तिः । यावदन्यतमाध्यवसायो न भवति तावत्तुल्याकृतौ तदेवानुष्ठेयमितरेषां निवृत्तिः । तदुक्तं—निर्देशात्तु विकल्पे यत्प्रवृत्तमिति । प्रवृत्तौ च ततो ऽन्यत्र भवत्यनुक्तत्वात् । अत्र च पूर्वेण मन्त्रेण गायत्री प्राप्यत इत्युभयसिद्धम् । सा च गायत्री द्वितीयां गायत्रीमेव पर्युपस्थापयति; न द्वितीयं छन्दः, पर्युपस्थापकाभावात् । तस्मात्क्रमानुग्रह इति ।

अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात्सर्वा-
सामर्थवत्त्वात् ॥ १४ ॥

प्रकरणे मन्त्रा आम्नायन्ते । ते च प्रकरणात्सर्वे प्रयोक्तव्या इति श्रुत्या चतुर्दशानां प्रयोग उच्यते । स चानियमेनापि घटते । क्रमस्तु नियतक्रमानेव प्रापयति । प्रकरणे तु सर्वे प्रयोक्तव्याः । ननु प्रकरणं क्रमोऽपि नैव बाधते प्रकृतग्रहणात् । उच्यते । सर्वविषयतां क्रमेणावगतां बाधते । सा च क्रमानुग्रहे सर्वविषयता न घटते । तस्मात्प्रकरणाद्ग्रहः । अतो विकल्पः ।

आगमेन वा ऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥

पूर्वपक्षस्तु प्राकृतस्य सङ्ख्याविधानं, सङ्ख्येयस्याबाधितत्वात् । तस्मात्तेषामभ्यासः । यथा प्रयाजानां सङ्ख्याविधानम् । सङ्ख्येयास्तु त एव ।

सिद्धान्तस्तु पृथक्त्वनिवेशः सङ्ख्यया व्याप्यः । यत्र वचनं नास्ति वचनेन तु बाध्यते । यत्र सङ्ख्येयानुवादेन सङ्ख्याविधानं यथा एकादश प्रयाजानिति प्रयाजवाक्येनोपात्तास्तत्र सङ्ख्या ऽभ्यस्यते । उपात्तत्वात्सङ्ख्येयस्य । इह तु नोपात्तं सङ्ख्येयं वाक्येन यथा प्रयाजेषु । तस्मादत्र पृथक्त्वनिवेश एव नाभ्यासः ।

षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥

य एवं विद्वान्षोडशिनं गृह्णातीति ।

अत्र ग्रन्थः । मध्यमे ऽहंस्त्रिरात्रस्य गृह्यते इति प्रत्यक्षेण वाक्येन विकृतिसम्बन्धः । प्रकृतौ प्रकरणाम्नानानुमितेन वाक्येन सम्बन्धः स्यात् । तच्च प्रत्यक्षे सति वाक्ये दुर्बलमिति ।

प्रकृतौ वा द्विरुक्तत्वात् ॥ ३७ ॥

नहीदं प्रकृतौ वचनं प्रतिषेधकम् । किं तर्हि ? विकृता-बुपदेशकमिति । अात्युत्तरमैन्द्र्या गार्हपत्यमुपतिष्ठते इत्यत्रापि शक्यं वक्तुम् । गार्हपत्यसम्बन्धं श्रुतिर्ब्रवीति; नेन्द्राभिधानं निवर्तयतीति । सर्वत्रैवेदमुत्तरं घटते । अत इदमुत्तरं न्यायेन विरुद्धम् । तस्मादश्लमसमम् । कथं तर्ह्ययं ग्रन्थः ? उपचयत्वेन ।

यदुक्तं वाक्येनोत्कर्षः षोडशिन इति । तन्न । कथं ? प्रकृतौ षोडशी विधीयते । षोडशिनं गृह्णातीति । तत्र विधीयमानस्य त्र्यंशा भावना किं, केन, कथमिति । तत्र किमंशं करणोपकारो विपरिवर्त्तमानो निराकाङ्क्षं करोति । केनेत्यंशं षोडशी । कथमंशं षोडशिन इतिकर्तव्यता यत्राम्नायते सा निराकाङ्क्षं करोति । तत्र वाक्यं परिसमाप्तं न केनाप्यंशेनापरिपूर्णम् । परिपूर्णत्वाद्द्रव्यस्य प्रकृतावेव निवेशः । यत्र स्ववाक्य एव विधीयमानस्यैव किमंशपूरणं पदान्तरेणोपनीयते, यथा युवं हि स्थः स्वर्पती इति प्रतिपद्विधीयमानैकवाक्येन द्वियजमानेन क्रतुना सम्बध्यते, तत्र प्रकरणबाधो युक्तः । यथा च द्वावशोपसत्त्वस्य विधीयमानस्यैकविंशपूरणमहीनशब्दः करोति, एवं नात्र किमंशस्य पूरणं वाक्येन, येन प्रकरणादुत्कर्षः स्यात् । तस्मात्प्रकरण एव निवेशः ।

उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्स-ति हि संस्थान्यत्वम् ॥ ४१ ॥

अग्निष्टोमे राजन्यस्य गृह्णीयादिति सत्यग्निष्टोमे षोडशिग्रहणम् । यदि सस्तोत्रशस्त्रः क्रियेताऽग्निष्टोमसंस्थं न स्यात् ।

असत्यां चाग्निष्टोमसंस्थायां षोडशिग्रहणमेव न प्राप्नोति । तस्मात्स्तोत्रशस्त्रं यत्र निमित्तं, यत्र निमित्तविघातो, न तद्विषयम् । इह तु निमित्तविघाताय स्यादिति । कथं च सस्तोत्रशस्त्रो भवेत् ? यद्यग्निष्टोमस्तोत्रस्य षोडश्यङ्गत्वेन विधीयते, तथा सति प्रधानस्याङ्गेन व्यवधानात्क्रियेत स्तोत्रशस्त्रम् । न चायमग्निष्टोमस्तोत्रस्याङ्गत्वेन विधीयते, षोडशयागाभ्यासस्य फलवत्त्वात् । न च निष्फलस्याङ्गता स्तोत्रशस्त्रं प्रति ।

सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥

कर्तव्ये स्तोत्रशस्त्रे तदङ्गत्वात् षोडशियागः फलवत्त्वादङ्गान्यपेक्षते । यद्यङ्गानि क्रियेरंस्तथा सति षोडशी स्वकार्यं नैव साधयेत् । तस्मात्क्रियेत स्तोत्रशस्त्रम् । क्रियमाणे त्वग्निष्टोमसंस्था न स्यात् । असत्यां वा ऽग्निष्टोमसंस्थायां तस्मात्स्तोत्रशस्त्राभावादतिरात्रे गृह्यते, न तूत्तरे ऽन्हि द्विरात्रस्य गृह्यत इत्यनेन वचनेन प्राप्नोति । तस्मात्किमनेन षोडश्युत्तर इति ।

उच्यते । द्विरात्रमात्रं वर्णोपात्तम् । द्विरात्रविशेषो नोपात्तः । द्विरात्रविशेषो वर्णैरुच्यते । तस्मादेतद्विधानं सामान्यविधानेनापि लभ्यते । किं तर्हि ? प्रमाणवेलायां केन शीघ्रं प्रमीयत इति प्रमाणशक्तिं निरूपयामो; न विधीयमानमर्थम् ।

अन्वयो वा ऽनारभ्यविधानात् ॥ ५४ ॥

षोडश्युत्तर इति प्रकरणादस्मिन्द्विरात्र इति गम्यते द्विरात्रमात्रे श्रुत्यैव विधानम् । तस्मादाङ्गिरसां द्विरात्रे । अनेन प्रथमप्राप्तिः पश्चात्तु प्रकरणाद्विना । किमर्थं तर्हि प्रकरणाम्नानं ? परिसङ्ख्यार्थम् । का ऽत्र परिसङ्ख्या ?

आङ्गिरसां द्विरात्रे एव षोडशी; नान्येषु द्विरात्रेषु । न पदार्थपरिसङ्ख्या । यदि बहवः पदार्था द्विरात्रेषु श्रूयेरँस्तथा सति एतद्वचनं पदार्थपरिसङ्ख्यां कुर्य्यात् । न च पदार्थाः श्रूयन्ते । तस्मात्क्रतुपरिसङ्ख्या जगत्सान्मि । कृतकरो विधिरनर्थकः स्यादिति कोऽर्थः ? रथन्तरसामत्वे ऐन्द्रवायवाग्रता विहिता, बृहत्सामत्वे तु शुक्राग्रता । उभयसामत्वे आग्रयणाग्रतेव विज्ञातव्या । जगत्साम शब्दे ऽनुच्यमाने ऽपि लभ्यते ।

अतः परं ऽयनीकाधिकरणं व्याख्यायते ।

स्वस्थानविवृद्धिर्वा ऽन्हामप्रत्यक्षसङ्ख्यत्वात् ॥८४॥

प्रथमस्य यज्ञभागस्यैन्द्रवायवाग्रता विधीयते । कुतः ? यज्ञस्य चोदितत्वात् । अर्थानीतश्चायमर्थो लभ्यत एव । यदि चाहरिति विवक्ष्येत, वाक्यं भिद्येत । निष्फलानि च तानि ।

पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात् ॥ ८५ ॥

यस्य दण्डकलितवदावृत्तिः तस्यैतद्दर्शनं नोपपद्यते । कथम् ? अस्मिन् गवामयने पूर्वपक्ष एवमुत्तरम् । तत्र पूर्वपक्षे ऽयनीका निविशते । सा निविशमाना आद्ये द्वे अहनी वर्जयित्वा भवति । तयोरैन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । शिष्टेष्वहस्सु निविशमानायाः सप्ताहानि परिशिष्यन्ते । तत्र सप्तम ऐन्द्रवायवाग्रता । तस्मिंश्च पूर्वपक्षः । अहः समाप्तं; ऽयनीकास्वपरिसमाप्ता । सा च परिसमापयितव्या । ततो त्रिवृत्वान् शिशुक्रन्दः ततः स्वरसामा । प्रथमःआग्रयणाग्रः, द्वितीयः स्वरसामा ऐन्द्रवायवाग्रः, तृतीयः स्वरसामा शुक्राग्र,स्ततो विश्व-

जिदाग्रयणाग्रः, ततः षडहात्मवृत्तः प्रयुज्यते । तस्यावृत्तस्य प्रथमं त्रयस्त्रिंशमहः तदैन्द्रवायवाग्रं प्राप्नोति ।

एवं दर्शनं नोपपद्यते दण्डकलितवदावृत्तौ । यदेतद्व्याख्यानं भाष्यकारेण कृतमिदं नोपपद्यते । कथम् ? अस्मिन्गवामयने चोदकेन ऽयनीका प्राप्नोति । विश्वजिति नामधेयेनाग्रयणाग्रता प्राप्नोति । पृष्ठ्यः षडह इति नामधेयेनैव षडहसम्बन्धिनी ग्रहाग्रता । अभिप्लवेन च नामधेयेनैकाहिको विध्यन्तः प्राप्नोति । चोदकप्राप्तेश्च नामधेयप्राप्तिर्बलीयसीत्युक्तम् ।

एवमिदं नोपपद्यते । यद्यपि चोदकेन प्राप्तिः स्यात्तथा ऽपि दशरात्रस्य धर्मा अतिदिश्यन्त इत्युक्तम् । दशरात्रप्रवृत्तौ च पूर्वस्मिन्पक्षे ऽपि दशधा विभागः प्राप्नोति । नवरात्रप्रवृत्तौ नवधा विभागः प्राप्नुयात् । नव नवरात्राः प्रवर्तन्ते दशमे । दशमे चैन्द्रवायवाग्रता । उत्तरे पक्षे ऽपि स एवान्त्यो दशमो भागः प्रथम आरभ्यते । तत्रैन्द्रवायवाग्रता प्राप्नोति । त्रयस्त्रिंशे ऽहनि पूर्वोत्तरपक्षयोर्न कश्चिद्विशेषः । यद्यपि नवरात्रः प्रवर्तते,तथा ऽपि को ऽयं विशेषः ? एकस्य त्रिवृत आरभ्य गणना ऽपरस्य प्रायणीयात् । तस्मात्तुल्या गणना कर्तव्या । तुल्यायां च गणनायां लिङ्गदर्शनानुपपत्तिरेव । अयं च विशेषो दर्शितः । एकस्य कृत्स्नं गवामयनमधिकृत्य गणना ऽपरस्य पूर्वस्मिन्नेव पक्षे गणना ।

अत्रोच्यते । यदि चोदकेन ऽयनीका प्राप्यते तथा मन्येते दोषा भवेयुः । एषा तु गवामयने प्रत्यक्षेण वाक्येन विधीयते । गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन्पक्षे निविशन्ते; न कृत्स्ने गवामयने ऽसम्भवात् । अकृत्स्नगवामयने भवेयुः । सम्भवति चावान्तरप्रकरणेन निवे-

शः । पूर्वपक्षवादिनस्तु दण्डकलितवदावृत्तिः । पूर्वस्मिन्पक्षेऽपि न समाप्यते । तस्य त्रिवृत आरभ्य गणना प्रवर्तते । अग्रताद्ययोरैन्द्रवायवाग्रतायाः प्रत्यक्षाम्नानात् । आदौ वाऽऽरभमाणस्य द्वितीयेऽहनि शुक्राग्रता स्यात् । तस्मात्प्रत्यक्षेणैन्द्रवायवाग्रत्वेन विरोधः स्यात् । ननु शुक्राग्रताऽपि प्रत्यक्षैव । उच्यते । सामान्येन शुक्राग्रता, विशेषेणैन्द्रवायवाग्रता । सामान्याच्च विशेषो बलवान् । तस्मात्तृतीयादारभ्य तस्य गणना ।

सिद्धान्ते त्वविरोधात्प्रथमादेव लक्षणया धर्मप्राप्तिं करोति । ऽप्यनीकां गृह्णाश्च गणना घटते ।

अत्र चोद्यते । ज्योतिरादय उत्पद्यमाना विशेषनामधेयेन धर्मान्गृह्णन्त एवोत्पद्यन्ते । यथा कुण्डपायिनामयनाग्निहोत्रमनीकत्वेन सङ्घातधर्मत्वेन प्राप्नोति । सा च पश्चात्कालीनत्वाद् दुर्बलोत्पन्नसंयोगत्वेन ।

उच्यते । अत्र पौर्वापर्यबाधो भवति । यथा विकृतौ दक्षिणाम्नानं चोदकेन प्राप्तं बाधित्वा निविशते विरोधात्, एवमिहाप्यनीका नामधेयप्राप्तं बाधित्वैव निविशते । यथाऽपच्छेदे पूर्वं नैमित्तिकमुत्तरेण विरोधे बाध्यते ।

अथ वा यदा यागः फले चोदितो भवति तदा धर्मानाकाङ्क्षति । एतस्यामवस्थायां किं चोदकेन धर्मा, उत नामधेयेनेति चिन्तायां नामधेयेन धर्मप्राप्तिः । तच्च विलक्षणया धर्मप्राप्तिं करोति । उपदेशेनैव गृह्णाति । अतिदेशाच्चोपदेशो बलवान् ।

इति दशमाध्यायस्य पञ्चमः पादः ।

# अथ षष्ठः पादः ।

पृष्ठ्यस्य युगपद्विधेरेकाहवद् द्विसामत्वम् ॥ ४ ॥

द्वन्द्वगर्भो बहुव्रीहिरयम् । अथ वा ऽनेकपदविशिष्ट इति । द्वन्द्वगर्भे प्रथमं तावत् बृहच्च रथन्तरं चेति द्वन्द्वः,पश्चादन्यपदार्थसम्बन्धः । अनेकपदे विशिष्टे बृहदस्य रथन्तरमस्येति सर्वाण्येवास्यशब्देन सम्बध्यन्ते निरपेक्षाणि ।

तत्र पूर्वः पक्षः । बृहच्छब्द उच्चरितः सम्बन्धिनमपेक्षते । रथन्तरशब्दो ऽपि तयोरानन्तर्येणोच्चरितत्वात्प्रथमं तावदानन्तर्येण सम्बन्धः पश्चादस्यशब्देनावृत्तिपक्षस्याश्रितत्वादिति वृत्तिशब्देन समासं ब्रवीति । स प्रागन्यपदार्थसम्बन्धाद्वन्द्वसमासो भवति,पश्चादन्यपदार्थसम्बन्धः । ननु विभाषेत्यनेन वैकल्पिकः समासः स्यात् । न । तत्र यदा वाक्यं तदा ऽन्यपदार्थसम्बन्ध एव भवति;नावान्तरसम्बन्धः । यदा समासस्तदा ऽवान्तरसम्बन्धो लभ्यते । एतस्मिन् द्वैते चोदकसामर्थ्याद्वाक्यमेवाश्रयामो न समासमित्याशङ्कां निराकर्तुं वृत्तिपक्षे च समासस्य नित्यत्वादित्यनेन ग्रन्थेन नित्यं समासं प्रतिपादयतीत्येषु। कथमेवमाह—द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनं ? वाक्चप्रियः, पञ्चगवधनो, दशगवधन इति । यदि पूर्वसमासो न क्रियेत तथा सत्यप्रयोगः प्राप्नोति । तस्माद्वन्द्वभाविनोः पूर्वपदयोरवान्तरसमासो नित्य इति ।

श्रुतितो वा लोकवद्विभागः स्यात् ॥ ८ ॥

एकादशिनी विहिता। तस्मिन्प्रकरणे प्रायणीयोदयनीययोरालभेरन्निति तत्रैकादशिनीतिकर्तव्यतामपेक्षते। अपेक्षमाणायाश्च देशविशेषत्वेन प्रायणीयोदयनीयौ विधीयेते। द्विवचनमितरेतरयोगश्च सर्वं विवक्षितमुपादीयमानत्वात्।

अत्र ग्रन्थः। तत्र द्वन्द्वभाविनोः प्राधान्यात् सत्यामप्यपेक्षायां भवति। समासमासे च इतरेतरयोगादिति प्रायणीयोदयनीयौ विधीयमानौ शब्दवृत्तेन प्रधानभूतौ। प्रधानस्य पदान्तरमपेक्षमाणस्यापि भवति समासः। यथा राजपुरुषो दर्शनीय इति प्राधान्यं पुरुषस्य दर्शनीयत्वमपेक्षमाणस्यापि राज्ञा सह समासो भवति, एवं प्रायणीयोदयनीययोरेकादशिना ऽनपेक्षमाणयोरपि भवति समासः। यदि न विधीयेयातां,तथा सति गुणभूतौ। गुणभूतयोश्चैकादशिनामपेक्षमाणयोः समासो न प्राप्नुयात्। तस्माद्विधीयते।

इति दशमाध्यायस्य षष्ठः पादः।



# अथ सप्तमः पादः ।

पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥

द्वितीये ऽध्याये हृदयस्याग्रे ऽवद्यतीत्येवमादीनि न यागं चोदयन्तीति स्थितम् । इयं यागचोदना अग्नीषोमीयं पशुमिति । किं हृदयादीनि हवींषि, तत्पश्चात् हृदयोपलक्षिता व्यक्तिर्हविरिति ।

तत्र पूर्वपक्षः । पशोरग्नीषोमीयसम्बन्धः श्रूयते; न हृदयादीनाम् । तेषामग्नीषोमसम्बन्धे लक्षितलक्षणा स्यात् । तस्याग्नीषोमीयाद्विध्यन्तः । तेन मध्यात्पूर्वार्द्धाच्चाऽवदाने प्राप्ते हृदयादिदेशा विधीयन्ते । तेषां च विकल्प इति ।

प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥

एकस्तावदप्रमेयदोषो लक्षणया हृदयादिदेशा इति । विकल्पदोषश्च । यस्य पशुव्यक्तिर्हविरिति तस्य तस्य । एवं व्यक्तेः सकाशादवदानं प्राप्नोति; न हृदयादिभ्यः । पश्चादवद्यतिरनुवाद इति, तत्रावद्यतिमनूद्य हृदयादानि विधीयेरन् । तत्राऽप्यथशब्दाग्रशब्दावनर्थकौ स्याताम् । विधातुं तावन्न शक्यते । वाक्यभेदभयात् । न चान्नूद्यते । अप्राप्तत्वात् । यदि च हृदयावद्यतिविशिष्टः पदार्थो विधीयते, जिह्वाया अवद्यतीत्येवमादयश्च, तथा सत्यथशब्दो ऽनुवादः स्यात् । कथम् ? अथशब्द आनन्तर्ये वर्तते,

यदा च पूर्वोत्तरौ पदार्थाववगतौ तदा ऽऽनन्तर्यं, यदा तु तौ न स्तः, कस्यानन्तर्यं ब्रूयात् ? अवगतौ चेद्यागादेवावगतः क्रमः। तत्राथशब्दानुवादवद्भवता यदग्रविधानमिष्यते येनाथशब्दाग्रशब्दौ यथानुवादे स्यातां सम हृदयादिविशिष्टो ऽवद्यतिर्विधीयते। एवं जिह्वादिष्वपि। एवं यस्माद्द्रव्यादवदीयते तद्धविरिति। यथा ऐन्द्रवायवं गृह्णातीति वाक्यं पृथक् कल्प्यते तदेव तुल्यं हविरेवमिहापि। न चैते एकादशावद्यतयोऽदृष्टार्थाः। पशोरेव सकाशात्प्रवदानभागित्वाच्च इति। अस्मिंस्तु पक्षे ऽदृष्टार्थत्वमेव दोषः। एतेषु यागार्थेषु न किं चिददृष्टम्। पशुचोदना ऽपि लक्षितलक्षणया हृदयादीनि लक्षयन्त्यग्नीषोमाभ्यां सह सम्बध्यते। एवं च येषामङ्गानामवद्यतिः श्रूयते तान्येव यागसाधनानि; नाङ्गान्तराणि। कुतः ? पशुशब्दो ऽयं हृदयादीनि वाक्यानि दृष्ट्वा ततो लक्षणावृत्त्या कल्पितः। यानि दृष्ट्वा कल्पितस्तान्येव लक्षयति। अन्येषामश्रूयमाणानां कः प्रसङ्गो येनेमानि हवींषि न लक्षयेत् ?

त्र्यङ्गैर्वा शरवद्विकारः स्यात् ॥ ११ ॥

एकादशानां तावन्मध्ये त्रित्वं विधीयते। सङ्ख्या हि केन चिदेकेनावान्तरभेदसंयोगेन प्रवर्तते। न च केषां चिदेकधर्मयोगो ऽस्ति। येनैकादशभ्यो ऽवच्छिद्येत त्रित्वम्। समासानुपपत्तिश्च स्यात्। अङ्गशब्दो यदि त्रित्वेन सम्बध्येत ततो न स्विष्टकृदादि। स्विष्टकृता न त्रित्वेन दोषादीन्येकया समवद्यतिक्रियया युक्तानि भवन्त्यग्निसंयोगेन। तत्रासमासार्थो विशेषणविशेष्यभावश्च घटते तेषु गृह्यमाणेषु।

अत्र चोद्यते। प्रकृतौ यागद्रव्यशेषसंस्कारको दृष्टः स्वि-

ष्टकृत्। नैतैर्दोषादिभिर्योगः कृतो,येन प्रतिपाद्येरन्। तस्मात्स्विष्टकृत्प्रतिरूपकं यागान्तरमेतदप्राकृतं कार्यं विधीयते। हृदयाविभिश्चोदकप्राप्तः स्विष्टकृत्केन वार्यते ?

अत्रोच्यते। यदि स्विष्टकृदनुवादेन ऽयङ्गानि विधीयेरन्, ऽयङ्गविशिष्टो वा स्विष्टकृतः, प्राकृतकार्यः स्यात्। इह तु ऽयङ्गानि प्रति स्विष्टकृद्विधीयते। तान्यपि प्रतिपादनीयानि तुषकणवत्। या तृतीयाविभक्तिः सा ऽर्थप्राप्तैवानूद्यते। हृदयादीनि तु येन केन चिदुपायेन प्रतिपाद्यन्ते; न स्विष्टकृद्यागेन। यदि यदङ्गैः स्विष्टकृतं यजति ततस्त्रिभिरिति तस्याङ्गशब्दः स्विष्टकृद्विशेषणार्थमुच्चार्यते, विशेषणं च न कार्ययोगि, विशेष्यश्च स्विष्टकृत्तस्य त्रिरभ्यासः प्राप्नोति। न चैकादशानां मध्ये त्रिसङ्ख्या विद्यते। क्रियायोगगुणयोगाभावात्। यश्चैकादशानां मध्ये त्रीणि गृह्णीयात्तेन चोद्धारप्रयत्नः कर्तव्यः। योऽप्यर्पितानां त्रयाणां ग्रहणं करोति, तेनापि समाहारप्रयत्नः कर्तव्यः। यस्तु दोषादीनि गृह्णाति तस्योभयदोषाभावः। प्रमाणान्तरेण समाहारोद्धारयोः कृतत्वात्।

ननु यागद्रव्यशेषस्याप्रतिपादनादप्रकृतता ऽऽपद्येत। तस्मात्त्रिरभ्यासः स्विष्टकृतः प्राप्नोति।

एवं वर्ण्यमाने उच्यते। स्विष्टकृदयमन्यत्र विधीयते प्राकृतात्कार्यादवच्छिद्येति।

अपि वा ऽऽग्नेयवद् द्विशब्दत्वं स्यात् ॥ २५ ॥

अगत्या ऽनुवादाश्रयणं कल्प्यते। अस्ति चात्र गतिः। यथा निर्वपतिशब्दः श्रूयमाणो दर्शपूर्णमासविध्यन्तं नियमयति पुनः श्रवणात्, एवमाज्यभागौ श्रूयमाणावैष्टिकाविति तन्नि-

यमयतः सादृश्येन विध्यन्तो नियम्यते । न चान्यत्साहश्यका-
रणमस्ति । तस्माच्चोदकनियमः । आज्यभागश्रवणात् ।

न वा शब्दपृथक्त्वात् ॥ २६ ॥

अग्न आवहेत्यावहनक्रियां प्रत्यग्निः कर्ता । तस्यां चा-
वहनक्रियां प्रति न ज्ञायते क आवोढव्यः । तत्राग्निमिति निर्दिश्यते । किं चिदावोढव्यम् । तत्रैतौ भिन्नार्थौ शब्दौ । एकः कर्ता ऽपरः कर्म । इह तु चोदकेनाज्यभागौ प्राप्येते । प्रत्यक्षेणाप्याज्यभागावेव । तत्रैकार्थौ द्वावपि शब्दौ स्याताम् ।

यदप्युच्यते चोदकनियमं करिष्यत्याज्यभागश्रवणं निर्वपतिवदिति, तदपि न युक्तम् । ओदनशब्दस्य श्रुतत्वात्स एव सादृश्यमापादयन्विध्यन्तनियमं करिष्यति । निर्वपतिशब्दे तु नान्यः शब्दो विद्यते, यो विध्यन्तनियमं कुर्यात् । तस्मान्न द्वाभ्यामेको ऽर्थो गम्यत इति युक्तम् । किं तर्हि ? प्राकृतविधिस्तुत्यर्थो ऽयमीदृशो यद्दर्शपौर्णमासिको विध्यन्तः शोभनो यदाज्यभागावपि स्तः ? तौ च यज्ञसंपत्तये । अनेन द्वारेण स्तुतिः ।

अधिकं वाऽर्थवत्त्वात्स्यादर्थवादगुणाभावे वचनाद-
विकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥

अर्थवादो ऽभिन्नवाक्यत्वात् । विधीयमानस्य च वाक्यशेषत्वेन स्तावको ऽर्थवादो भवति । न चैष गृहमेधीयस्य वाक्यशेषत्वेन घटते । तस्मात्कर्मान्तरम् । चोदकेनाज्यभागौ प्रत्यक्षेणाप्याज्यभागौ । एकस्यैवं पुनः श्रुतिरित्यनेन न्यायेन

कर्मान्तरम्। यदि गृहमेधीये दार्शपौर्णमासिको विध्यन्तो न स्यात्तथा सति प्रकरणान्तर इत्यनेन न्यायेन कर्मान्तरं स्यात्।

## प्रतिषेधः स्यादिति चेत् ॥ २८ ॥

आज्यभागशब्दो लक्षणार्थो भवेत्। अप्राकृतश्चादृष्टार्थः सन्निधिको भवेत्? तस्मात्पुनर्वचनं परिसङ्ख्यार्थम्। अन्येषां निवर्तकमित्यर्थः। ननु नात्र निवर्तकः शब्दो नापि निवर्त्यः। उभयोरभावाद् भ्रान्तिरेषा निवृत्तिरिति।

उच्यते। आज्यभागविधानं तावदेतन्न भवति। चोदकेन प्राप्तत्वात्तयोः। किं तर्हि? एतस्माद्वाक्यादन्यनिवृत्तिर्गम्यते। सा चाप्राप्ता सैव विधीयते। यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामित्युक्ते पुनः श्रूयते पञ्चम्यां विष्णुमित्रो भोजयितव्य इति,तत्र न भोजनं विधीयते प्राप्तत्वात्। अन्येषां च निवृत्तिर्विधीयते एवमत्रापि।

## अग्रहणादिति चेत् ॥ ३० ॥

प्रत्यक्षेणाज्यभागौ गृहमेधीये प्राप्येते। अन्यानि त्वङ्गानि चोदकेन। नन्वाज्यभागावपि प्राप्नुतः। सत्यम्। प्रत्यक्षेण तु शीघ्रं प्राप्तिर्विलम्बिता चोदकेन। तस्मादाज्यभागवर्जमन्यश्चोदकः प्राप्स्यति। एवं कर्मान्तरमपि न भविष्यति।

## न तुल्यत्वात् ॥ ३१ ॥

यदि विकृतिः शास्त्राण्यपेक्षेत पदार्थान्वा, तत आज्यभागौ न प्राप्स्येत प्रत्यक्षाम्नानात्। किं तर्हि? विकृतिः प्रकारमपेक्षते। स चैकः प्रकारः प्रकारापेक्षायां प्रमाणमस्ति; न

शास्त्रापेक्षायाम् । सौर्येण साधयेत् । कथमित्यपेक्षायां सादृश्ये-नाग्नेये बुद्धिर्भवति । आग्नेये ये प्रकारास्तान् गृह्णाति विकृतिः । ते चापेक्षिताः । शास्त्राणि पदार्थस्यानापेक्षितानि व्यवहितानि च । तस्मात्कृत्स्नं चोदकः प्रापयति । कृत्स्नप्रापितत्वान्नोपसंहार इति ।

ननु सामान्यस्यापि विशेषेणोपसंहारः सम्भवति । एवं तर्ह्यनर्थकश्चोदकः ?

अपूर्वतां तु दर्शयेद् ग्रहणस्यार्थवत्त्वात् ॥ ३९ ॥

भावयेत्फलम् । केन ? गृहमेधीयेन । कथमित्यपेक्षायां प्रकरणेनाज्यभागौ गृह्णाति । तौ च क्लृप्तोपकारौ दृष्टौ । तस्मात्तौ गृह्णाति । उपमितप्रापणं यावद्गृहमेधीयकथम्भावो नैव गच्छति तावत् प्रत्यक्षाभ्यामाज्यभागाभ्यां गृहमेधीय एकवाक्यतां गतः । तस्मादानुमानिकेन प्रकृतिवच्छब्देन न सम्बध्यते गृहमेधीयः ।

यत्त्वपूर्वमङ्गं तत् क्लृप्तोपकारं न भवति । अक्लृप्तोपकारत्वात्कथम्भावाकाङ्क्षां न शक्नोति पूरयितुम् । तत्रावश्यं प्रकृतिरपेक्षितव्या । अपेक्षितायां च चोदकेन निराकाङ्क्षीक्रियते ।

प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात् ॥ ४० ॥

शंय्वन्ताङ्गरीतिर्विधीयते । सा च विधीयमाना ऽज्यभागवन्निराकाङ्क्षीकरोति प्रायणीयाम् । तस्यां च द्वे संप्लुते । ते तत्र पूर्वस्यां शंय्वन्तायां गृह्यमाणायामुत्तरस्य शंयोः प्राग्ये पदार्थाः कर्तव्या अवगतास्ते बाध्येरन् । उत्तरस्यां तु गृह्यमाणायां न किञ्चिद्बाधितं भवति । शब्दार्थश्च सम्पादित एवमुत्तरस्यापि । शं-

ष्वन्तत्वाविशेषात् । अनुयाजप्रतिषेधार्थवत्त्वं च । इतरथा ऽनुवादमात्रमनर्थकं स्यात् । सन्तिष्ठतिश्चानुवादः ।

प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ७१ ॥

नात्राङ्गरीतिर्विधीयते । किं तर्हि ? सम्पूर्वस्तिष्ठतिः । एवं श्रुत्यर्थो ऽनुगृहीतो भवति । इतरथा शंय्वन्ततायाः प्रायणीयायाश्च सम्बन्धं कर्तुं सन्तिष्ठतिरुच्चार्येत तत्रात्यन्तं वाक्यं स्यात् । त्रिविधा ऽपि श्रुतिरुत्सृज्येत । सन्तिष्ठतिविधाने चोदको ऽङ्गानि प्रापयति । तस्मादाज्यभागन्यायो ऽत्र नास्ति । तत्र पूर्वां शंय्वन्ततामतिलङ्घ्य यो गच्छेत्तेनागमो बाधितः स्यात् ।

यथा श्रुतीति चेत् ॥ ७२ ॥

न चोदनैकत्वात् ॥ ७३ ॥

पञ्चावत्तैव वपा ऽऽचर्य्येति किमत्र विधीयते ? त्वत्पक्षे येन देयमपि । न ह्यत्रावदानोद्देशेन सङ्ख्या विधीयते । किं तु वपोद्देशेन पञ्चावदानमुद्दिश्य विशेषणम् । अस्य चाविवक्षोक्ता; नोद्देश्यस्यापि ।

उच्यते । अवत्तेसनेन विधानेन द्रव्यमवदानसंयुक्तं स्त्रीलिङ्गमेकसङ्ख्यायुक्तं चोद्यते । तच्चानूद्य पञ्चसङ्ख्या विधीयते । तस्य चानूद्यमानस्य यदि लिङ्गसङ्ख्यं विवक्ष्येत, वपया च विशिष्येत, वाक्यभेदः स्याद्ग्रहाधिकरणन्यायेन । तस्मादवदानप्रातिपदिकस्य पञ्चसङ्ख्या विधीयते । सा च विधीयमाना प्रकरणाद्यागेन गृह्यते । तच्च प्रकरणाविशेषात्सर्वावदानेषु निविशते । नन्वेवकारश्रवणादन्यनिवृत्तिर्गम्यते;न पञ्चसङ्ख्याविधानम् । यथा षड्विंशतिरित्येव ब्रूयादिति चतुस्त्रिंशाद्याद्भ्य-

स्यर्थः न षड्विंशतिविधानार्थम्,एवमिहापि चतुरवदाननिवृत्त्यर्थमिदं; न पश्चावत्ताविधायकम् । तस्मात्पञ्चावदानमपि न प्राप्नोति । अन्यपरत्वाद्वाक्यस्य ।

उच्यते । पञ्चसङ्ख्यैवात्र विधीयते । तस्यां च विधीयमानायां चोदकप्राप्तो नैव भवतीत्यर्थादेवकारार्थो लभ्यते, सोऽनुवादः । यत्र तु द्वे सङ्ख्ये प्राप्नुतस्तत्रैवकारोऽन्यतरन्निवर्तयेत् । तत्रैवकारार्थः परिगृह्यते । इह तन्नास्ति ।

इति दशमाध्यायस्य सप्तमः पादः ।



# अथाष्टमः पादः ।

प्रतिषेधः प्रदेशे ऽनारभ्यविधाने च प्राप्त-
प्रतिषिद्धत्वाद्विकल्पः स्यात् ॥ १ ॥

न होतारं वृणीते, नानुयाजेषु येयजामहं करोतीत्यत्र पूर्वः पक्षः । अयं न श्रुत्या कर्तव्यतां प्रतिषेधति । ये धातुनामनी ते अपि तामेव विशेषयतः । एवं सर्वाणि पदानि स्वार्थवृत्तानि भवन्ति प्रतिषेधे । पर्युदासे तु लक्षणावृत्तानि भवन्ति । यथा ऽब्राह्मणमानयेत्यत्र न ब्राह्मणपदं चान्यस्य लक्षणार्थमुच्चार्यते क्षत्रियादेर्न स्वार्थमेवमिहाऽपि नञ्शब्दो ऽनुयाजशब्दश्चान्यस्य यजतेर्लक्षणार्थावुच्चार्येयाताम् । तस्मात्पर्युदासो न ग्राह्यः ।

ननु प्रतिषेधे ऽपि पर्युदासफलं भवत्येव । यथा दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्यायेति । अत्र ब्राह्मणजातिर्वर्णैरुपात्ता । तदुपलक्षिता च व्यक्तिः । नैव सोपात्ता । कौण्डिन्ये ऽनुपात्ता ऽन्यव्यक्तिः । तत्र यद्दधिदानमवर्णं कौण्डिन्यः प्राप्नोति तद्वर्णेन तक्रदानेन विरोधाद्बाध्यते । एवमत्रापि यज्ञसामान्यं वर्णोपात्तं यज्ञविशेषश्च लक्षणया नानुयाजेष्विति वर्णोपात्त एव यज्ञविशेषः । तत्र श्रूयमाणः प्रतिषेधः सामान्यं बाधते । चोदकस्त्वश्रूयमाणः कल्पनीयः । कल्पितो ऽप्यङ्गानि सामान्येन ब्रवीति । न होतारं वृणीत इति

विशेषेण श्रूयमाणमुपमितकल्पितं सामान्यमाप्तिं बाधते ।

उच्यते । नकारो ऽयं निवृत्तिं ब्रवीति । सा च प्रवृत्तिमन्तरेण न सम्भवति । सामान्यशास्त्रेण वा भवेद्विशेषशास्त्रेण वा । यद्यनुयाजेषु ये यजामहो न स्यात्तथा सति प्रवृत्तिरेव न स्यात् । एवं च प्रतिषेधानर्थक्यमेव स्यात् । यथा तर्हि ब्राह्मणो न हन्तव्य एवं भविष्यति । न ह्यर्थवद्वचनं प्राप्तम् । कुर्यां वा न वेति यदा करोति तदा प्रतिषिध्यते, न हन्तव्य इति । तत्रार्थप्राप्तस्य शास्त्रेण निरबाधः । इह तु द्वे शास्त्रे । ते द्वे अपि ग्रहीतव्ये । तयोर्विरोधाद्विकल्पः स्यात् । चोदको ऽप्येवमेव ।

अपि चैकस्य शास्त्रस्य कर्तव्यता प्रमेया ऽपरस्य निवृत्तिः । तस्माद्भिन्नविषयत्वान्न बाध्यबाधकभावः । तस्माद्विकल्पः । न चेदं पूर्वपक्षोक्तिमात्रं पारमार्थिकमेव तथा सूत्रभाष्यकारावाहतुः । सर्वप्रतिषेधो वा संयोगात् पदेन स्यादिति वचनेन भङ्क्त्वा प्रतिषिध्यते । आनुमानिकी प्राप्तिः प्रकरणाम्नानात् । तत्र विकल्पोऽभ्युपगतो नानर्थक्येन प्रमाणेन । आनर्थक्यं हि परित्यागे कारणं; नोपादने । तस्माद्युक्तो विकल्पः ।

अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥

प्रतिषेधशास्त्रस्य भ्रान्तिः कल्पनीया, विकल्पापत्तेः । द्विरदृष्टकल्पना च प्रतिषेधात्क्रियायां को ऽप्युपकारो भवतीति विधौ क्रियायां न स्यात् । पर्युदासे तत्र लक्षणा केवला । अदृष्टकल्पनायाश्च लक्षणा ज्यायसी । नन्वर्थैकत्वाद्विषयं न्यायो ऽत्र नास्ति । येनैकवाक्यता स्यात् ।

उच्यते। सत्यमयं न्यायो नास्ति। किं तु यथा दध्ना जुहोतीति होमः पूर्वेण वाक्येन प्राप्तो विपरिवर्तते, तत्र दधि विधीयते, भवति चैकवाक्यत्वम्; एवमिहापि ये यजामहं वि-परिवर्तमानमनूद्य पर्य्युदासार्थो विधीयते। तथा चोक्तं ऽपि यत्प्रकृतिवत्पितृयज्ञे न तद्वरणवर्जमिति। अथ वा येयजामहः सामान्यवाक्येन प्राप्यमाण एवानुयाजवाक्येन विशिष्यते। अनुयाजवर्जं येयजामहं करोतीति। पितृयज्ञेष्वेवमेव।

अत्र ग्रन्थः। नन्वनुयाजसम्बन्धेन शब्दस्य समासः प्राप्नोति। पर्युदासपक्षे समासः स्यात्। तस्माद्विकल्प एवा-श्रीयते।

उच्यते। विभाषेत्यनेन समासो वाक्यं वा भवति। यदि समासलक्षणमेवाश्रीयेत, राज्ञः पुरुष इत्यप्रयोगः स्यात्। तस्माद्राज्ञः पुरुष इत्येतदपि साधु। राजपुरुष इत्यप्युभयस्या-नुगमः स्यात्। यत्रानुगमो नास्ति तत्र साधुप्रयोगो यथा भावीति तेनासत्यपि समासे स एवार्थः समासे ऽपि। तेनासमा-सत्वमदोषः। नित्यो ह्यस्य नञः सुबन्तसम्बन्धे स इति को ऽभिप्रायः? भिन्नार्थावेतौ वाक्यसमासौ। वाक्येन पुल्लिङ्गैक-त्वविशिष्टः पुरुषः प्रतीयते। समासे तु न ज्ञायते किं द्वयोः पुंसोरुत बहूनामुत स्त्रिया उत नपुंसकस्येति। तस्माद्वाक्य-समासौ नैकार्थौ। गोशब्दे त्वेको ऽर्थः प्रतीयते। तत्र यस्यानुगमः स साधुरितरे ऽपभ्रंशाः। यथैको गोणीशब्द आवपने साधुर्न सास्नादिमति। अत्र राजपुरुष इति लिङ्गसङ्ख्यानियुक्ते वाक्ये नित्यं समास एव साधुः। तद्युक्ते राज्ञः पुरुष इति वाक्यमेव। अत आह—वा वचनानर्थक्यं च स्वभावसिद्धत्वादिति। तेन पर्य्युदासो नास्ति। समासाभावात्।

अत्रोच्यते । समर्थः पदविधिरिति समर्थयोः समासः । सामर्थ्यं च यदि लिङ्गसङ्ख्यादिकं नापेक्षते राजशब्दस्ततः स्यात्ततः पुरुषेण समस्यते । तस्माल्लिङ्गसङ्ख्यावियुक्तः श्रूयमाणः समास एवार्थः । प्रतीतेस्तुल्यत्वात् । एवं सत्यप्येको ऽर्थः । तस्मादुभयोरनुगमः कर्तव्यः । उभयोश्चानुगमाद्वाक्ये पर्य्युदासः सिद्धः ।

अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

तौ न पशौ करोति न सोम इत्याज्यभागयोः पर्य्युदासो न घटते । यदि पशुप्रकरण इदं श्रूयते, तथा सति चोदकप्राप्तौ पर्य्युदस्येयाताम् । आर्षेयवरणवदाज्यभागप्रकृतिवत्कुर्यात् । इह तु दर्शपूर्णमासप्रकरण इदं वर्तते । तत्रेयं वचनव्यक्तिराज्यभागवर्जं दर्शपौर्णमासौ कुर्य्यादिति दर्शपूर्णमासविधिशेषः स्यात् । ततो विधानमाज्यभागयोरनर्थकं स्यात् । पशावित्ययं च प्रमादपाठः स्यात् ।

अथोच्येत नाज्यभागानां नञः सम्बन्धः; अनाज्यभागौ दर्शपूर्णमासाविति । किं तर्हि ? पशुशब्देन । यद्दर्शपूर्णमासयोराज्यभागौ कुर्य्यात्तदपशौ पशुवर्जितयोरिति ।

एतदपि न । अपशुत्वाद्दर्शपूर्णमासयोः । तस्मात्पशावाज्यभागयोः प्रतिषेधः । ततश्च विकल्प इति स्थितम् । आनर्थक्यात्तदङ्गे ऽप्वित्ययं न्यायो ऽत्र नास्ति; सोमे येन प्रतिषेधः स्यात् । वाजपेयस्येति षष्ठ्या सम्बन्ध्युपात्तस्तस्य सप्तदशारत्निता विधीयते । सम्बन्धमात्रं यागाङ्गस्याऽप्यस्त्येवेति यूपे निवेशः । इह त्वाधारत्वेन सोमः श्रूयते; न सम्बन्धिमात्रतया । न च परम्परासम्बन्धे ऽस्त्याधारत्वमिति साक्षादेवायं

सोमसम्बन्धः प्रतीयते । स चाप्राप्त इति । तस्मादर्थवादार्थं सोमग्रहणम् ।

शिष्ट्वा तु प्रतिषेधः स्यात् ॥ ६ ॥

तृतीये प्रतिषेधः । न तत्र पर्य्युदासो भवति । यद्यनतिरात्रे गृह्णातीति अतिरात्रे न ग्रहीतव्यः । नात्र प्रतिविधानानर्थक्यं षोडशिनि गृह्णीयादिति । तथा ऽप्ययमेव दोषः ।

न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च ॥ ७ ॥

चतुर्थे नास्ति पर्य्युदासः । जर्तिलयवाग्वा जुहुयादित्यनेन सम्बन्धेन पर्य्युदासाभावः । यदि होमे पयश्च जर्तिलयवागूश्च प्राप्नुयात्तथा सति पर्युदासः स्यात् । न चैतयोः प्राप्तिः । पयसस्तु केवलस्य ।

अथैवमुच्येत जर्तिलयवाग्वा जुहुयादिति, ततो जर्तिलविधानमनर्थकम् । किं तेन विहितेन ? अथैवमुच्येतानाहुतिः कर्तव्येति । तथा सर्वमेव न घटते । तस्माज्जर्तिलयवाग्वा जुहुयादिति विहिता यवागूरनेन निषिध्यते । निषिध्य पयो विधीयते । तस्माद्विकल्पः ।

उच्यते । अर्थवादो ऽयमनाहुतिर्जर्तिलाश्चेति । अनाहुतिवचनेन प्रतिषिद्धस्य विकल्पमिच्छति । स च पयसा जुहुयादित्यनेनैव लभ्यते, विकल्पो विना प्रतिषेधवचनेन । तस्मात्प्रतिषेधो न घटते । सर्वस्त्वयं पयसा जुहुयादित्यस्य विधीयमानस्य वाक्यशेषत्वेन घटते । यथा देवदत्तः शोभनो विद्वानित्येवंगुणविशिष्टो ऽपि यज्ञदत्तमपेक्ष्याऽविद्वानशोभन-

श्चेति । तत्र ये देवदत्तस्य निन्दास्तुती न ते देवदत्तार्थमुच्चार्येते । किं तर्हि ? यज्ञदत्तार्थे । एवमत्रापि निन्दास्तुती पयोविधानार्थे ।

अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

नन्वदृष्टार्थत्वात्पदाहवनीययोर्न विकल्पो,न बाध्यबाधकभावः । कथमदृष्टार्थता ? याग आधारं नाक्षिपति । विना ऽप्याधारेण सिध्यमानत्वात् । यदि वा ऽऽधारमाक्षिपेत्तथा सत्याहवनीयो नियम्येत । यथा ऽग्नेयो ऽष्टाकपालो भवतीत्यष्टाकपालेन द्रव्यमाक्षिप्तं तत्र व्रीहयो नियम्यन्त इत्याधारो वचनसाध्यर्थाद्विधीयते । तस्माद्यथा प्रयाजा अदृष्टेनोपकुर्वन्तो नोपहोमादिभिः सह विकल्प्यन्ते न च बाध्यबाधकभावः, एवमिहाऽप्याहवनीयपदयोः । तथा च न देवाग्निशब्दक्रियायां प्रतिनिधिरित्युक्तम् । तेन प्रतिनिधिकाण्डन्याये स्थिते समुच्चयस्यैव युक्तत्वात्कथमिदमधिकरणमारभ्यते ?

उच्यते । सत्यमाग्नेयो ऽष्टाकपालो भवतीत्यनेन यथा द्रव्यापेक्षस्तथा न यागेनाक्षिप्त आहवनीयः । तथा विना नाकाङ्क्षितः सम्बध्यते । यदाहवनीय इति सप्तम्यन्तं साकाङ्क्षं जुहोतीत्यनेन निराकाङ्क्षीक्रियते । जुहोतीत्यपि साकाङ्क्षमाहवनीयेन निराकाङ्क्षीक्रियते । यद्याकाङ्क्षा न स्यात्तथा सति पदाहवनीये जुहोतीति सम्बन्ध एव न स्यात् । स च विधीयमानो ऽदृष्टेनैवोपकरोति । अवदानस्याधेयस्याधारतां प्रतिपादयति । एवं वर्ण्यमाने सिध्यतो बाधविकल्पौ । प्रतिनिधिस्तु प्राप्नोति । दृष्टार्थत्वाद्द्रव्यान्तरवदिति ।

उच्यते । युक्तं द्रव्यान्तरेषु । तत्राग्नेयो ऽष्टाकपालो भवतीत्ययं यागफले चोदितः । यदा व्रीहयो न सन्ति प्रक्रान्ते कर्मणि तदा ऽपि यागचोदना द्रव्यमाक्षिपति । द्रव्येण विना यागो न निर्वर्तते । यदा त्वाहवनीयः प्रक्रान्तकर्मणि नास्ति,तदा यागचोदना नाक्षिपति आहवनीयम् । विना ऽप्याहवनीयेन यागस्योपपद्यमानत्वात् । तेनानाक्षिप्तत्वान्नास्त्याहवनीयस्य प्रतिनिधिः । नन्वनेन न्यायेन देवताया यागेनाक्षिप्तत्वात्प्रतिनिधिः प्राप्नोति ।

तत्र केचिद्वर्णयन्ति । सादृश्येन प्रतिनिधिः । यदि देवताशब्दो न स्मर्यते ततः सादृश्यमेव न ज्ञायते । अथ स्मर्येत तथा सति स एवोच्चारणीयः । एवं वर्ण्यमाने यदा व्रीहयो नष्टाः प्रक्रान्ते कर्मणि वचनसामर्थ्याद्यागो ऽवश्यं समापनीयः । न च व्रीहीन् स्मरति,कीदृशा व्रीहय इति । तेषां च स्मरणान्न शक्नोति सादृश्यं सम्पादयितुम् । ईदृश्यामवस्थायां यागो नैव कार्य्यः । न चेदृश्यवस्था नास्ति । कदा चिद्विद्यते । तस्मात्सादृश्याभावाद्देवतायाः प्रतिनिधिर्नास्तीति । एतदयुक्तम् ।

तेनान्या उपपत्तिर्वक्तव्या । सा च षष्ठे वर्णिता, न प्रतिनिधीयमाना देवता भवतीति । तेनादृष्टार्थत्वादाहवनीयस्याक्षेपात्प्रतिनिधिकाण्डेन नेदं विरुद्धम् । अपि चाहवनीयः पदनिरपेक्षः सप्तम्या ऽऽधारत्वं प्रतिपद्यते । पदमप्याहवनीयनिरपेक्षम् । यथा व्रीहिभिरिति कारकविभक्तिर्यवनिरपेक्षान्प्रतिपादयति यागसाधनत्वेन, तथा यवैरिति तत्र यः समुच्चयं कुर्य्यान्नासौ पुरोडाशं न निर्वर्तयति । किं तु वाक्येन यो ऽर्थः प्रतिपादितस्तम्बाधते । एवमिहापि ।

अपि च व्रीहियवाभ्यां मिश्राभ्यां पुरोडाशो निर्वर्तितो;

न प्रत्यक्षविरोधः । पदाहवनीययोस्तु समुच्चये पदे आहवनीयः क्षिप्येताहवनीये वा पदम् । तत्र यदाहवनीयो ऽधिकरणं तत्र व्यवधानात्पदमधिकरणं न स्यात् एवं पदे ऽपि । तस्मान्न वस्तुतो न शब्दतो वा पदाहवनीययोः समुच्चयो घटते । उदाहरणे तु चोद्यते । पदे जुहोति, वर्त्मनि जुहोति, इदं जुहोति-श्रवणं तुल्यमाहवनीयपदयोः । एकत्रापि होमसामान्यमन्यत्रापि तदेव । तस्मादत्र सामान्यविशेषाभावाद्बाध्यबाधकभावो न घटते । यथा दधि ब्राह्मणेभ्यो दीयतां, तक्रं कौण्डिन्यायेति । तत्र ब्राह्मणशब्देन ब्राह्मणजातिर्वर्णैरुपात्ता कौण्डिन्यव्यक्तिः । न च कौण्डिन्ये सामान्यं विद्यते । यथा गोत्वमश्वादिभ्यो व्यतिरिच्यते, शाबलेयादीनन्वेति, तद्वद्गोत्वं प्रत्यक्षेणोपलभ्यते । न च कौण्डिन्ये वस्तु विद्यते अवान्तरसामान्यं यत्र प्रत्यक्षेण गृहीत्वा शब्दः प्रवर्तेत । तस्मात्कौण्डिन्यशब्देन विशेष एवोच्यते ।

अपि च वाक्यार्थे पदविधानमिदम् । वाक्यार्थश्चेन्न सामान्यं प्रत्यापयति । तस्माद्विशेष एव शब्देनोच्यते । तत्र चानन्तर एव कार्यम् । इतरस्मिन्सामान्येन विशेषः प्रकरणादिभिरवच्छेत्तव्यः । तस्माच्चत्र विप्रकर्षः । इह तु सन्निकर्षः । अनेन न्यायेनाहवनीयो बाध्यते विशेषश्रुतेन गार्हपत्येन । अथ वा इदमेवोदाहरणं सम्भवति । आहवनीयः पवमानेष्ट्यादिभिरुत्पादितः प्रयोजनमपेक्षते । तस्यानारभ्यवादेन होमे ऽधिकरणभावो विधीयते । इह तु यदि विशिष्टो होम उत्पाद्यते तत्राहवनीयो न शक्यते विधातुम् । पदेन होमस्य व्याप्तत्वात् । आहवनीयो विधीयमान उत्पत्तिवाक्येन यादृशा होमा अवगतास्तादृशाननूद्य विधीयते । तत्र शुद्धेषु शब्देषु विधातुं युज्यते ।

अधिकरणोत्पन्नेषु न घटते ।

मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात् ॥ २० ॥

अनारभ्यप्रधानसंयोगेन स्वाहाकारवषट्कारौ श्रूयेते । तौ चानारभ्यवादौ मन्त्रेण विशेष्टुं न शक्यते । मन्त्रस्य प्रमाणान्तरप्राप्तमर्थं प्रकाशयितुं सामर्थ्यं, नानारभ्यवादं विशिष्टम्। अविधायकत्वात् । तस्मान्न चात्र च्छागो वा मन्त्रवर्णादिति न्यायः । कथं ? तत्र यावदग्नीषोमीयापूर्वं तावन्मन्त्रः प्रयोक्तव्यः । अग्नीषोमीयं पशुमालभेतेति न कश्चित्पशुजातिविशेषः श्रूयतेः तत्रावश्यं जातिविशेषो ग्रहीतव्यः । स यद्यनेन गृह्यते यस्तु नियवत्ततो यद्यपि चोदना न विरुध्यते श्रुतं मन्त्राम्नानं तत्पाक्षिकं कृतं स्यात् । तस्माद्यैषा नियमेन चोदना सा मन्त्रवर्णतो वचनेन जातिविशेषपरैः कल्प्यते । न च मन्त्रविध्योर्विशेषणविशेष्यता, प्राप्तार्थप्रकाशकत्वान्मन्त्राणामित्युक्तम् ।

अपि च पृथिव्यै स्वाहेति पृथिव्या इत्यनेन देवतोच्यते । तस्याश्च संप्रदानत्वात्स्वाहाकारो वा प्राप्नोति । तत्र स्वाहाकारो नियम्यते वषट्कारनिवृत्त्यर्थम् । वषट्कारनिवृत्तिपरत्वाच्च वाक्येष्वन्येषु क्रतुस्वाहाकरो नास्तीत्याशङ्का नास्ति । स्वाहा पृथिव्या इति यद्येवं श्रूयेत तथा सति यो ऽसावनारभ्यवादो न विहितः स्वाहाकारस्तमनूद्यास्मिन्नियम्येत्यादि । अस्मिंश्च पक्षे नान्येषु । न चेदृशमपि वाक्यमिति ग्रहणे समानविधानं स्यात् । यत्समानविधाने गुणकामानां प्रवृत्तिस्तन्नोपपद्यते । कथं ? प्रकृतौ वैकल्पिको ऽग्निरुत्तरवेद्यां निधातव्यः । स्थाने वा सम्बन्धचोदकेन वैकल्पिक एव प्राप्नोति । तत्र

पुनर्वचनं नियमार्थं भविष्यति । यथा खदिरादिपुनर्वचनं नियमार्थम् । यद्यग्निर्द्विरात्रादीनां प्रकरण आम्नायेत, अग्निरत्र कर्त्तव्य इति, एवं नियामकं स्यात् । यथा खादिरो यूपो भवतीति । अयं त्वग्निरनारभ्य एवेतिकर्तव्यताविहितस्तद्विधायिभिर्वाक्यैस्तस्य क्रतुसम्बन्धः क्रियते । एतानि च वाक्यान्यस्मिन्नेव प्रकरणे । तत्र च द्विरात्रादीनां प्रकरणं न विपरिवर्तते । येन द्विरात्रादिषु चोदकेन प्राप्तस्य नियामकानि स्युः । तेन द्विरात्रादीनां चोदकेन वैकल्पिक एवाग्निः । पुनर्वचनं तु यदाग्निस्तदाऽऽग्रण्यकामानां प्रवृत्तिरिति । आभ्यां च सह स्विष्टकृतः सकृच्चे द्विरभिघारेण च तदाभिवचनात् । यज्जुहोतीति यदि जुहोतिरनूद्येत तथा सति हविर्लक्षणार्थमुच्चार्येत । अयं दोषः स्यात् । तस्मादियं वचनव्यक्तिर्नास्ति । यच्चतुरवत्तं तज्जुहोतीति । तच्चतुरवत्तं विद्यते । विद्यमानत्वाच्च शक्यमनुवदितुम् । अनूद्य चतुरवत्तस्य होमसम्बन्धः क्रियते । तत्र होमादि वा चतुरवत्तार्थः । चतुरवत्तं वा होमार्थं, यदि होमश्चतुरवत्तार्थ इति ।

इति दशमाध्यायस्याष्टमः पादः ।
समाप्तश्च दशमोऽध्यायः ।



# अथैकादशोऽध्यायः ।

प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैकक-
र्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥

दशमेऽध्याये बाधाभ्युच्चयौ वृत्तौ । तत्राभ्युच्चयो नाम न किञ्चिद्वस्तुरूपं विद्यते । किं तूभयहोमैरनूयाजा न बाध्यन्त इति बाधाभावमात्रमभ्युच्चय इत्युच्यते । अस्मिंश्च दशमे चोदकमाप्तानां प्रत्यक्षविहितानां च पदार्थानामियत्ता चिन्तिता । इह त्वेकादशे इयत्ताविशेषश्चिन्त्यते । तत्र प्रयोगाः श्रूयन्ते । तत्र सेयमियत्ता किं तन्त्रेणोत आवृत्त्येति ।

ननु दशमानन्तरमङ्गानां तन्त्रावापचिन्ता युक्ता न इयत्तावधारणा । प्रथमेऽधिकरणे फलं चिन्त्यते । तच्चेयत्ता न भवति । तस्मात्तस्य दशमेन नास्ति सम्बन्धः । किमेकैकस्य फलमुत संहतानामिति कीदृशो दशमसम्बन्धः स्यात् ?

उच्यते । यदि समुदितानामेकं फलं ततस्तन्त्रावापचिन्ता घटते । अथैकैकस्य फलं, ततस्तन्त्रं नास्त्येव । तस्मात्प्रथमाधिकरणमारभ्यते तन्त्रावापसिद्ध्ये । द्वितीयादीन्यपि प्रसङ्गेन किं संहतान्यङ्गान्येकं क्रतूपकारं कुर्वन्ति, उत निरपेक्षाणीति । अथ वा तन्त्रावापसामान्येन प्रथममधिकरणं चिन्त्यते । यजेतेत्यनेनाक्षिप्तः कर्ता स विशेष्यते स्वर्गकामशब्देन । यथा राजा राजसूयेन यजेतेति । विशेषणं च कर्माङ्गं भवतीति । एवं च यदि स्वर्गं नित्यमेव कामयते, नान्यानि

ब्रह्मवर्चसादीनि, तथा सन्नसाधारणत्वात् विशेषणमवकल्प्यते। न चेदृशः कश्चिदस्ति। यदि वा स्वर्गं न कदा चित्कामयते,तथापि तमपेक्ष्य विशेषणं घटते। स्वर्गकाम एव य इति। किं त्वीदृशो ऽपि नास्ति यो न कदाचित्स्वर्गं कामयते।

अथोच्येत यस्यां वेलायां स्वर्गकामः तस्यां वेलायां दर्शपूर्णमासादीनि करिष्यति।

एतदपि न घटते। यावत्साङ्गं प्रधानं निर्वर्तयति तावदनेके कामा उत्पद्यन्ते। यदि च शुद्धमेव स्वर्गं कामयेत तथा यथाश्रुतौ दर्शपूर्णमासौ कृतौ स्यातां,नेतरथा। न चेदृशः कश्चिद्विद्यते। तस्मात्कालद्वारेण विशेषणं न घटते।

यो ऽय नित्यानुवादविरोध उक्तः स नोपपद्यते। कथं? यस्यापि स्वर्गकामशब्देन फलमभिधीयते तस्यापि नित्यानित्यविरोधो भवत्येव। दर्शपौर्णमासौ यावज्जीवं कर्त्तव्यौ जातौ पुनः कामेन कर्तव्याविति न कश्चिन्निमित्तेन विशेषो ऽस्ति। न चेदृशो नित्यानित्यविरोधो भवति। आग्नेयादय उत्पन्नाः। तेषामुत्पत्तिवचनेन नित्यत्वमवगम्यते; न काम्यत्वम्। ते तु विपरिवर्तमाना एकेन वाक्येन यावज्जीवं प्रतिविधीयन्ते, अपरेण स्वर्गम्। न च यावज्जीवस्वर्गकामचोदनयोः परस्परापेक्षा विद्यते। येन य एव यावज्जीविके कर्त्तव्यास्त एव काम्ये ऽपि कर्तव्या इति। तस्मात्काम्यनित्याभ्यामुत्पत्तिरपेक्षितव्या। तेन तदन्यथा वर्ण्यते। स्वर्गकामशब्देन निमित्तं नाभिधीयते। सप्तम्यन्तेन निमित्तमुच्यते। यथा भिन्ने जुहोतीति यद्वृत्तेन वा यस्यामुभयमिति। न चायं सप्तम्यन्तो, न च यद्वृत्तेन युक्तः। तस्मादनेन स्वर्गं कामयमानः पुरुषो ऽभिधीयते। स च पुरुषः स्वर्गं कामयते उत साधनत्वेनेति द्विप्रकारा ऽपि कामना

ऽस्ति। यद्ययं साधनत्वेन स्वर्गमिच्छति तथा सति प्रीतिविशिष्टेन द्रव्येण यागः साधनीयः, तदा न कश्चिच्छब्दो, येन फलमभिधीयेत । यः स्वर्गकामशब्दः स साधनवचनः । अनेनापि प्रकारेणानारब्धव्यमधिकरणम् । इदं षष्ठे निराकृतम् । स्वर्गस्य साध्यत्वेन कामना । किं कारणं सर्वे ह्येवं कामयन्ते, स्वर्गो मे स्यादिति ? साध्ये च मुख्या कामना, साधने तु नान्तरीयिका ? साधनेन विना साध्यासम्भवात् । तस्मात्साधने या कामना सा गौणी । अयं च यजेतेति भावनावचनः श्रुत्या पुरुषार्थमाक्षिपति । स चाक्षिप्तः किंशब्दं प्रथमं पूरयति । यदि च किंशब्दो यागेन पूर्येत तथा चोदितमपि यागं न कश्चित्कुर्यात् । यः स्वर्गं साध्यत्वेन कामयते तेन लक्षणयोपाय आक्षिप्तः । तत्रोपायत्वेन यागो विधीयते ।

अत्र ग्रन्थः । य एषां समुदितानामेकशब्दो वाचकस्तेनैतान्यभिधाय फलसम्बन्धः कृतो दर्शपूर्णमासशब्देनेति । य एषां समुदितानामिति केषामाग्नेयादीनामेकः शब्दो वाचक इति दर्शपूर्णमासशब्द इत्यर्थः । तेनैतान्यभिधायेति दर्शपूर्णमासशब्देनाभिधाय फलसम्बन्धः कृत इति, तदयुक्तम् । न दर्शपूर्णमासशब्दः समुदायवचनः । यदि समुदायवचनः स्यात्तथा सति समुदायो न द्रव्यं, न देवता, न क्रिया । किं तर्हि ? गुणः । तस्य गुणत्वाद्यागेन सामानाधिकरण्यं न स्यात् । तस्मात्समुदायिवचनोऽयम् । एकशब्दाभियोगादित्येतदन्यथा वर्ण्यते । भावयेत् । किं ? स्वर्गं । केन ? यागेन, करणेन, दर्शपूर्णमाससंज्ञकेन । स्वर्गः प्रधानभूतो, यागः साधनमुपादीयमानश्च । तस्मात्तेषामितरेतरयोगो विवक्षितः ।

अत्र ग्रन्थः । विशेषणमत्र विधीयमानं न भवति । न च द्वयोर्विधीयमानयोः परस्परसम्बन्धो भवति । अयुक्तमिदं दूषणम् । अरुणादीनामप्ययं दूषणप्रकारः स्यात् । यथा भवता वर्णितम् । बलीयांश्चायं न्यायः, यद्भावनया सर्वेषां सम्बन्ध इति । इतरेतरसम्बन्धस्त्वार्थः ।

अत्र ग्रन्थः । किं पुनरत्र विशेषणेन कार्यं यावता रूपवतामाग्नेयादीनां सन्निधानरूपो दर्शपूर्णमासाभ्यां यजेतेति शब्दः समुदायवचन इति । तदयुक्तम् । यथैवाग्नेयादीनां द्रव्यदेवतेन रूपवत्त्वम्, एवं प्रयाजादीनामपि । तत्र न कश्चिद्रूपविशेषो विद्यते । न च सन्निधाने । तस्मात्प्रकृतत्वाविशेषात्सर्वेषामेव फले विधानं स्यात् ।

यदपि च दर्शपूर्णमासाभ्यां स्वर्गमिति सम्बन्ध इति । एतदपि भावार्थाधिकरणे निराकृतम् । याग एव फले विधीयते । तस्माद्भावना सर्वविशेषणविशिष्टा विधीयते ।

अङ्गानां शब्दभेदात्क्रतुवत्स्यात्फलान्यत्वम् ॥ ५ ॥

समिधो यजतीत्येवमादीनि परस्परनिरपेक्षाण्युत्पद्यन्ते । उत्पद्यमानानि प्रयोजनमपेक्षन्ते । प्रयोजनापेक्षायां चैकैकं क्रतूपकारं साधयतीति । तेनार्थादेव विकल्पः ।

अर्थभेदश्च तत्रार्थे ह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥

इत्यनेन यदितरेतरयुक्तानां क्रतूपकारः प्रतिपादित एवं पूर्वपक्षनिराकरणं कृतं स्यात् । एवं च कृत्वा विकल्पपरिचोदना नोत्तिष्ठति ।

अभेदसूत्रं नेतरेतरयोगं प्रतिपादयेत् स्वरूपोपकारं प्रति ।

तथा च सति किं निराकृतं पूर्वपक्षस्य ? यदि क्रत्वन्तरवदित्युक्तं तदेकवाक्यत्वादिति न परिह्रियते । सर्वाणि च प्रधानस्योपकुर्य्युर्भिन्नानि च कार्याणि कुर्युस्तद्यथा कारकाणि कर्त्रादीनीति । अनेन किं सिध्यति पूर्वपक्षवादिनः ? एवमपि सर्वाण्येव प्रयोक्तव्यानि । सा च परिचोदनायाः स्वपक्षं वा स्थापयति, परपक्षं वा दूषयति । यश्च दृष्टान्तो ऽसौ सुतरामविकल्पं प्रतिपादयति ।

अयमप्ययुक्तो ग्रन्थः । समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते । समिद्यजिः प्रयोक्तव्य इति । यदि सत्तामात्रेणैव क्रियते तथा सति निराकाङ्क्षत्वादेषां प्रकरणेन सम्बन्ध एव न स्यात् । द्वयोर्हि साकाङ्क्षयोः सम्बन्धो भवति । तस्मादुत्पद्यमानानामेवैषां तिस्र आकाङ्क्षा उत्पद्यन्ते । विधायको नास्तीति चेत् ? अर्थवादाविना कल्प्यः । यत्र च विधायको विद्यते ऽङ्गानां तत्राप्येकं कार्यं वाच्यं सिद्धान्तिना । तत्र योपपत्तिः सा ऽत्रापि भविष्यति । इयंनयोपपत्त्यैतन्न घटते, यद्विधायको नास्तीति । तस्मादेतानि सूत्राण्यन्यथा वर्ण्यन्ते । अर्थभेदस्तु तत्रार्थे ह्येकार्थ्यादेककर्म्यमित्यनेन सूत्रेण सर्वेषामङ्गानामितरेतरयुक्तानां क्रतूपकारनिर्वृत्तिः फलं कथ्यते । कथंभावाकाङ्क्षायामुत्पन्नायामङ्गसम्बन्धः । स कथंभावो यस्मिन्नेव क्षणे प्रयाजान् गृह्णाति तस्मिन्नेवानुयाजादीन्यपि । न च भिन्नः कथंभावो,येन भिन्नानि सम्बध्येरन् । तस्मात्सर्वेषामितरेतरयुक्तानां क्रतूपकारनिर्वृत्तिः फलम् ।

शब्दभेदान्नेति चेत् ॥ ७ ॥

इति प्रत्यनुभाषणसूत्रम् ।

कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात् ॥ ८ ॥

इति प्रत्यनुभाषणपरिहारः ।

कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु ॥ ९ ॥

इति पुनः पूर्वपक्षः । यद्यपि यागः फलं प्रति विधीयत इतिकर्तव्यतां प्रत्यनूद्येत । न हि सकृदुच्चरित उभयार्थो लभ्यते । आवृत्तौ च वाक्यभेदः । अथोच्येत न यागमनूद्य सम्बन्धं करिष्यति । किं तर्हि ? भावनया सर्वेषां सम्बन्ध इति । तथा सतीतिकर्तव्यता न दर्शपूर्णमासाङ्गं स्यात् । तत्र को दोषः ? सौर्ये आग्नेयविध्यन्तो न स्यात् । आग्नेयस्येतिकर्तव्यताभावात् ।

आरम्भः शब्दपूर्वत्वात् ॥ १० ॥

नैवात्र यागमनूद्येतिकर्तव्यता विधीयते । किं तर्हि ? भावनयैवेतिकर्तव्यतासम्बन्धः । कथं ? यजेतेत्यस्मिन्भावनावचन उच्चरिते तिस्र आकाङ्क्षा जायन्ते । तत्र किमंशे भाव्यो यः पुरुषार्थः स उपनिपतति । द्वितीयस्यां करणं,तृतीयस्यामितिकर्तव्यता । एताश्चापेक्षा यौगपद्येन सम्बध्यन्ते,क्रमेणाख्यायन्ते । यथा ऽरुणया क्रीणातीति यस्मिन्नेव क्षणे एकहायनी सम्बध्यते तस्मिन्नेव क्षणे ऽरुणा ऽपि । न च भेदेन । एवमिहाप्येकक्षणोपनिपातस्त्रयाणाम् । प्रयोजकस्य प्रयोज्यं प्रति यो व्यापारः स भावनेत्युच्यते । यदुक्तं सौर्ये इतिकर्तव्यता न प्राप्नोतीति ।

उच्यते । भावनया सम्बध्यमानैवेतिकर्तव्यता करणमनुगृह्णती सम्बध्यते । यथा ऽरुणा एकहायनीपरिच्छेदद्वारेण क्रयेण सम्बध्यते । एवं सतीतिकर्तव्यता पौर्णमासीयागेष्वावर्तते

ऽमावास्यायागेषु च । तस्मादाग्नेयादीनां फलं साधयतामङ्गमितिकर्तव्यता । सौर्यो ऽपि फलं साधयतीतिकर्तव्यतया भवितव्यम् । अयं विषयस्तावद्दर्शित एव । भव्यार्थेन हीतिकर्तव्यता सम्बध्यते; न यागेन । यागस्तु पूर्वापरीभूत इतिकर्तव्यतां गृह्णाति;न निष्पन्नरूपः । यदा धातुमात्रमिदं तदा धात्वर्थे वर्तेत । न च द्वयोर्नाम्नोःसम्बन्धो ऽस्ति । एकेनापि समाप्येत । पूर्वस्मिन्नधिकरणे इवमवगतमितरेतरयुक्तान्यङ्गानि क्रतूपकारं कुर्वन्तीति । षष्ठे नित्ये प्रयोगे एकदेशेनाप्यधिक्रियते । काम्ये तु कृत्स्नामितिकर्तव्यतां यः शक्नोति कर्तुं सो ऽधिक्रियते,इति स्थितम् । एतेष्वधिकरणेषु स्थितेषु केयं चिन्ता,काम्येषु किमेकदेशप्रयोग उत सर्वाङ्गोपसंहार इति ? तस्मादयुक्तो ऽयं विचारो गतार्थत्वात् । तेनाङ्गानां तु शब्दभेदाधिकारभ्य यावद्विधिस्त्वेकश्रुतित्वाधिकेतावदेकमधिकरणं द्रष्टव्यम् ।

अनभ्यासो वा प्रयोगवचनैकत्वात् सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥३५॥

भाव्यः स्वर्गो भावको यागः । इतिकर्तव्यता यागस्यानुग्रहं करोति; न फलसाधिका । तस्याः फलं न श्रूयते, करणात्फलमिति । सत्यम् । करणस्य फलं साधयतो ऽभ्यस्यमानेतिकर्तव्यता महान्तमुपकारं करोति । तच्च महतोपकारेणानुगृहीतं महत्फलं करोति । अत्राह सकृदितिकर्तव्यता । कुतः ? भावनया करणेतिकर्तव्यते आकाङ्क्षिते । तत्र करणं फले व्याप्रियते । इतिकर्तव्यता करणमनुगृह्णती आकाङ्क्षिता । सकृत्कृतया च निराकाङ्क्षीकृता भावना । द्वितीयादिप्रयोगः के-

नाकाङ्क्ष्यते ? तस्मात्सकृत् ।

अत्र ग्रन्थः । यदा प्रयाजा, न तदा प्रधानयजिरपूर्वं वा । यदा यजिरपूर्वं च, न तदा प्रयाजा इत्येतदयुक्तम् । कथं ? यस्मिन्नेव क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव करणो भावः करणत्वेन व्याप्रियते । इतिकर्तव्यता ऽपि तस्मिन्नेव करणमनुगृह्णाति । यद्यन्यस्मिन्क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते, करणमप्यन्यस्मिन्भावकं, तथा सति भाव्यभावकसम्बन्ध एव न स्यात् । तस्माद्यौगपद्यं स्वर्गयागयोरेवमेव करणेतिकर्तव्यतयोः । तस्मादेषां तुल्यकालता । न चावान्तरक्रियाः परस्याभिप्रेताः । भिन्नकाला अपि सत्यः प्रयाजादिक्रिया एवाभिप्रेताः । तच्चायुक्तं, स्वरूपाणां भिन्नत्वादिति ।

बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥

वसन्ताय कपिञ्जलानालभेतेत्यत्र पूर्वः पक्षः । यथाक्षशब्दः साधारणवचनो विदेवनादिषु, एवं बहुवचनं साधारण्येन वर्तते त्रित्वादिषु । अथ वा यत्रैकत्वद्वित्वे न स्तस्तत्रायं वर्तते । एतस्मिन्पक्षे सामान्यवचनो ऽयम् । सिद्धान्ते ऽप्ययमेव शब्दार्थो न व्यावर्तते । अनेन तु नियमः ।

प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥४३॥

प्रकृतिरियम् । लोके यथा न्यग्रोधतले स्थातव्यमिति प्रथम एवावतिष्ठते, एवमिहापि । प्रधानकर्मार्थत्वादङ्गानां तद्भेदात्कर्मभेदः । भावनयेतिकर्तव्यता करणमनुगृह्णती सम्बध्यते इत्युक्तम् । इदानीं तु विचार्यते, किमाग्नेयादीनां तन्त्रेणेतिकर्तव्यतोपकरोत्युत भेदेनेति । भेदेनेति ब्रूमः । कथम् ?

आग्नेयादीनां सर्वेषामितिकर्तव्यतोपकरोति । उपकारवेलायां च प्रधानभूतानां तेषां साहित्यमविवक्षितम् । तस्मादेकैकस्येति एकदेशकालकर्तृत्वं वक्ष्यत्यङ्गप्रधानानाम् । तेनागृह्यमाणविशेषत्वात्सकृदेव प्रयुक्तोपकरोतीति । तस्मात्तन्त्रमङ्गानामनुष्ठानम् ।

इत्येकादशाध्यायस्य प्रथमः पादः ।



# अथ द्वितीयः पादः ।

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ १ ॥

किमाग्नेयो ऽग्नीषोमादिनिरपेक्षो देशादिभिः सम्बध्यते उताग्नीषोमादिसहित इति ।

अत्र पूर्वः पक्षः । आग्नेयादयः प्रज्ञातास्ताननूद्य देशादयो ऽप्रज्ञाता विधीयन्ते । तेषां चोद्दिश्यमानानामितिकर्तव्यतया सम्बन्धः । तस्मिंश्चाग्नेयो ऽग्नीषोमादिनिरपेक्षः । इतिकर्तव्यता चाग्नीषोमीयनिरपेक्षस्यैवाग्नेयस्य न्यायेतिकर्तव्यताया आवृत्तिः ।

अत्र चोद्यते । यद्याग्नेयमग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं कृत्वा ऽग्नीषोमीय आभ्यते तदेतरेतरयोगः सो ऽत्यन्तं बाधितः स्यात् । यथा सौर्ये आग्नेयेनेतरेयोगाशङ्का नास्ति, एवमिहाऽपि प्रसज्यते । तस्माद्यदि तन्त्रेणेतिकर्तव्यता क्रियते, एवमितरेतरयोगः संपादितो भवति; नान्यथा ।

उच्यते । इतरेतरयोगादयमर्थो लभ्यते । एकेनाप्यक्रियमाणेन यागेन फलं न प्राप्यते । तस्मादेकैकस्य क्रियमाणा कृत्स्नेतिकर्तव्यता इतरेतरयोग न बाधते ।

सिद्धान्तस्तु यद्यप्ययं कालकारकविभक्तियुक्तः श्रूयते, तथाप्यनुपादेयः । अवश्यं च क्रियया सहास्य सम्बन्धः करणीयः । तस्मिंश्चावयवत्वे यागं प्रति काला उपादीयन्ते । तस्मादितरेतरयोगादिति विवक्षितम् । करणविभक्तिश्चेतिकर्त-

ऽव्यतया विना नोपपद्यते । तस्मादितरेतरयुक्तास्त्रयो यागाः पौर्णमास्यां सेतिकर्तव्यताका विधीयन्ते । एवममावास्यायामपि । एवं च धात्वर्थो ऽन्यत्र विहितो भवति । तत्र श्रुतिरनुगृहीता । इतरथा धातुः परार्थमुच्चार्येतेति । एवं देशे ऽपि द्रष्टव्यम् । कर्तारस्तु सेतिकर्तव्यताके प्रयोगे नियुज्यन्ते । क एवं करिष्यतीति । एतस्याममावास्यायां यजमाने प्राप्ते वचनादध्वर्य्वादयो विधीयन्ते । तस्माद्यद्येकमितरेतरनिरपेक्षं करोति, तथा सति देशं प्रति विधीयमानानामितरेतरयोगो बाधितः स्यात् । काले ऽप्यङ्गैर्विना करणविभक्तिर्बाधिता स्यात् । तस्माद्वचनात्तन्त्रं वा ।

ननु पौर्णमास्यां पौर्णमास्या यजेतेत्यनेन कालविधानं न क्रियते । उत्पत्तिवाक्येनाग्नेयादीनां कालस्यप्राप्तत्वात् । फलसम्बन्धो ऽपि न क्रियते । दर्शपूर्णमासवाक्येन प्राप्तत्वात् । अपि च फलसम्बन्धाशङ्का ऽपि नास्ति । फलश्रवणात् ।

उच्यते । एकेन वाक्येन विना एकैकस्येतिकर्तव्यताकाण्डमावर्तते । सति त्वस्मिन्वाक्ये ये यागा उत्पन्नास्ते करणविभक्तिसंयुक्ताः काला विधीयन्ते । करणविभक्तिः कर्तव्यतामन्तरेण न सम्भवति । उपादीयमानत्वात्साहित्यविवक्षा । तस्माद्यद्येकं कृत्स्नेतिकर्तव्यताकं क्रियेत येन तत्साहित्यमवगतं तद्बाध्येत । तेनेतिकर्तव्यतां प्रति साहित्यं क्रियते । तस्मादनेन वाक्येनेतिकर्तव्यता तन्त्रेण भवतीत्ययमर्थः क्रियते । त्रयाणां यागानामयं भवता ऽर्थो विवक्षितः । अयं च वाक्यान्तरेण लभ्यते एव । समे दर्शपूर्णमासाभ्यां यजेतेत्यनेन वाक्येनेतरेतरयुक्ताः सेतिकर्तव्यताका देशं प्रति विधीयन्ते । विधीयमानानां च साहित्यमविवक्षितम् । यदीतिकर्तव्यता ऽऽवर्तेत तत्र

साहित्यमवगतं तद्बाध्येत। तस्मादस्मिन्वाक्ये सति पौर्णमास्या यजेतेत्यनुवाद एव।

तत्र केचित्तावद्वर्णयन्ति । प्रधानस्य पौर्णमासकालो ऽवगतो ऽङ्गानामनवगमात्कालस्य पञ्चम्यामपि प्रयोगः प्राप्नोति। तस्मादनेनाङ्गानां कालनियमः क्रियते इति।

तदयुक्तम्। कथं ? करणमनुगृह्णतीतिकर्तव्यता उपकरोतीत्युक्तम् । यस्मिंश्च काले करणं तस्मिन्नेवेतिकर्तव्यतेत्युक्तम् । या च सन्निपत्योपकारिकेतिकर्तव्यता या चाराद्रुपकारिका ते उभे अप्यनेन कथंभावेन संबध्येते। तत्र पौर्णमास्यां प्राधान्यं कुर्वता सन्निपत्योपकारिका इति कर्तव्यता ऽवश्यं करणीया। येन प्रकारेण सन्निपत्योपकारिकां करोषि, तेनैवाराद्रुपकारिकामपि । न चेदृशः कश्चिन्न्यायो, येन प्रधानमेव पौर्णमास्यां पौर्णमास्या संयुक्तं स्यात् । तस्मादत्र वाच्यमिदं नैतदेव समे दर्शपूर्णमास्यां यजेतेत्यनेन यद्यागा इतरेतरयुक्ताः सेतिकर्तव्यताका देशं प्रति विधीयन्ते। तत्र षण्णामपि यागानां तन्त्रेणेतिकर्तव्यता प्राप्नोति साहित्यस्य विवक्षितत्वात्। तस्मात्पौर्णमास्यां संयुक्तास्तेषां पौर्णमास्यां क्रियमाणानामाज्यभागान्तानि करिष्यन्ते। एवममावास्यासंयुक्तान्यनुयाजादीनि करिष्यन्ते।

एवं तन्त्राणां प्रयोगे प्राप्ते पौर्णमास्यां पौर्णमास्या यजेतामावास्यायाममावास्यया यजेतेत्यनेनाङ्गानामावृत्तिः प्रतिपाद्यते।

अपि च समे दर्शपूर्णमासाभ्यां यजेतेत्यनेनेतरेतरयुक्तस्य विवक्षितत्वात्तन्त्रेणेतिकर्तव्यता प्राप्यते। तत्र पौर्णमास्यामारब्धं प्रधानममावास्यायां समाप्यते । पौर्णमास्यमावास्ययोरन्तराले कुर्वन्नङ्गानि समे दर्शपूर्णमासाभ्यां यजेतेत्यस्य न किंचिद्बाध्यते । न च फलवाक्यस्य पौर्णमास्यां पौर्णमास्या य-

जेतेत्यनियमो ऽङ्गानामपनीयते। नियतकालता चोच्यते। तस्मादनेनाङ्गानां कालविधिः क्रियते। कालभेदादेकस्येतिकर्तव्यताया अप्राप्तिः।

अपि च यस्यापराह्णे करणं तत्र प्रातर्विशेषमात्रं विधीयते। सामान्यं प्राप्तमेव। तस्माद्यत्रैको विधीयते स ग्रहीतव्यः।

पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४९ ॥

पर्यग्निकृतानुत्सृजन्तीति पर्यग्निकरणं चाङ्गरीतिर्विधीयते, तथैते प्राजापत्या निराकाङ्क्षीक्रियन्ते गृहमेधीयवत्। ब्रह्मसाम्न्यालभत इति कर्मान्तरं, तत्र दैवतं पूर्वेषु, तदेवानुषज्यते।

संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥५०॥

यथाऽवसरप्राप्ताः संस्कारा अस्मिन्काले न कर्तव्या इति एवमपि वाक्यार्थ उपपद्यमाने ऽङ्गरीतिविधानं गृह्णीमः। वाक्यभेदादवदृष्टकल्पनाभयाच्च। अपि चास्मिन्काले संस्काराः प्रतिषिध्येरन्।

वपानां चाभिघारस्य दर्शनात् ॥ ५१ ॥

यस्यापि ब्रह्मसाम्न्यालभत इति कर्मान्तरस्यापि पुरोडाशस्येव प्रासङ्गिकाः प्रयाजाः। तस्मादेतद्दर्शनमयुक्तं, द्वयोरपि तुल्यत्वात्।

तत्र के चिद्वर्णयन्ति। तेषां द्वौ पक्षौ। एकः पक्षो ब्रह्मसामकाले आलम्भो, द्वितीयः सह क्रतुभिः पशुभिः समाप्तिः।

अस्मिन्द्वितीये पक्षे वपानामभिघारणं विद्यते। यथा च माध्यन्दिने आलम्भाय तु हृदयाभिघारणं तन्नास्ति, वपाया अनुत्पन्नत्वात्। यागिकत्वात्। यो ऽसावभिघारणसंस्कारो नान्तरीयको हविष्ये ऽङ्गभूतः। तस्मादविद्यमानत्वादाशङ्कावचनमुपपद्यते। कर्मान्तरपक्षे तु स धर्मो भूतपूर्वः। तत्र शङ्कैव नास्तीति।

इदमपि नोपपद्यते। कर्मान्तरवादिनो ऽपि हविषां चोदकेन संस्कारः प्राप्नोतीति स इह नास्तीत्याशङ्कावचनमुपपद्यत एवेति।

## पञ्चशारदीयास्तथेति चेत् ॥ ५२ ॥

सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोति। सप्तवत्साः पृष्णीनुक्ष्ण इति पूर्वासु त्रिहायनीषु या देवता सा ऽत्रानुषज्यते। तस्माद्रूपदेवतासंयोगाच्चतुस्त्रिंशत्कर्माण्येतानि। द्वितीयं वाक्यं तान् पर्यग्निकृतान्प्रोक्षितानुत्सृजति। इतरानालभन्ते। प्रेतरानुत्सृजन्ति वा। त्रिप्रभागाः परामृश्यन्ते। इतरशब्देन वत्सतर्य उच्यन्ते। तासामालम्भादि समानादि कृत्स्नं चोदकप्राप्तं क्रियते। असम्बन्ध एव नास्ति। प्रेतरानुत्सृजन्तीति। अनेनानड्वाह उच्यन्ते। तेष्वेव सन्देहः। किं पर्यग्निकरणान्ताङ्गरीत्या ऽनड्वाह एकवाक्यताङ्गत्वाचोदकेनाङ्गानि न गृह्णन्ति, यथा ऽऽरण्याः। उत प्राजापत्यानामिव प्रातःसवनकाले संस्काराणां प्रतिषेध इति। किं तावत्प्राप्तं? संस्काराणां प्रतिषेधो ऽयम्। अस्मिन्काले ऽनडुहामालम्भावयो न कर्तव्याः संस्काराः। यथा प्राजापत्यानाम्। त्रींस्त्रीनुक्ष्ण एकैकस्मिन्नहन्यालभेतेति सुत्यासु प्रतिप्रसव इति। यथा ब्रह्मसाम्न्यालभत इति कर्मशेषं प्रतिषेधितुं त्रींस्त्रीनिति च कर्मान्तरं कल्प्यते न प्रतिप्रसूयते। त्रींस्त्रीनिति च तत्र बहुदृष्टं

कल्पेत । संस्कारप्रतिषेधे तु तेषामेव द्वितीयसंवत्सरमात्रं विधीयते, न याग इति ।

न चोदनैकवाक्यत्वात् ॥ ५३ ॥

सप्तदश मारुतीः पृष्णीरुपाकरोतीति द्रव्यदेवतासंयोगाद्यागचोदनैषा सप्तदश पृष्णीनुक्षण इति । अस्य सापेक्षत्वान्निराकाङ्क्षीकरणेन भवितव्यम् । तत्र मारुतीरालभत इति मनसि विपरिवर्तमानेनैव निराकाङ्क्षीक्रियते । अत्र च द्वयी गतिः । यदि वा अनडुहं प्रति मारुतीरालभत इत्यनुषज्यत । अथ वा मारुतीरालभत इत्येतत्प्रति अनडुहो नीयन्ते । यत्रानडुहः सापेक्षा यस्मिन्नेव क्षणे ऽतिहायान्यः सम्बध्यन्ते, तस्मिन्नेवानड्वाहो ऽपीति । एवं परस्परापेक्षितः सम्बन्धो भविष्यति । एकवाक्यत्वं चेतरयोः । पूर्वस्मिन्वाक्ये निराकाङ्क्षीकृतस्य पुनराकाङ्क्षा कल्पनीया । अतः पुनः सम्बन्धः । तस्मादेतेन वाक्येन चतुस्त्रिंशत्कर्मण्यनेकवाक्यत्वं चेच्छत्येव; कर्मभेदप्रतिषेधं नेच्छति । न चानेन स निराक्रियते । तस्मात्कथमेतत्? प्राजापत्येषु यः संस्कारप्रतिषेधः स ब्रह्मसाम्न्यालभत इत्यस्य सामर्थ्यादनुवादो वा प्रतिषेधो वा इह न शक्यः सुत्याकाले प्रतिप्रसवः कर्तुम् । तत्र यदालभते तान्पश्चोत्तमे ऽहनीति वाक्यभेदः स्यादेव । त्रींस्त्रीनपि योज्यं । तस्मादेतत्सुत्याकालिकं कर्मान्तरम् ।

अपि च यस्य संस्काराः प्रतिषिध्यन्ते तस्य द्वितीये संवत्सरे पर्यग्निकरणं तु प्राप्नोति । तत्तात्रद्विधातव्यमुत्सर्गश्च । तत्र वाक्यभेदः विवक्षाभेदश्च । एकत्र प्रकृतिप्राप्तमनूद्यते ऽन्यत्राप्राप्तं विधीयते । सकृदुच्चरितस्यैतदन्यथा ।

अत्राधिकरणमतिक्रम्य लिख्यते ।

निष्कासस्यावभृथे तदेकदेशत्वात्पशुवत्प्रदान-
विप्रकर्षः स्यात् ॥ ६१ ॥

वारुण्यामिक्षेसेतस्या एकदेशः पूर्वं ह्रियते । एकदेश उत्तरत्र तथैव सम्बध्यते वरुणदेवतया । यथा पशोः । अवभृथशब्दो देवतासामान्येन बाधमात्रदर्शकः कस्मान्न भवतीति चेत् ?

उच्यते । तत्राख्यातेन कर्म प्रतिपाद्यते । अवयवत्वमतद्धर्मातिदेशकं भवति । यथा मासमग्निहोत्रं जुहोतीति । इह तु नामशब्द एव केवलः श्रूयते । स एव कर्म विधास्यति, स एव धर्मातिदेशको भविष्यतीत्यनुपपन्नमेतत् ।

अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥ ६२ ॥

नायं प्रदानविप्रकर्षः । कुतः ? अवभृथेन कर्मणा संयोगात् । तत्त्वनुवाद इत्ययुक्तमसत्यां गतावनुवाद आश्रीयते । अस्ति तु गतिः । लक्षणया धर्मातिदेशको भविष्यति । लक्षणया च यागं प्रतिपादयिष्यति । न च तुषनिष्कासस्य प्रतिपत्तिः । कथं ? यथा तेन कृतं तथा ऽनेनापि कर्मणा । तत्र च द्रव्यं गुणतो यागः प्रधानतः । इह तु विपरीतं कथं तद्भावमाप्नुयात् ?

इत्येकादशाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः ।

अत्राष्टावधिकरणान्यतिक्रम्य लिख्यते ।

अग्नियोगः सोमकाले तदर्थत्वात्संस्कृतकर्मणः परेषु साङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यात् ॥१७॥

कुतः ? अग्निमेव तद्युनक्तीत्यनेन तात्रद्विशेषो न गम्यते । प्रधानार्थो यागो नाङ्गानामिति । अग्नौ च प्रधानमङ्गानि च क्रियन्ते । यथा वेद्यां हवींष्यासादयतीत्यङ्गहविषां प्रधानहविषां च वेद्यामासादनं न प्रधानहविर्भिर्विशेष्यते । तथा चाहवनीये क्रियमाणः संमार्गो न शक्यते वक्तुम् । प्रधानस्य यो ऽग्निस्तस्यायं संमार्गो; नाङ्गानां यो ऽग्निरिति । एवमिहाप्यग्नेरविशेषाद्यागः सर्वार्थः प्रकरणस्याविशेषादित्युक्तम् ।

प्रधानापवर्गे वा तदर्थत्वात् ॥ १८ ॥

प्रधानापवर्गो विमोकः । कुतः ? शतमा घृतेनेति जुहोतीत्यनेन कर्मोत्पद्यते । उत्पद्यमानं बहुसमर्थाभिलाषि भवति । तत्र स्ववाक्ये यज्ञसंयोगो नास्ति । यद्यपि तु यज्ञसंयोगो भवेत्तथा ऽपि यज्ञशब्दो यागमात्रवचनो वषट्कुर्युर्भ्रातृव्यं यज्ञस्याशीर्गच्छेदिति । एतदपि गुणवाक्यस्यार्थवादः । ऋत्विजो वृणीत इत्येतस्योत्पत्तिवाक्यस्य चायं शेषः । यत्रात्वादौ दृष्टार्थं वरणं तत्साङ्गस्य ज्योतिष्टोमस्य, द्वितीयं तदारादुपकारकम् । अवभृथे ऽदृष्टार्थः प्रतिषिध्यते, तत्रापि चोदकाभावादेव । तस्मात्प्रतिषेधो न घटते द्वादशाहे । स चाहरहर्वि-

मुख्यतीयङ्गप्रधानार्थे यागे विमोके च घटत एव । पशुनक्ति तव-हरहरिति अहर्गुणविधानार्थम् । उपरिष्टात्सोमा वा प्राजापत्ये च-रन्तीति पश्वार्भवकाले प्रचाराः क्रियन्ते अप्रवृत्तिविशेषकरं वाक्यं स्यात् । ननु वचनेन प्रातःसवने माध्यन्दिने वा सवने एते संस्कारवाक्ये प्रचार आर्भवकाल एव नान्यस्मिन् । त-स्मादविशेषात्सर्वसोमानामूर्ध्वं न त्वाग्निमारुतादूर्ध्वं प्रहृत्य प-रिधीनिति च क्रमविपर्य्यासः प्राप्नोतीत्युक्तम् ।

उच्यते । आग्निमारुतं सोमाङ्गम् । अनुयाजाः पश्वङ्गम् । अ-नयोरङ्गाङ्गिसम्बन्धस्तावन्नास्ति, येनाग्निमारुतं कृत्वा ऽनुयाजाः क्रियमाणा गुणा भवेयुः । न चैते एकेन प्रयोगवचनेन गृह्यन्ते, येनाग्निमारुतान्कृत्वा ऽनुयाजाः क्रियेरन् । प्रकृतौ परिध्य-ग्निसंमार्जनाग्निमारुतं कृत्वा ऽनुयाजाः प्राप्नुवन्ति । इन्द्रश्च चोदकेन प्राप्तः । इह द्वितीये क्षणे ऽनुयाजा न कर्तव्याः क्ष-णमात्रङ्कृत्वा कर्तव्या इति चोदक एवं वचनम् । न तु चोदक-बाधेन । द्वितीये ऽप्येवमेव । नन्वेवं लक्षणा भवति । न हि क्त्वा-शब्दः पूर्वकालतायां श्रुत्या वर्तते । परिधिप्रहरणं कृत्वा तत उत्तरकालं हारियोजनः कर्तव्य इति सर्वथैव श्रुतिवृत्तानि । अग्निमारुतशब्दो ऽपि स्वार्थमेव प्रतिपादयति । ऊर्ध्वशब्दो ऽपि कालवचन एव । अतो न किं चित्पदं लक्षणावृत्ति । ई-दृशे च लक्षणा भवति । यथा गौर्वाहीक इति गोशब्दो वाहीके तिष्ठन्मूत्रभक्षणादि यत्र तल्लक्षयति । यथा वा जातिर्व्यक्ति-लक्षणायाम् । एवमत्र न काञ्चिल्लक्षणां पश्यामः । एतेन व्याख्या-तेन वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति यो दोष उक्तः सि-द्धान्तवादिनः स नास्ति सर्वेषां श्रुतिवृत्तत्वात् ।

एवमिदं प्रदर्शनार्थमुच्यते । तदेवमत्रापि हि लक्षणा

तेष्वपीति । कथं? पदार्थ उच्चार्यमाणः स्वरूपं वा कर्तव्यं ब्रवीति । अन्यत्र वा कर्तव्यं तत्र वा कर्तव्यमिति । इह तु स्वरूपं न कर्तव्यं, तस्य निर्ज्ञातत्वादन्यत्रापि न तत्रापि न किञ्चित् । किमर्थं तदुच्चारणं परार्थं तस्य यः कालस्तं लक्षयितुम् ।

उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्वनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः ॥५३॥

सवनीयानां या देवतास्ताः सूक्तवाकात्कृष्यन्ते । पशूनामहुतत्वात्सवनीयानां हुतत्वात् । यथा पौर्णमास्यां प्रयुज्यमानः सूक्तवाको ऽमावास्यादेवता नाकर्षति, एवमिहापि वाक्यसंयोगाद्वोत्कर्षः प्रस्तुतः तावत्प्रासाङ्गिकस्तेषाम् । यदर्थश्च प्रस्तरस्तदर्थं प्रहरणम् । प्रहरणाङ्गं च सूक्तवाकः । तस्मात्सूक्तवाको ऽपि परार्थः सूक्तवाकमध्ये सवनीयदेवतानां पाठः । तेन सदैकवाक्यता बाध्यते ।

अपि च अपकृष्टानि साकाङ्क्षत्वादनर्थकानि भवेयुः । न च तत्र पदानामपकर्षो लभ्यते । येन निधानदेवतानां पाठस्तेनैवैकवाक्यता । अथ कथमेकवाक्यता बाध्यते ? अपि चापकृष्टानि साकाङ्क्षत्वादनर्थकानि भवेयुः । न च तत्र पदानामपकर्षो लभ्यते, येन निराकाङ्क्षीभवेयुः । परार्थत्वात्सूक्तवाकस्य । पौर्णमास्याममावास्यायां च सूक्तवाकः । तत्रापकर्षो ऽपक्तः । इह तूत्कर्षे सूक्तवाकस्योत्कृष्टा एव सवनीयानां देवताः प्रकाशयिष्यन्ते ।

इत्येकादशाध्यायस्य तृतीयः पादः ।



# अथ चतुर्थः पादः ।

## अनियमः स्यादिति चेत् ॥ ४ ॥

पवित्रस्य दक्षिणाम्नानात्पवित्रस्य ये कर्तारस्ते पवित्रार्थमुपादी-यन्ते ते द्वितीयस्य सोमस्य नाङ्गम् । कथम् ? अनियमेन कर्तृ-णामुपादाने प्राप्ते वचनान्नियम्यते । तत्र नियमवचनं यस्यैवा-र्थेनोपादात्ते तस्यैवाङ्गम् । द्वितीयस्य पुनरसावुपादाननियमो न भवति । यथा ऽन्ये पदार्था भेदेन क्रियन्ते एवं वरणमपि भेदेन प्राप्नोति । तत्र यदि वा त एव चरितव्या अथ वा ऽन्ये । एवमैष्टिका ऽपि भेदेनैव ।

## नोपदिष्टत्वात् ॥ ५ ॥

स्वाराज्यकामस्य राजसूयसंज्ञको याग उपायत्वेन चो-द्यते । स उपायत्वे वर्तमान आदावेवर्त्विजो वृणीते । राजसू-यसंज्ञकेन यागेन यजेतेति । तच्चागृह्यमाणविशेषत्वात्सर्वेषां कृतं भवति । अपि च समुदायं समुद्दिश्य क्रियमाणेषु यो यत्काले निर्ज्ञातः स तत्काल एव करिष्यते । अनियमेनोपादाने पुन-रपि कदाचित् । तत्र यो ऽसौ काल उपदिष्टः स बाध्यते । ततः कर्मवैगुण्यात्फलाभावो भवेत् । प्रतिकर्म वरणं कर्तव्यमि-त्ययुक्तमिदं व्याख्यानम् । यः कर्माणि जानाति तस्य रा-जसूयेनाधिकारः । स एव जानाति ऐष्टिकं वरणमिष्टिष्वेवोप-करोति; न सौमिके वरणम् । तेनैष्टिकेषु यथा यदा ऽऽधाने कृते

कश्चिदेवं वरणं कुर्यात्, अहं कर्माणि करिष्ये तन्मे भवतु । अत्रार्त्विज्येति यथैतदप्रमाणकं, एवमिदमपि । न कश्चिदनयोर्विशेषः । तच्च पवित्रस्याङ्गं सोम इष्टिर्वा येन प्रासङ्गिकेन वरणेन निवृत्तिः । यथा दीक्षणीयादीनां ज्योतिष्टोमकेन वरणेन ।

यद्युच्येत समुदायमुद्दिश्य क्रियते, तदयुक्तम् । न हि समुदायः फले चोद्यते । येन तदर्थं वरणं स्यात् । कतरो वा शब्दः समुदायवाचकः ?

राजसूयशब्दः इति चेत् ? तन्न । सोमपश्विष्टिदर्विहोमा निरपेक्षा उत्पन्नास्ते निरपेक्षा एव प्रयोजनमपेक्षन्ते । यथा ऽपेक्ष्यमाणानां संनिधानरूपः शब्दः श्रूयमाणरूपवतः फले विदधाति । फले विधीयते तेषामितिकर्तव्यता । अयं च वरणनियम इतिकर्व्यतांशेन गृह्यते । तस्माद्यथा ऽन्या इतिकर्तव्यता भेदेन क्रियन्ते एवं वरणमपि भेदेन कर्तव्यम् । न कश्चिद्विशेषः । तस्मादेकैकस्य भेदेन वरणम् ।

यदि समुदायमुद्दिश्य वरणं तन्त्रेणेष्यते ऽन्याऽपीतिकर्तव्यता कुतो न स्यात् ? तन्त्रेणैव वरणं क्रियते । कस्य वरणे पक्षपातः ? तस्माद्यदेतद्वरणं वैदिकं नैवेदं चिन्त्यते; किन्तु यो ऽयं लौकिको ऽभ्युपायः स चिन्त्यते ।

ननु पूर्वपक्षवादी अनियमेन लौकिकमभ्युपायमिच्छति । सिद्धान्तवादी तु लौकिकमप्युपायमावावेव नियमेनेच्छति ।

## अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात् ॥ ९ ॥

बार्हस्पत्यं मध्ये निधायेति मध्यशब्दो ऽयं जघन्यान्यपि हवींषि तन्त्रेण क्रियन्ते । एवं मध्यशब्दो भवति । आहुतिमाहुतिं हुत्वेति । तन्त्रेणैवोपपद्यते । एतया यजेतेत्येकवचनम-

योगः श्रूयते । यदि भेदेन प्रयोगो भवेत्तथा सति प्रयोगे बहुवचनं श्रूयेत । तस्मात्प्रयोगे एकवचनश्रवणात्तन्त्रम् । बहुवचनात् कामसंयोगे प्रतिदक्षिणां वा कर्तृसंयोगादित्यनेन न्यायेन तन्त्रभेदः प्राप्नोति । मध्ये निधाय चेत्यनेन लिङ्गेन च तन्त्रं प्राप्नोति । तत्र को निर्णयः ? भेदेन वा तन्त्रमुच्यते, एतया ऽन्नाद्यकामो यजेतेति कामसंयोगो न श्रूयते । तत्र यो ऽन्नाद्यं कामयमानः करिष्यते तस्य तन्त्रेण प्रयोगो भविष्यति । भेदेन क्रियमाणायां यत्प्रयोग एकवचनं मन्यमानः तन्त्रमापादयति । यथा पौर्णमास्यां त्रयाणां कालसंयोगात्तन्त्रेणाङ्गानि, एवमिहापि ।

सिद्धान्तवादी त्वङ्गशब्देन सकर्तव्यानीति विज्ञायते, न कालं प्रत्युपादीयेरन् । समानहवींषि भवन्तीत्यनुवादः । ब्रह्मवर्चसकामस्य सर्वाणि हवींषि सह निरुप्याणीति तत्र निर्वापे सहचोदिते वचनात्तन्त्रं भवति । तस्मात्तदपेक्षया ऽनुवादो भवति ।

द्वादशाहे तत्प्रकृतित्वादेकैकमपवृज्येत कर्मपृथक्त्वात् ॥ १६ ॥

प्रकृतादुपांश्वादेर्हारियोजनपर्यन्तस्य यागस्याहःशब्दः परिच्छेदको दृष्टः । तेन तत्परिच्छेदद्वारेण कर्मणि वर्तते ऽहःशब्दः । इहापि द्वादशाहे प्रथममहर्द्वितीयमहरित्येव श्रूयते । सो ऽयमहःशब्दः श्रूयमाणः कर्म लक्षयति । यद्यत्कर्म लक्ष्यते ऽनेन तदुत्पद्यते । एवं दश सौमिकान्यहःसंयुक्तानि कर्माण्युपपद्यन्ते । अपरौ प्रायणीयोदयनीयौ । तावपि लक्षणया कर्म

प्रतिपादयतः । तस्माद्द्वादश कर्माण्युत्पद्यन्ते, तान्युत्पन्नानि साकाङ्क्षाणि द्वादशाहेन प्रजाकामं याजयेदिति फले विधीयन्ते । तत्र द्वादशाहशब्दः सामानाधिकरण्यात् यागेनेत्ययमपि कर्मवचनः । न च लौकिककर्माऽहर्ब्रवीति । सङ्ख्याशब्दस्तु द्वादश यागान्प्रतिपादयति । तत्रैकैको यागः फलसाधनत्वाज्ज्योतिष्टोमाद्विध्यन्तं गृह्णाति । तत्र चोदकेन ज्यौतिष्टोमिके दीक्षोपसत्परिमाणे प्राप्ते वचनेन द्वादश दीक्षा विधीयन्ते उपसदश्च । तस्मादेकैको यागः पञ्चविंशतिरात्रः ।

अन्हां वा श्रुतिभूतत्वात्तत्र सा क्रियेत यथा माध्यन्दिने ॥ १७ ॥

यागस्तावत्फले विधीयते इति तुल्यम् । सङ्ख्याशब्दो हर्विविशेषणार्थमुच्चार्यते । द्वादशाहानि भवन्ति । द्वादशशब्दोऽपि शब्दवृत्तः । अहःशब्दोऽपि लौकिकमहर्ब्रवीति, न कर्म । लक्षणार्थो द्वादशाह इति द्वादशभिरहोभिस्ते कामाः कर्तव्याः । तस्माद्यजेत द्वादशाहेनेति साङ्गानां द्वादशत्वं प्रतिपाद्यते । या ऽसौ चोदकेनान्यादृशी परिसमाप्तिः प्राप्नोति सा प्रत्यक्षया ऽहर्गतया सङ्ख्यया बाध्यते । एवं च प्रधानसन्निधावङ्गानि कृतानि भविष्यन्ति ।

अपि वा फलकर्तृसम्बन्धात्सहप्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥

यागाः फले चोद्यन्ते । तेषां द्वादशसङ्ख्या प्रत्यक्षा श्रूयते । सा चोदकप्राप्ता सङ्ख्या कार्य्या । यथा वा ते तत्र ये सङ्ख्यायुक्तास्ते बाध्यन्ते । ते च दीक्षादयः सङ्ख्यायुक्ता अ-

मीषोमादयः । अपि चैकस्मिन्फले चोदितानां तन्त्रेणेतिकर्तव्यता भविष्यति । दक्षिणैक्यात्कर्तृभेदो नास्ति । तस्मात्समयोगः सिद्धो भवति । सत्रे च यजमाना एव कर्तारस्तत्रापि कर्तृभेदो नास्ति । तत्रापि तन्त्रम् ।

साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात् ॥ २९॥

भावयेत्प्रयाजान् । केन ? यागेन । कतरेण ? द्वादशाहसंज्ञकेन यागेन । सामानाधिकरण्यात् । अहःशब्दः कर्म ब्रवीति । सङ्ख्याशब्दः 'सङ्ख्यया कर्मभेद' इत्यनेन न्यायेन द्वादश यागान्प्रतिपादयति । तत्रैकैको यागश्चोदकेन धर्मान्गृह्णाति । तत्र प्रत्यक्षेण सङ्ख्यावचनेन या दीक्षोपसत्सङ्ख्या प्राप्नोति सा बाध्यते । दक्षिणैक्यात्तन्त्रेण प्रयोगः । तस्माद्दीक्षाणामुपसदां च स्वस्थानविवृद्धया भवन् प्रयोगः द्वादशसङ्ख्याऽऽवयवद्द्वादशसङ्ख्यया भवति । एवं कर्मभेदः । षट्त्रिंशदहो वा एष द्वादशाह इति दर्शनमनुगृहीतं भवति ।

सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत् ॥ २८ ॥

प्रकृतौ चतुरहे सुत्यामागच्छ मघवन्निति कालेयत्ता विवक्षिता । इह तु चोदकेन तथैव प्राप्नोति । सा चोदकमन्तरेण न शक्यते विवक्षितुम् । तस्मादूहः कर्तव्यः । द्वादशाहे त्रयोदशाह इति । न चैकत्वाद्देवतायाः सकृदुपलक्षणं कर्तव्यमित्ययमर्थो लभ्यते । कथं वा प्रथमस्य यागस्य संस्कृता देवता सा द्वितीयस्य संस्कृता न भवति कालभेदात् ?

अपि चेन्द्राभिधानात्सकृत्स्यादुपलक्षणं कालस्य

लक्षणार्थत्वादविभागाच्च ॥ २९ ॥

इन्द्र आगच्छेति विवक्षितं चतुरह इत्यविवक्षितं वाक्यभेदभयात् । एवमिन्द्रागच्छ । तत्र सुत्यामागच्छेति वाक्यभेद एव । वाक्यभेदभयाच्च सुत्या ग्रहणमप्यविवक्षितमेव । तस्मात्प्रकृतावप्यविवक्षितत्वाद्विकृतावप्यविकारेणैव प्रयोग इति । एतदुक्तं भवति, यदीदृशो ऽपि वाक्यभेदो भवता ऽङ्गीक्रियते सर्वत्रैव वाक्यभेदः स्यात् । अपि च प्रकृतौ चतुरहे ऽयह इति किमर्थमुच्चार्यते? अविवक्षितत्वादेतेषां सुत्यामागच्छेति प्रयोगः कर्तव्यः । एवं स्थिते विकारेणाविकारेण वैयधिकरण्यमेव नोत्तिष्ठति । तस्मादन्यथा वर्ण्यते सुत्यामागच्छ मघवन्निति ब्रूयादिति शब्दो ऽयं प्रकारवाची । अस्मिन्पक्षे ऽस्य प्रकारवाचित्वं नोपपद्यते इति प्रकारस्यासम्भवात् । किं तर्हि ? इयत्तावाची वाक्यशेषादवगम्यते । अहःशब्देन सामानाधिकरण्यादहर्गतेयत्ता ऽवगम्यते । तच्चाचाहरागमनक्रियाविशेषणार्थमुच्चार्यते । सुत्याशब्दो ऽप्यागच्छतिक्रियाविशेषणार्थमेव । इन्द्रस्य करिष्यमाणप्रयोजनत्वादागमनक्रिया तदर्था । सुत्याह इति सामान्येन परिमाणवाची । न च सामान्येन व्यवहारः । तस्मादध्याहारं कृत्वा विशेषणीयम् । स चाध्यारोपः समवेतार्थः सो ऽध्याह्रियते कालेयत्तां प्रकाशयितुम् । तस्माद्यत्र चतुर्व्यहस्सु सुत्या तत्र चतुरह इत्यध्याहारो, यत्र त्रिषु तत्र त्र्यह इति । तस्मादध्याहारविशिष्टमहर्गच्छतिक्रियां प्रति विशेषणभूतम् । अयं प्रकृतिवाक्यार्थो वृत्तः । यच्च प्रकृतौ चोद्यते प्रधानं तस्योहो भवति । अहःसुत्याशब्दौ तु परार्थौ । तस्मादनेन प्रकारेणोहाभावो न वाक्यभेदभयेनेति ।

इत्येकादशाध्यायस्य चतुर्थः पादः ।

समाप्तश्चैकादशो ऽध्यायः ।

# अथ द्वादशो ऽध्यायः ।

तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वमतुल्येषु तु भेदः स्याद्विधिप्रक्रमतादर्थ्यात्तादर्थ्ये श्रुतिकालनिर्देशात् ॥ १ ॥

अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपतीत्यत्र संशयः । किं तस्य पृथगङ्गानि कर्तव्यानि,उत यानि पशोरङ्गानि तानि तस्याप्युपकुर्वन्ति प्रसङ्गेन ? तत एतत्प्रसिद्ध्यर्थं प्रसङ्गो ऽस्ति नास्तीति विचार्यते । नास्ति प्रसङ्ग इति । कुतः ? तन्त्रिसमवाये प्रधानानां समवायचोदनातः समानानामेकतन्त्रत्वम् । यान्येकया चोदनया चोद्यन्ते,तेषां समानं तन्त्रम् । यथा दर्शपूर्णमासयोः । यथा च चित्रायामिष्टौ । अतुल्येषु तु भेदः स्यात् । यानि पुनश्चोदनातो भिन्नानि तेषां भेद एव । यथा दर्शपूर्णमासस्य । तस्माद्द्विप्रकारत्वान्न प्रसङ्गेन तन्त्रम् । लोके तु युक्तः प्रसङ्गः । प्रत्यक्षगम्यत्वात् ।

अत्र परिचोद्यते । चित्रेष्टिरनुदाहरणम् । कथं ? दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमिति । तदित्येकवचनान्तं सर्वनाम संसृष्टशब्देन सम्बध्यते एकवचनान्तेनैव । यदि दध्यादिभिः सम्बध्येत बहुवचनान्तं स्यात् । वीप्सा वा तत्तदिति । न च वीप्सा श्रूयते,न च बहुवचनम् । तस्मात्संसृष्टशब्देन सम्बन्धः । संसृष्टस्य च प्रजापतिसम्बन्धः ।

संसृष्टं चैकं वस्तु । तस्मादेक एव यागः । कुतस्तन्त्रम् ?

तत्रोच्यते । दध्यादिभिः सर्वनाम सम्बध्यते । निर्दिष्टस्य प्रतिनिर्देशकं सर्वनाम । निर्दिष्टानि च दध्यादीनि प्रथमया विभक्त्या । अतस्तान्येव शब्दोपात्तानि मनसि विपरिवर्तमानानि सर्वनाम्ना प्रतिनिर्दिश्यन्ते । अथ यदुक्तं दध्यादिसम्बन्धे बहुवचनं प्राप्नोति,वीप्सा वा ।

अत्रोच्यते । सर्वनामप्रातिपदिकस्य निर्दिष्टप्रतिनिर्देशकत्वशक्तिः । वचनस्य त्वेकार्थप्रतिपादकत्वम् । तस्मादनयोर्विरोधः । तत्र प्रथमोपनिपाताल्लिङ्गसङ्ख्ययोश्च तदर्थत्वाद्यथाश्रुतं प्रातिपदिकं गृह्णीमः । उत्तरकालभावाच्च लिङ्गसङ्ख्ययोरविवक्षैव । यो ऽयं गुणे त्वन्याय्यकल्पनैकदेशित्वादिति स एवात्रापि न्यायः । अथ वा एकदेवतत्वाल्लक्षणया लक्षितलक्षणया वा उपपन्नमेकवचनं लिङ्गं च । सर्वत्रैव लक्षणया लिङ्गसङ्ख्ये प्रवर्तेते । प्रातिपदिकं जातिं ब्रूते, लक्षणया तु द्रव्यम् ।

गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥

इत्यस्य नास्ति प्रसङ्गः । यतः कालगुणविकृताः प्रयाजानुयाजाः पशौ ते ऽन्यस्य नोपकुर्वन्ति ।

तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥

अस्ति प्रसङ्गः । तस्य विषयो निरूप्यते । अन्यस्य तन्त्रे यदन्यत्तुल्यधर्मकमापतति कर्म, तस्य पूर्वकर्मणो येतिकर्तव्यता प्रसज्यते, यथा पशौ प्रतते पशुपुरोडाश आपतति । तस्य पाशुकीतिकर्तव्यता प्रसज्जते । कथं ?

तदुच्यते । भावयेत् । किं ? पशूपकारम् । केन ? पशुपुरोडाशयागेन । कथमित्यनेन यागगतो व्यापारः । स चोपमितलक्षितप्रापणेनाग्नीषोमीयस्य यो यागगतो व्यापारस्तं सादृश्येनाकाङ्क्षति । तत्र यदेतदग्नीषामीययागगतव्यापारविशेषनियमनमष्टमलक्षणं सिद्धं तदुत्पत्तिरिवोत्पत्तिः । तस्य च व्यापारस्य यदितरेण सम्बन्धकरणं सा प्राप्तिः । तद्द्वावपि चेमौ चोदकव्यापारौ । तत उत्तरकालमुपसङ्ग्रहः । उप इति समीपे करणं, समितिसाकल्येन ग्रहणम् । एष प्रयोगवचनस्य व्यापारः स इह पाशुकेन प्रयोगवचनेन कृतत्वान्न भूयः पौरोडाशिकसमीपे करोति । तस्मात्पौरोडाशिकः प्रयोगवचनो लुप्यते । एष प्रसङ्गः ।

कथमिदमवगम्यते पाशुकः प्रयोगवचनः समीपे करोतीति ? अग्नीषोमीयं पशुमालभेतेत्यस्मादेवावगम्यते । कथम् ? भावयेत् । किं ? ज्योतिष्टोमोपकारं । केन ? पशुयागेन । कथमितीतिकर्तव्यता सम्बध्यते । तत्र यस्मिन्नेव क्षणे ज्योतिष्टोमोपकारो भवने कर्तृत्वं प्रतिपद्यते तस्मिन्नेव करणेन भाव्यते । तस्मिन्नेव चेतिकर्त्तव्यता करणमनुगृह्णती भाव्यमानेन सम्बध्यते । तस्मात् त्रयाणामेषां तुल्यकालत्वं, भवन्तं ज्योतिष्टोमोपकारं यागेनेत्थं भावयेदिति । यदि च भूते भविष्यति भाव्ये करणेतिकर्तव्यते स्यातां, तस्यास्तेन सम्बन्ध एव न स्यात् । तत्र पशूपकारस्य कालो नावधार्य्यते तथाऽपि सम्बन्धात्करणेतिकर्तव्यता कालेन परिच्छिद्यते । पशोश्च दीर्घकालत्वात्तन्मध्यपाती पुरोडाशः समीपे कृतानुपकारानपूर्वाणि च पाशुकेन प्रयोगवचनेनोपसङ्गृह्णाति । न तु स्वयं समीपे करोति । यानि च तेन समीपे कृतानि तानि पृथगुपसङ्गृह्णाति । न चेदन्येन

शिष्टा इत्यनेन न्यायेन ये विहितास्तान्विवध्नाति ।

अथ यदुक्तं द्रव्यसङ्ख्याकालभेदान्न प्रसज्ज्यत इति । तदुच्यते । सर्वः कथंभाव उपकारमाकाङ्क्षति । तमुपकारं चोदकः सादृश्येनोत्पादयति प्रापयति च । उत्पादितं प्रापितं प्रयोगवचन उपसङ्गृह्णाति । ते च शास्त्राण्यन्तरेण न सन्तीति शास्त्राणामुत्पत्तिं प्राप्तिं च करोति । पूर्ववत्प्रयोगवचनस्योपसङ्ग्रहः । तदिह पाशुकचोदकप्रयोगवचनौ सर्वं कुरुतः । पौरोडाशिकस्तु चोदक उत्पत्तिप्राप्ती करोत्येव । प्रयोगवचनस्तु पाशुकेनोपसङ्गृहीतान्न पृथगुपसङ्गृह्णाति । उपकारान्न चेदुपसङ्गृह्णाति ते पदार्था एव न सन्ति । नतरां पदार्थानां गुणाः । तस्मान्नास्ति वैगुण्यम् । न च सङ्ख्याभेदेन द्रव्यभेदेन वा ऽपूर्वान्तरं भवति । किं तर्हि ? प्राकृती सङ्ख्या प्राकृतं च द्रव्यमपनीयते । उपकारस्तु स एव । प्रयाजोपकारा आदौ मध्ये अन्ते चाऽऽफलनिष्पत्तेर्विद्यन्ते चेददोष एव ।

जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥७॥

अस्यैव पशुपुरोडाशस्याज्यभागनिर्वापप्रोक्षणादि कर्तव्यं न वेति संशयः । अत इदमाह, किं प्रयोगवचनेन चोदको बाध्यते, उत प्रयोगवचनश्चोदकेनेति । चोदकबाधे करणं प्रयोगवचनबाधे ऽकरणम् । तत्राऽऽनुमानिकत्वाच्चोदको बाध्यते; न प्रयोगवचनस्तस्य प्रत्यक्षत्वादिति पूर्वपक्षः ।

सिद्धान्तस्तु प्रयोगवचनस्यैकदेशो बाध्यते । कतरो ऽसौ ? उच्यते । उपशब्दः समीपवचनः, संशब्दः साकल्यवचनः, ग्रहशब्दो गृह्णातिवचनः । एवं त्र्यंशः प्रयोगवचनः । तत्रायं ग्रहणात्मकस्वरूपः । इतरे त्वस्य समीपकरणसाकल्ये । विशेषेण

द्वाभ्यां विशिष्टः सर्वत्रोपलभ्यते । विशेषणं चान्यथानुपपत्त्या गृह्यते । इतरथा ऽहं सामीप्यसाकल्यविशिष्टो न भवामीति सामीप्यं करोति । इह च पाशुकेन प्रयोगवचनेन केषां चिदपूर्वाणां सामीप्यं कृतं येषां, तेषामन्यथानुपपत्तिः क्षीणा । येषामाज्यभागनिर्वापप्रोक्षणादीनां न कृतं सामीप्यं तेषामन्यथानुपपत्त्या सामीप्यं करोत्येव । तस्मात्सामीप्यकरणैकदेशो बाध्यते तस्य प्रसङ्गेन ।

अथ यदुक्तमानुमानिकत्वाच्चोदकबाध इति । तच्च यदि चोदक उत्पत्तिप्राप्ती न करोति तस्य वा साकल्येनोपसङ्ग्रहः । तस्मात्प्रत्यक्षो ऽपि प्रयोगवचनश्चोदकाद् दुर्बलः । उत्तरकालभावित्वात् । अपि च सति चोदके प्रसङ्गः । यदि चोदक आघारादीनि पत्नीसंयाजान्तानि पशुपुरोडाशस्य कल्पयति, तत उत्तरकालं प्रयोगवचनः समीपीकरोति । तच्च समीपीकरणं पाशुकेन कृतमिति प्रसङ्गस्यात्मलाभः । यदि च तस्याङ्गानामुत्पत्तिप्राप्ती न स्तस्तथा सत्यनुत्पन्नानां प्रयोगवचनस्य समीपकरणे शक्तिरेव नास्ति । समीपकरणाभावात् । अन्येन सामीप्यं कृतमिति नैवोपपद्येतानाकाङ्क्षितत्वादिति ।

ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २४ ॥

न देवतापरिग्रहार्थमग्न्यन्वाधानं वस्तुतो ऽवगम्यते,नापि शब्दतः । वस्तुतस्तावत्प्रत्यक्षेणाग्निधारणार्थमवगम्यते—ममाग्ने वर्चो विहवेष्वस्तु, पूर्वमग्निं परिगृह्णाति देवता एव पूर्वेद्युरग्रहीदिति । अयं शब्दो देवतापरिग्रहणार्थो न त्ववबोधयेत् । न चेदृशेन शब्देन देवतापरिग्रहणार्थत्वं प्रतिपादयितुं शक्यते ऽर्थवादत्वादस्य वाक्यस्यान्वाधानमेवानेन स्तूयते । एवं

चाहष्टकल्पना न भविष्यति । तत्रापि स्वसामर्थ्येनाग्निमभिदधाति;नान्यत्किञ्चित् ।

यदप्युक्तं दीक्षणीयया देवतापरिग्रहः कृत इति । एतदप्ययुक्तं । कथं ? दीक्षिष्यमाणा इति शानचा कर्ता ऽभिधीयते । लृटा भविष्यत्कालः दीक्षाप्रकृत्या मुण्डनवपनादिसंस्कारो लक्ष्यते । तेन तद्विषयः सङ्कल्पः । तेन तद्धितः स्यात् । इदमप्यस्य संस्कारो विधीयते आग्नावैष्णवस्तुत्या दीक्षां संपादयितुं । तस्य विधीयमानस्य सर्वाश्चैता देवताः परिगृह्णातीति । अर्थवादो ऽयमग्नीषोमीयो वैष्णवस्य स्तुत्यर्थः । न चेद्दशेन देवतापरिग्रहः शक्यो विधातुं । देवतापरिग्रहार्थतायां च सत्यां पुरुषसंस्कारिका देवतापरिग्रहार्थेति वाक्यभेदः स्यात् । द्विरदृष्टकल्पना च ।

इति द्वादशाध्यायस्य प्रथमः पादः ।



# अथ द्वितीयः पादः ।

विहारो लौकिकानामर्थं साधयेत्प्रभुत्वात् ॥ १ ॥

किमाहवनीयादिभिर्यच्छक्यं तत्कर्तव्यं, उत यदेव निर्दिष्टं तदेव कर्तव्यं ? तत्र लिङ्गेन प्रमाणेन यद्युच्यते तत्तत्कर्तव्यं वैदिकं लौकिकं वा ऽग्निमाध्यं एकं प्राप्तं । आहवनीयादय उत्पन्नाः साकाङ्क्षा वाक्येनैव निराकाङ्क्षीक्रियन्ते । यदाहव-नीये जुहुति, यद्गार्हपत्ये च हवींषि श्रपयति । न च लौकि-केषु शक्या विधातुम् । ते हि सहैवाधारेणोत्पद्यन्ते होमादयः । यथा पदहोमः ।

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २ ॥

अस्मिन्सूत्रे पञ्चदशरात्रस्तावदनुदाहरणम् । कथं वा? तावद्उपसदीवरीपरिहरणोत्तरकालं सुब्रह्मण्या ? सा प्रतिदिवसं क्रियते । यथादेवतं चाग्निष्टुत्याग्नेयी । अन्येष्वैन्द्री । तत्र तावत्संशय एव नास्ति । अविरोधात् । यथा ऽऽतिथ्यायां उपसत्सु वचनं तस्या विरोधः । तत्रापि देवतासंस्कारकत्वान्निगदस्य यथादेवतमेव भवतीति भेदः । नास्ति तन्त्रे किञ्चित्कारणं, यथा निर्वापमन्त्रः संस्कारत्वात्प्रतिनिर्वापं भिद्यते, एवमेतस्या एव सुब्रह्मण्ये आह्वातव्ये किं तद्यत्रोदाहरणं यत्रैव यागाः सह चोद्यन्ते फलं प्रति तत्र च त्रयाणाम् । तस्माद्भिन्ने एवैते अधिकरणे ।

पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ॥ ३० ॥

सवनीयस्य पशोः सवनीयानां वेह तस्य वा ? इतरेषु न्त्रं प्रसज्ज्यत इतरेषामितरेतरस्मिन् । कुतः ? यतो नास्तीदृशी दना सवनीयमुपक्रम्य सवनीया निर्वप्तव्या इति । यथा शुपुरोडाशस्य प्रक्रान्ते पशौ । निशीष्टिन्यायो ऽप्यत्र नास्ति । न हि प्रक्रान्ते दर्शे कतिपयैः पदार्थैः कृते सति नैमित्तिके मित्तिकीष्टिरापतति । सा ऽपि तन्त्रमध्ये इत्येव । इह तु तरनुवाककाले पशुसवनीययोः समानकालप्रक्रमः । तस्माद्विकल्पस्तन्त्रस्य ।

पाशुकं वा तस्य वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ॥ ३१ ॥

दार्शिकः सूक्तवाकः प्रैषे ऽधिक्रियते । यदि पौरोडाशिकं तन्त्रं स्यात्तत इदं नित्यवदाम्नातं पाक्षिकं कृतं स्यात् । स्मादाम्नानसामर्थ्यान्नियमसौ प्रयोक्तव्यः । तस्य च मैत्रावरुणेन कर्त्रा क्रियमाणस्य पशोः सादृगुण्यं भवति । न च वनीयानां मैत्रावरुणो ऽस्ति ।

पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात् ॥ ३२ ॥

तन्त्रमध्ये विधानात् पशुमन्ति त्रीणि सवनानि कर्त्तव्यानीति । तत्रेदं वचनं वपया प्रातः सवने चरति, पुरोडाशैर्माध्यन्दिने सवने, ऽङ्गैस्तृतीयसवन, इति । एवं पशोर्विप्रकर्ष आतृतीयसवनाद्ध्रियते तन्त्रम् । सवनीया निरुप्यन्ते । माध्यन्दिने पुरोडाशास्तस्मिन्नेव प्रक्रम्यन्ते, परिसमाप्यन्ते च । प्रातः-

सवने प्रक्रमस्याविधानात् । तृतीयसवनीयानामप्ययमेव न्याय तस्माद्येषां तयोर्माध्यन्दिनतृतीयसवनयोः प्रारम्भपरिसमाप्ति तेषां तु पशुना सह चिन्ता ऽपि नास्ति प्रसङ्गं प्रति तेषां पशुरेव तन्त्री । ये ऽपि प्रातःसवनीये सवनीयास्ते पि नैव तन्त्रिणः । कथं ? ते ऽपि हि प्रातःसवन एव प्रक्रम्यन्ते, परिसमाप्यन्ते न पशुवद्दीर्घकालवचनाभावात् । दीर्घकालस्तन्त्री भवति । पशुश्च दीर्घकालः । तस्मात्स एव तन्त्री । यदि चैषां दीर्घकालता विधीयेत अनुयाजास्तृतीये सवने कर्तव्या इति विधातव्यं स्यात् । ते चाग्निमारुतादूर्ध्वं कर्तव्या नानियमेनेति वाक्यं भिद्येत । पशोः पुनस्तन्त्रित्वमङ्गैस्तृतीयसवन इत्यङ्गप्रचारोत्कर्षादनुयाजा उत्कृष्यन्ते । तेषामनियतकाले प्राप्ते विशेषमात्रं विधीयते आग्निमारुतादूर्ध्वमिति ।

इति द्वादशाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः ।

भाषास्वरोपदेशाद्वैरवत्प्रवचनप्रतिषेधः स्यात् ॥ २० ॥

सामर्थ्येन मन्त्रो यच्छक्नोत्यभिधातुं तत्र न विधीयते प्राप्तत्वादेव । किन्तु भाषिकस्वरस्त्वप्राप्तः स विधीयते ब्राह्मणेन । अथवा स्वरविशिष्ट एव मन्त्रो विधीयते ।

मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ २१ ॥

ये तावन्मन्त्रा लिङ्गेन विनियुज्यन्ते यादृशा एव निर्ज्ञातास्तादृशा एव प्रयोक्तव्याः । तत्र ब्राह्मणस्य व्यापार एव नास्ति । ये पुनर्लिङ्गेनाप्राप्ता वचनेन विधीयन्ते तेषामप्राप्तत्वादेव मन्त्रविधानेनैव कृतार्थं वाक्यं; न भूयः स्वरमपि विधत्ते । वाक्यभेदभयात् । न वाऽरुणाधिकरणन्यायोऽत्र स्वरान्तरस्य स्वाध्याये द्वितीयस्यादृष्टार्थताप्रसङ्गात् ।

इति द्वादशाध्यायस्य तृतीयः पादः ।

# अथ चतुर्थः पादः ।

जपाश्चाकर्मयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥

वैष्णवीमनूच्य वाग्यन्तव्येवमादीन्युदाहरणानि । एतेषां मन्त्राणां विकल्पः समुच्चयो वेति चिन्त्यते । पूर्वेण न्यायेन विकल्पे प्राप्त उच्यते समुच्चय इति । कुतः ? अन्यकार्यत्वात् । वैष्णव्यामृचि ये वर्णास्तेषामुच्चारणं कर्तव्यम् । इह हि जपशब्देनोच्यते । यः पुनस्तत्र पदैरुच्चार्यमाणैः स्वाभाविको ऽर्थप्रत्ययः, संयुक्तत्वात् वरणोच्चारणस्यैवाङ्गं, यत्र पुनराज्यैः स्तुवत इति चोदना, तत्र कानि चित्पदानि गुणं प्रत्याययन्ति कानि चिद् गुणिनम् । तत्र गुणिगुणयोरुच्चारणेन स्तुतिर्भवति । स्तुतिमात्रस्य चोदितत्वात् । विपरिवृत्त्या ऽनर्थव्याप्तिर्वक्ष्यते । करणेषु विपरिवृत्त्या स्तुतिः गुणिनं च व्यापयति । गुणी व्याप्तो यत्र प्रार्थ्यते ते अशेषा उच्यन्ते । द्रव्यविकारं पशुगणे जाघनीनां विकल्पो ऽथ समुच्चय इति । समुच्चय इति ब्रूमः । कथं ? अग्नीषोमीये पशावाज्यं च जाघनी च विकल्पेन प्राप्येते । पुनरुच्यते जाघन्या पत्नीः संयाजयतीति । तत्पुनर्वचनं जाघनीं नियमयति । स चायं नियमो दृष्टार्थः । कथं ? विशसनेन हृदयादीनि उत्पादितानि । तानि वाक्यान्तरैर्विनियुक्तानि । जाघनी त्वविनियुक्ता तेन प्रतिपत्त्यर्हा । तया यागे क्रियमाणे या ऽसौ प्र-

तिपत्तिरपेक्षिता जाघन्याः सा भवत्येव । साम्नाय्ये तु यागादपूर्वम् । यो ऽप्ययमाज्यजाघन्योर्विधाननियमः सो ऽप्यदृष्टार्थ एव पशौ । यागादपूर्वं नियमो द्रव्यसंस्कारकः । पशुगणेष्वप्येवमेव प्राप्यते चोदकेन । तस्मात्सर्वाः संस्कर्तव्याः । यदेतत्तस्यैकदेशो ऽन्यदेवत्यः स्यादिति पूर्वपक्षवादी सिद्धान्ते दोषमुपन्यस्यति,तदयुक्तम् । हृदयादीनामग्नीषोमदेवतत्वात् । तदुक्तं दशमे । तस्मात्पूर्वोक्तः पूर्वपक्षो नेतरः ।

एवं प्राप्ते ब्रूमः । नास्ति समुच्चयो जाघनीनाम् । कुतः? यागो ऽपूर्वार्थो, दृष्टार्थं द्रव्यं, नियमाश्च यागः संस्कारक इति विवक्षाद्वयं न लभ्यते एकेन वाक्येन । अपि च यागादपूर्वं प्रधानभूतं द्रव्याद्यागो, नियमाद्द्रव्यं,तेन भवता प्रधानमङ्गार्थं कृतं स्यात् । यदि च संस्कार्या जाघनी ततो प्राकृतकार्यत्वात् कर्मान्तरं पशौ प्राप्नोति । चोदकेन चान्येन पत्नीसंयाजाः प्राप्नुवन्ति । एवमेते दोषाः पूर्वपक्षे । तस्माद्यथानिर्ज्ञाताः पत्नीसंयाजाः प्रकृतौ तथाम्नातानां पशौ जाघनी नियम्यते ।

उखायां काम्यसमुच्चयो वियोगे कामदर्शनात् ॥१७॥

वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याऽऽहृत्यावदध्यादिसवधानात्क्रमः श्रूयते नाग्न्यन्तरात् । एवं चेदवधानं, कृतार्थः शब्दो नाग्न्यन्तरं निवर्तयितुं शक्नोति । तस्मादवधानमात्रात्फलम् ।

विकारो वा तदुक्तहेतुः ॥ २० ॥

स्वाश्रये स्वव्यावृत्तविषयस्य सामान्यस्य ततो ऽन्यत्रापि वृत्तिसम्भवादिति स्वाश्रयेषु ब्राह्मणपिण्डेष्वव्यावृत्तविषयस्य सामान्यस्यापरिच्छिन्नविषयस्य विशेषापेक्षया ततो

ऽन्यत्रापि वृत्तिसम्भवात् । तस्माद्विशेषात्कौण्डिन्यवदत्रापि ब्राह्मणपिण्डेषु वृत्तिः सम्भवत्येव । तस्मात्सामान्यशास्त्रं कृतार्थमन्यस्मिन् विषये । विशेषस्य चान्यतः परिच्छिन्नस्य तत्रवसायिनः । तदसम्भवे विषयाभावप्रसङ्गात् । उपदेशवैयर्थ्यं माभूदिति । विशेषस्य पुनः कौण्डिन्यादेरन्येभ्यो ब्राह्मणपिण्डेभ्यो ऽवच्छिन्नस्य तदवसायिनस्तदसम्भवे तस्मिन्नसम्भवे विषयाभावप्रसङ्गादुपदेशवैयर्थ्यं स्यात् । तस्मात्तदपि विशेषशास्त्रमनुग्रहीतव्यम् । एवं बाधो वर्णितः । सो ऽयुक्तः । यस्कारणं शास्त्रानुग्रहः कार्य इति नास्ति चोदना । यदि शास्त्रानुग्रहमात्रं स्यात् दधिदाने कृते ऽनुगृहीतं शास्त्रमित्युभयत्र दधिदानम् । एतत्तु नेष्यते । तस्माद्य एव बाधो ऽनेन वर्णितो, नित्यनैमित्तिकयोः स एव ।

अथ यदुक्तमभ्याधानात्फलमिति,अत्रोच्यते । तानि द्वैधमित्यभ्याधानेन द्रव्यं चिकीर्ष्यते । दृष्ट एव संस्कारो ऽग्नेः । तस्मान्नादृष्टार्थमिति सिद्धम् ।

इति श्रीभट्टकुमारिलकृतौ टुप्टीकायां मीमांसावार्त्तिके द्वादशस्याध्यायस्य चतुर्थः पादः ।
समाप्तश्च द्वादशो ऽध्यायः ।

समाप्ता च टुप्टीका ।

